॥ श्रीः ॥

महाकविकालिदासविरचितम्

# विक्रमोर्वशीयम् ।




वेदान्तशास्त्री एम्. ए., एल्एल्. बी.,

काव्यपुराणतीर्थ साहित्यविशारद

पण्डित सुरेन्द्रनाथशास्त्रिविरचित-


कल्पलताख्यव्याख्यया समलङ्कृतम् ।


प्रथमं संस्करणम् ।

तच्च

मुम्बय्यां

सत्यभामाबाई पाण्डुरङ्ग इत्येताभिः,

निर्णयसागरमुद्रणालयकृते तत्रैव मुद्रापयित्वा प्राकाश्यं नीतम् ।

शाकः १८६४, खिस्ताब्दः १९४२.

॥ श्रीः ॥

युक्तोऽयमात्मसदृशान् प्रति मे प्रयत्नो
नास्त्येव तज्जगति सर्वमनोहरं यत्।
केचिज्ज्वलन्ति विकसन्त्यपरे निमील-
न्त्यन्ये यदभ्युदयभाजि जगत्प्रदीपे ॥

( महिमा )

॥ श्रीः ॥

# निवेद्यम् ।

विदितचरमेवैतद्विश्वेषामेव विदुषां यद्भारतीयसाहित्यविश्वस्मिन् काव्येषु लोकोत्तरानन्दसुधास्यन्दिषु दृश्यकाव्यानां सविशेषो महिमा किलाङ्गीक्रियते "काव्येषु नाटकं रम्य"मिति भारतभूषणानां भणितिरणितैः। तत्रापि रूपकनिर्मातॄणामग्रणीः कविवरेण्यः कालिदास एवेति सार्वभौमं बिरुदमलं भजत्ययं महाकविरिति सहृदयानामनुभवस्त्वबाधित एव। स्वीयकाव्यकलालालित्येन भगवत्याः प्रकृत्या मनोमोददस्य नेपथ्यस्य निर्माणे, विचित्रे च चित्रचित्रणे मानवीयनिसर्गस्य, तात्कालिकसमुदाचारपरम्परायाश्चोन्मेषणेऽलोकसामान्यया खल्वभावि कविप्रतिभयेत्यत्रापि न सन्देहलवावकाशः।

अमुष्य महाकवेः सुप्रसिद्धं हि रूपकत्रयं विष्टपत्रये। तत्र मालविकाग्निमित्रं नाम तत्रभवतः प्रथमं नाटकम्, तत्परं च विक्रमोर्वशीयं त्रोटकम्, तदनुजं चाभिज्ञानशाकुन्तलसमाख्यं सुविख्यातप्रख्यमसुलभौपम्यं तदीयन्नाटकमिति विपश्चितामपश्चिम एव निश्चयः। सार्वजनीनं चेदमिदानीन्तनं मतं यन्महाकवेः प्रातिस्विकरूपकनिर्माणशक्तेः प्रादुर्भावपरिचायकमादिमं नाटकम्, ततः सविशेषचमत्कारास्वादोद्बोधकं तदीयं त्रोटकम्, चरमं च नाटकं तदीयप्रतिभायाः सीमानमधिरूढमेवालौकिकानन्ददत्वेनेति।

यद्यपि पाश्चात्यविपश्चितां मतौघमनुसृतैः सुधीभिः प्रसन्नेयं विचारसरणिर्मन्येत तथापि विषयस्य क्षोदक्षमया धिया सहृदयैः सङ्ख्यावद्भिः तत्त्वमिदमनुभूतिवीथीमवतार्यते चेन्ननमाविर्भवेद्यत्तदीयं त्रोटकं शाकुन्तलापेक्षया न मनागपि विलक्षणानन्दास्वादजनकत्वे पश्चिमम्। एवं सुविचार्यैव बन्धस्वारस्यचर्वणाकर्षकतयाऽनुभूतस्यास्य विषयस्य प्रकाशनायैव नैकेषां भारतीयपाश्चात्यविदुषां वर्तमानेऽपि व्याख्यानव्रजे मान्यस्य मोहमयीस्थझेवियर्सकालेजान्तर्गतस्य प्राच्यविद्याविभागाध्यक्षस्य रेव्हरण्डझिमरमनमहानुभावस्यादेशपारवश्याच्चिकीर्षितं हि मया कालिदासीयस्यास्य प्रबन्धस्य निजनिर्मितया कल्पलतया सनाथनम्।

अस्मिंश्च व्याख्याने स्थाने स्थाने कवयितुः काव्यकलायाः पाटवस्य चमत्कारकारित्वस्य च प्रकटनेन व्युत्पित्सूनां हिताय रसरीतिगुणालङ्कारादीनां स्फुटतरेण विवेचनेन प्रबन्धस्यास्य चर्वणासौकर्यसम्पादनमेव मे प्रवृत्तिनिमित्तम्। मन्ये च यन्मदीयव्याख्यानेनाभिख्यां परिपुष्यन्तीयं कल्पवल्ली समेषामेवाध्ययनादिना सेवाजुषां यथेष्टं फलं सम्पादयित्रीति।

परञ्च व्याख्यानस्यास्य संशोधने कृतोपकाराणामस्मद्गुरुचरणानां पण्डितप्रवराणामस्मत्तातपादसब्रह्मचारिणां श्रीकृष्णशङ्करतनुजनुषां "रायरत्न" विनायकशास्त्रिणां विषयेऽस्मिन्नात्मनोऽधमर्णत्वमनुभवन्नस्मत्सुहृद्वरस्य साहित्यविदुषः श्रीयुक्तस्य टी. भीमाचार्यमहोदयस्य विषयपर्यालोचनसाहचर्य्यसाहाय्यमुररीकुर्वन्, इराजिप्रस्तावनायामस्मदनुजस्य बी.ए. (ऑनर्स) साहित्यवेदान्तसांख्यस्मृतितीर्थस्य श्रीनिवासवत्सस्य सहकारितायै तस्मै धन्यवादान्धारयन् ग्रन्थस्यास्य प्रकाशने प्रकटितपरमोल्लासाय निर्णयसागरमुद्रणालयाधीशाय सप्रणयं यशःसुमनःस्रजमर्पयन् सर्वेषामेतेषामुपकारंपरम्परां हृदयेनाभ्युपेत्यानुगृहीतो भवामि। इदं चाभ्यर्थये—

"सन्तः सन्तु मम प्रसन्नमनसो वाचां विचारोद्यताः
सूतेऽम्भः कमलानि तत्परिमलं वाता वितन्वन्ति यत्।
किं वाऽभ्यर्थनयानया यदि गुणोऽस्त्यासान्ततस्ते स्वयं
कर्तारः प्रथनं न चेदथ यशःप्रत्यर्थिना तेन किम्॥"

विदुषां वशंवदः

**शास्त्री सुरेन्द्रनाथः।**

॥ श्रीः ॥

## समर्पणम् ।

---

यत्नादुद्भाव्य काव्याम्बुधिमथनविधौ भव्यलक्ष्मीमिवान्यां
वात्सल्यात्स्वप्रणीतां प्रचुरफलवतीं हारिणीं कल्पवल्लीम् ।
वैकुण्ठेऽकुण्ठधाम्नोरथ विबुधवनीप्रोल्लसत्स्नेहभाजोः
श्रीकृष्णाचार्यतातांघ्रियुगकमलयोः प्रश्रयादर्पयामि ॥

विनीतो निवेदयिता

तातचरणचञ्चरीकः कल्पलताकारः ।



# विषयक्रमः ।

॥ श्रीः ॥

# ॥ सङ्क्षिप्तविवृतिः ॥

## ॥ प्रथमोऽङ्कः ॥

अथ काव्यकाननसञ्चरणपञ्चाननः समस्तकविवृन्दशेखरत्वेनोपबृंहितकीर्तिः तत्रभवान् कालिदासः त्रोटकप्रणयनकौतुकी काव्यस्यास्य प्रथमं स्वामीष्टदेवताभावनामयीं सकलजनाशीर्वादपटीयसीं नान्दीं प्रणिनाय । अनन्तरं पारिपार्श्विकसूत्रधारौ विशुद्धमनस्कान् कुतूहलपुरस्कृतान् सामाजिकान् सरसभाषणमुखान् भूयोऽपि रसेन भावयितुं बद्धपरिकरौ सन्ततरससञ्चारचारु नवमिदं त्रोटकं विक्रमोर्वशीयम् अत्रभवतः प्रणेतुः कवेः प्रज्ञानिकषपाषाणमिति श्रावयित्वा, श्रुत्वा च परित्राणविषयकं देवाङ्गनानामाक्रन्दनं, प्रदर्श्य च नारायणस्योरुसम्भवायाः उर्वश्याः केशिना हरणम् असूचयतां सत्यसन्धस्य सूर्योपस्थाननिवृत्तस्य प्रतिष्ठानाधीशस्य पुरूरवसो राज्ञः प्रवेशम् । राजा चाप्सरसः समाश्वास्य तासां दुःखहेतुं जिज्ञासमानः प्राह कस्मात्ताः परित्रातव्या इति । अप्सरसां प्रमुखया रम्भया विज्ञापितदानवावलेपः मनःसागरेन्दुलेखायाः कुबेरभवनान्निवर्तमानायाः चित्रलेखासनाथाया उर्वश्याः निवेदितबन्दिग्राहो राजा ऐशानीं दिशं गतं परिज्ञाय जाल्मं, समाश्वास्य चेतराः अप्सरसः विषादमोचनाय सम्प्रार्थ्य च तासां मुखेभ्यः "सदृशमिदं सोमवंशोद्भवस्येति" प्रशंसां समुपगम्य, हेमकूटे प्रतिपालनसङ्केतं च निश्चित्य सूतेन ऐशानीं दिशं प्रेरितं रथमलङ्कुर्वाणः रथवेगं निरूप्य स्वविजयमाशंसमानः त्वरितगतिर्मघवतोऽपकारिणं दानवं अन्विष्य दण्डयितुं प्रतस्थे । ततः प्रयाते तु सारथिसनाथे राजनि, सहजन्या दर्शनपथातीतं परिज्ञाय परोपकारिणं महीपतिं, मेनकां यथानिर्दिष्टसङ्केतस्थले प्रचलितुं प्रार्थयामास । ततः सर्वाः नाट्येनाधिरुह्य हेमकूटशिखरं, अविज्ञातराजप्रभावा रम्भा मेनकां "अपि नाम राजा अस्माकं हृदयशल्यमिव समुत्पन्नम् उर्वशीहरणक्लेशमुद्धरेत्" इति पृच्छन्ती निःसंशयमिदं स्यात् इति लब्धप्रत्युत्तरा अपि, दानवानां दुर्जयत्वं शङ्कमाना सङ्गरे सत्यसङ्गरस्यास्य महेन्द्रसहायकत्वेन प्रतिबोध्यमाना एव प्रदर्शितोल्लसितकेतनतद्रथा एतावतैव कालेन विजयित्वं समीक्ष्य परम् विस्मयं वहन्ती, सूचिते तु सुनिमित्ते सह सखीभिः समुत्सुकलोचनाभ्यां विलोकयन्ती राजदर्शनावसरं प्रतिपालयन्ती बभूव ।

अनन्तरं विचित्रविक्रमो राजा विक्रमः भयनिमीलितनयनया चित्रलेखया दत्तावलम्बनयोर्वश्या सार्धं प्रविशति ।

अत्रान्तराले स भूपालः वज्रिणो वीर्यं प्रशंसन् सुरारिजन्यं भयमपगतमिति समाश्वासयन् तत्रभवतीमुर्वशीं पराजितपङ्कजे सुकुमारे मारदीपने लोचने उन्मीलयितुमभ्यर्थयत् । उच्छ्वासमात्रसम्भावितजीवितामप्युर्वशीमद्यापि संज्ञामलभमानां

परिज्ञाय विह्वलां चित्रलेखां पीवरपयोधरस्थमन्दारकुसुमदाम्ना संसूच्यमानं हृदयकम्पं दर्शयन् राजा "बलवच्च ते सखी परित्रस्ता–" इति सकम्पमुर्वशीतनुं प्रेक्षमाणः आत्मानमनुग्राहयामास। एतावतैव कालेन स्निग्धं निध्यायन् राजा आपन्नां तां प्रकृतिमापन्नां परिज्ञाय सहर्षं चित्रलेखां दिष्ट्या वर्धसे इत्यभ्यनन्दयत्। संज्ञां प्राप्नुवानां प्रियसखीं विश्रम्भयितुं, प्रकटयितुं च कृतज्ञतामुपकारिणे पार्थिवाय चित्रलेखा "आपन्नानुकम्पिना महाराजेन प्रतिहतः खलु दानवा–" इति समाश्वासयितुं प्रचक्रमे। समुन्मील्य नयने च "किं महेन्द्रेणाभ्युपपन्नास्मि–" इति जातशङ्का महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसेति विज्ञाप्यमाना राजानं स्निग्धमधुरैः विलोकनैः प्रत्युपकुर्वन्तीव दानवेन्द्ररक्षणेन महाराजेन बहूपकृतमिति स्वीयां कृतज्ञतामात्मनि प्रकाशयमाना सविस्मयं स्थिता। राजा च स्वात्मनि इमां रमणीयललनाललामभूतां रमणीं विलोक्य महर्षिं नारायणं विलोभयन्तीनां देवाङ्गनानां सलज्जत्वं युक्तमाशंसमानः, प्रशंसन्नतनुकोमलतनुं तामर्हणीयस्वभावाम् अत्यन्तमन्तःपुरविहारक्षमामक्षमामसुरसम्भ्रमस्य विचार्य, तदुत्पादके जातशङ्कः तस्याः प्रजापतित्वेन चन्द्रमसं कान्तिकोषं अथवा शृङ्गारसान्द्रं मदनं, तन्मित्रं माधवं वा परिकल्प्य, सन्देहदोलायमानचेताः विस्मृतात्मा तत्रैव नितरामरज्यत। क्व मे सखीजनः इति चित्रलेखां पृच्छन्ती "नाहं जाने, प्रियसखि! अभयप्रदायी महाराजो जानातीति" लब्धोत्तरा, राज्ञा च "त्वद्दर्शनसफलयोर्यस्य नयनयोः पन्थानं सकृदपि त्वं यदृच्छयावतीर्णा सोऽपि त्वद्विरहेण समुत्सुको भवेत् तदा नाम कीदृशीमवस्थां प्रतिपद्येत ते सखीजन" इति सहचरीणां सविषादत्वं विज्ञापिता उर्वशी हृद्येव हृष्टं राज्ञो मधुरालापपाटवं भृशं प्रशंसन्ती "अत एवार्द्रसौहृदं सखीजनं प्रेक्षितुं त्वरते मे हृदयमिति" प्रत्युत्तरप्रदानसन्मानेन राजानं कृतार्थतामनयत्। राजा च हेमकूटस्थिताः सख्यः त्वन्मुखं उपरागान्ते चन्द्रमिव द्रष्टुमुत्सुकाः सन्तीति हस्तेन दर्शयति। सा च किं प्रेक्ष्यते इति अजानतीं चित्रलेखां प्रणयिजन इति उत्तरं ददाति। तत्र च सचित्रलेखां प्रियसखीमुर्वशीं गृहीत्वा समुपस्थितं राजानं मेनकां दर्शयन्ती रम्भा, प्रियसख्याः प्रत्यानयनम् राज्ञश्च अक्षतशरीरत्वम् इति द्वयमपि सुप्रतिपन्नमिति मेनकया दत्तप्रत्युत्तरा समुत्पन्नकुतूहला अतिष्ठत्। अन्यत्र च राजा शैलशिखरं दृष्ट्वा सूतं रथमवतारयितुमाह। उर्वशी च रथावतरणजन्यक्षोभेन भीता राजानमवलम्बते; राजा च आयतेक्षणायास्तस्या अङ्गेनाङ्गसंस्पर्शजन्यसुखं प्राप्य आत्मानं धन्यं मन्यमानः स्वविषयावतारं सफलं मनुते। पश्चात् अन्या अप्सरसः दृष्ट्वा राजा सारथिं रथमुपश्लेषयितुमाह यतः समुत्सुकः सखीजनः प्रियसखीमुर्वशीं सम्भावयतु। अप्सरसः विजयिनं राजानं मधुरालापेन जयशंसनेनाभिनन्दयन्ति। ततः सर्वाः सख्यः प्रियसखीमुर्वशीं दृढमालिङ्गन्ति।

अत्रान्तरे सूतः गगनमार्गे चित्ररथं पश्यति। तञ्चावलोक्य अप्सरसः विस्मिता भवन्ति। प्रविश्य चित्ररथः महेन्द्रोपकारपर्याप्तेन विक्रममहिम्ना वर्धते भवानिति नायकं अभिनन्दयति। राजा च तं स्वागतं ब्रूते, चित्ररथश्च केशिना हृतामुर्वशीं नारदमुखेनावगत्य महेन्द्रेण गन्धर्वसेना प्रहिता, किन्तु मध्य एवाहं भवतो जयोदाहरणं

चारणेभ्यो निशम्य इहस्थं त्वामुपागतः इति प्रवृत्तिं विधाय महेन्द्रोपकारसम्प्रीतः राजानं देवेन्द्रं द्रष्टुमभ्यर्थयते। राजा च स्वविनयं प्रकाशयन् वज्रिणः वीर्येणैवेदं सुसम्पन्नम् इति समाख्यापयन् शतमखदर्शनस्यायं नावसरः, त्वमेवोर्वशीं प्रभोरन्तिकं प्रापयेति प्रार्थयति। राज्ञो विचारं सम्प्रति साम्प्रतं मत्वा चित्ररथः अप्सरोभिः साकमेकाक्येव गन्तुं प्रतिजानीते। उर्वशी चोपकारिणे नृपाय किमपि कृतज्ञतासूचकं वक्तुकामा अपि लज्जागौरवात् अशक्नुवाना चित्रलेखामुखेन "महाराजाभ्यनुज्ञया महाराजस्य कीर्त्तिं प्रियसखीमिव दिवं निनीषुरस्मीति" निवेदयति। राजा च पुनर्दर्शनाय प्रार्थयते। सर्वाः सगन्धर्वाः आकाशमुत्पतन्ति। उर्वशी च राज्यासक्त-चेतसी उत्पतनभङ्गमिषेण लताविटपे वैजयन्त्याः लग्नत्वं प्रकाश्य तत्र रुद्धा चित्रलेखां मोचयेत्याह। सा च परिहासमकुर्वत दृढलग्ना सा मोचयितुं अशक्येति। उर्वशी च परिहासं विहाय मोचयितुं कथयति, चित्रलेखा च तस्या दुर्मोच्यत्वं प्रकाशयन्ती मोचनव्यापारं नाटयति। उर्वशी नृपाहितमनस्का अस्य परिहासस्य भाविफलं विचिन्त्य "स्मरस्वैतत्ते वचनम्—" इति स्वपक्षं द्रढयति। राजा च स्वमनसि लतायाः उर्वशीगमनप्रतिरोधात् आत्मन्युपकारित्वं प्रख्यापयन् धन्यवादततिं समर्पयति यत-स्तस्या एव कारणात् अपाङ्गनेत्रा पुनरपि सा परिवृत्तार्धमुखी नयनेऽनर्पयत्। चित्र-लेखया एकावल्याः मोचनानन्तरं उर्वशी विरहजन्यविकारदुःखेन दीर्घं निःश्वसन्ती सस्पृहं राजानं प्रेमपरिप्लुतनेत्राभ्याम् वीक्षन्ती सखीजनं गगनमार्गगामिनं परिज्ञाय अपि नाम पुनरिममुपकारिणं प्रेक्षिष्ये इति विचारयन्ती यथाकथञ्चिद् अपक्रान्ता। सूतश्च आयुष्मते राज्ञे सुरेन्द्रस्य कृतापराधान् दैत्यान् नाशयित्वा ते वायव्यमस्त्रं तूणीरं प्रविष्टमिति न्यवेदयत्। राज्ञा च रथमुपश्लेषयितुं आज्ञप्तः राजानं रथमा-रोहयति। राजा चोर्वशीमार्गोन्मुखः "मदनो दुर्लभाभिलाषीति—" उपालभ्य यथा राजहंसी खण्डिताग्रभागान्मृणालाद्बिसं कर्षति तथैवेयं सुराङ्गना मे देहान्मनः प्रसभमाकर्षतीति मनस्याशंसन् तदीयचिन्ताव्यग्रचित्तो निष्क्रामति।

॥ इति प्रथमोऽङ्कः ॥

---

## ॥ द्वितीयोऽङ्कः ॥

प्रथमाङ्कवस्तुभावनानन्तरम् द्वितीयाङ्कवस्तुप्रारम्भाय उभयत्र कथांशं नियो-जयितुं, तत्रभवान् कवीन्द्रः प्रवेशकं ददत्, विदूषकस्य मुखेन राज्ञो रहस्यं समु-द्घाटयन्, राज्ञः शून्यहृदयत्वम्, हृदयनिहिताभीप्सितभारसमाक्रान्तत्वम्, अन्य-नारीसंक्रान्तचित्तत्वमभिलक्ष्य देव्या महिष्या काशिराजतनयया प्रेरितायाः चेट्याः निपुणिकायाः राजरहस्यं अवगन्तुं विदूषकमनुसन्धातुं प्रयत्नं, तत्र च विजयं समाख्यापयन्, विदूषकस्य उर्वश्यामप्सरसि निहितमनस्कत्वरूपे राजरहस्ये समु-द्घाटिते काशिराजदुहितरं प्रति "परिश्रान्तोऽस्म्यैतस्या मृगतृष्णिकाया वयस्यं निवर्तयितुं, यदि भवत्या मुखकमलं प्रेक्षिष्यते तदा निवर्तिष्यत इति" चाटुपूर्वकं कथनमभिसन्धाय, मध्याह्नसमयनिवेदकस्य वैतालिकस्य प्रवेशेन राज्ञः सवितृसदृश-

तेजोवत्त्वं व्यञ्जयित्वा, माध्याह्नविरामवेलां सूचयित्वा, विदूषकं च धर्मासनादुत्थितस्य महाराजस्य पार्श्वपरिवर्तिनं विधाय, सविदूषकस्योत्कण्ठितस्य राज्ञः प्रवेशमवगमय्य, नाटकीयवस्तुनि मुखसन्ध्यनन्तरं गर्भसन्धिं समुल्लासयितुं यतमानः सामाजिकानां चेतांसि समाराद्धुं प्रचक्रमे ।

अत्र च तत्रभवान् नृपतिः नर्मसचिवस्य वयस्यविदूषकस्याग्रे अनङ्गभङ्गोऽपि प्रदर्शिताङ्गभङ्गः आदर्शनात् सुरसुन्दरीप्रवेशं हृदये गाढतरं विज्ञाप्य, विदूषकस्य मुखात् काशिराजपुत्र्याः खिन्नत्वं निशम्य, अभ्यर्थ्य च रहस्यनिक्षेपरक्षणाय, वयस्यस्य निपुणिकया वञ्चितोऽस्मीति मनसि विचारयतः मौनमभिवीक्ष्य कथं तूष्णीमास्ते भवानिति पृच्छति । स्वसंयतजिह्वत्वं प्रकाशयति विदूषके, मनोविनोदमलभमानः बुभुक्षितस्य विदूषकस्य महानसगमनप्रस्तावमस्वीकृत्य, उपस्थिते तु विदूषककृते उर्वशीदर्शनविषयके प्रश्ने तत्रभवत्याः प्रत्यवयवमशक्यवर्णनायोग्यत्वम् निवेदयति । तथापि कुतूहलिने विदूषकाय तत्रभवतीं स्वमनोमन्दिरस्वामिनीं उर्वशीं आभरणस्याभरणम् उपमानस्योपमानं इति समासेन वर्णयन्नभिनन्द्य च "अत एव दिव्यरसाभिलाषिणा त्वया चातकव्रतं गृहीतमिति" सोपहासं वचनम्, मत्वा च विविक्तं विहायोत्सुकस्य नान्यच्छरणं, समाज्ञापयति विदूषकम् मञ्जुवञ्जुलतरुपुञ्जशोभासन्दानितस्य मन्दसुगन्धसमीरणशिशिरस्य मनोमोहकस्य प्रमदवनस्य मार्गमादेशयितुम् । तत्र च विदूषकः इत इतो भवानिति राजानं प्रमदवनमार्गमादिशन् कञ्चित्कालं परिक्रमणानन्तरम् प्रमदवनपरिधिं प्रेक्ष्य "एष प्रमदवनपरिसरः अत्र च भवानतिथिरिव दक्षिणमारुतेन प्रत्युपगत" इति सविनयं विज्ञापयति । राजा च प्रमदवनश्रियं विलोक्य विविधा लताः कुसुमैः सनाथयन्तं वायुं कामिनमिवोपवर्ण्य मधुरमनोहरप्रमदोपवनप्रवेशपरो विदूषकेण सह प्रवेशं नाटयति । तत्र च राजा उद्यानस्थमन्दानिलविहारं भृशमुद्दीपकमनुभूय स्रोतसि प्रतीपतरणमिवोपवनप्रवेशं दुःखावहममंस्त । विदूषकश्चैनमर्थमनवगाहमानः कथमिवेति पृच्छन् राज्ञा मे मनः आदावेव अलभ्यवस्तुबद्धाभिनिवेशं पुष्पधन्वा कृशीकरोति, पुनश्च उपवनरसालैः साङ्कुरैः दृष्टिविलोभनैः बहु पीडितोऽस्मीति विज्ञापितः सन् अलं परिदेवनया तवाङ्गसुखमनङ्ग एव लघु सम्पादयितेति मङ्गलमाशासन् 'प्रतिगृहीतं ब्राह्मणवचनमिति, सम्मानितः राज्ञा सह परिक्रामते । क्रमेणात्र तत्र वसन्तावतारसूचितां कमनीयतां प्रमदवनस्य राज्ञः विचारपथमवतारयति, राजा च सर्वं निपुणमवलोकयन् श्यामं कुरबकं, मेदोन्मुखं बालाशोकं, नवां रसालमञ्जरीं उपवर्णयन् मणिशिलापट्टसमेते माधवीलतामण्डपे उपवेष्टुं प्रार्थितः तथा कुर्वन् इहासीनः ललितलतालोभ्यमानलोचनः प्रियागतामुत्कण्ठां विनोदयेत्युपश्लोकितः दीर्घं निश्वस्य तदङ्गनाबद्धसक्ति अनङ्गमन्थरं मे नयनयुगं कुसुमितास्वपि उपवनलतावधूषु धैर्यं न धारयति इत्याचक्षाणः वाञ्छितलाभाय उपायं कञ्चन शोधयितुं प्रियवयस्यं प्रेरयति ।

एवं तिष्ठति मदनोत्सुके राजनि चित्रलेखयानुगम्यमाना उर्वशी प्रविशत्याकाशयानेन । प्रियसखीविचारमजानती चित्रलेखा, क्व प्रस्थितासीति पृच्छन्ती हेमकूटशिखरे लताविटपलग्नां वैजयन्तीं मोचयितुं प्रवृत्ता त्वम् सोपहासं दृढं खलु लग्ना

मोचयितुमशक्येति भणन्तीदानीम् कुत्रानिर्दिष्टकारणं गच्छसीति किमिति पृच्छसीति प्रियसख्या लब्धोत्तरा "राजर्षेः सकाशं प्रस्थिता किमिति" पुनरपि तद्धृदयभावान्वेषणपरा बभूव। उर्वशी च मदनेन नियोजिता, पूर्वप्रेषितहृदया अहं तत्रैव प्रचलितासीति प्राह। मार्गं सुलभश्चादेशयितुं प्रार्थयन्ती दानवैरलङ्घनीयां शिखाबन्धिनीं विद्यां स्मारिता सा भगवतीभागीरथीयमुनयोः सङ्गमेन पावनीकृतमवनीतलं भूषयन्ती प्रतिष्ठानाभरणं राजर्षिभवनमुपगते स्व इति विज्ञापिता सस्पृहैः विलोचनैः स्निग्धमालोकयन्ती स्थानान्तरगतः स्वर्ग एवेति मन्यमाना 'कुत्र खलु स आपन्नानुकम्पी भवेदिति–' प्रियसखीं मन्त्रयते। सा च वनीं माधवनीमिव प्रमदोद्यानवाटिकामवतरन्ती राजानं दृष्ट्वा सोल्लासं प्रथमोदितो भगवांश्चन्द्रः कौमुदीमिव त्वामवेक्षमाणः सवयस्यो नितरां राजतेतराम् इति निवेदयन्ती भृशं तां सुखयते।

उर्वशी तत्रभवती राजानं प्रथमदर्शनादपि सविशेषं प्रियदर्शनं मन्वाना तत्रान्तरे वनान्तराले तिरस्करिणीप्रतिच्छन्ना सवयस्यो महाराजः रहसि किं मन्त्रयत इति सञ्जातकुतूहला सह चित्रलेखया तूष्णीं तिष्ठति। विदूषकश्च दुर्लभप्रणयिजनसमागमोपायं विचिन्त्य शून्यहृदयं राजानं विज्ञापयति यच्च स्वप्नसमागमकारिण्या निद्राया आश्रयः अथवा आलेख्यं लिखित्वावलोकनमिति। राजा चोभयमेवासम्भावि मनुते यतो विद्धमिदं हृदयं मदीयं पुष्पधनुषः इषुभिरतो निद्रां न लभयिष्यते आलेख्ये वा सुवदनायाः पूर्णतया लेखनात्पूर्वमेव मे नयनयोर्गतिं बाष्पपरम्परावरुद्धां करिष्यति। परिच्छन्ना चोर्वशी चित्रलेखया श्रुतं त्वया यत् तत्कारणमेवेयमवस्थेति विज्ञापिता चेतसि प्रत्ययं न मे इति वदन्ती पुनरुपालम्भाङ्गीकरणबद्धकौतुका तूष्णीमास। राजा च सनिश्वासं सा मम हृद्गतां कठिनां रुजं न वेद किम् अथवा संवेद्यापि मामवमन्यते इत्यादौ प्रियामधिक्षिपति। पश्चाच्च पञ्चबाणो मम तस्मिन् जने समागममनोरथमवकेशिनं विधाय कृतित्वमभ्येत्विति काममुपालभते। एवं श्रुत्वा उर्वशी 'हा धिक् मामप्येवं मन्यते महाराज' इति जातनिर्वेदा स्वात्मानं दर्शयितुं अशक्नुवाना सखीं प्रभावलभ्यं भूर्जपत्रमधिलिख्य क्षेप्तुं प्रेरयामास। उर्वशीहस्ताक्षरानुगृहीते पतिते तु तस्मिन् पत्रे भीतो विदूषकः भुजङ्गनिर्मोक इति मत्वा आक्रन्दते। राजा च तद् भूर्जपत्रमिति परिज्ञाय गृहीत्वा वाचयति श्रावयति च वयस्यम् "यथा महाराजेन मतं तत्तथा न, मह्यमपि नन्दनवनवातः शिखीव शरीरदाहकः सन्तीति" स्वमदनावस्थां प्रकाशितवतीति। तदा च किं महाराजो भणिष्यतीति समुपस्थितकौतुकोर्वशी तिष्ठति। विदूषकश्च बुभुक्षिताय मह्यं प्रातराशो यथा सुखयति तथैव ते मनो विनोदयितुमयं लेखः प्राप्त इति समाश्वासयति। राजा सर्वथैव तस्याः सम्मेलनाभावे तदीयहस्तविन्यासेनैव समागमं साक्षादिव मत्वा स्वात्मानं सान्त्वयति। विदूषकश्च अपि नामेदं सम्भवि यत्तत्रभवती उर्वशी ईदृशं प्रीतिपुरःसरं लिखित्वा विसंवदिष्यतीति, न कदापीति पुनरपि मधुरालापैः वयस्योचितैः समाश्वासयति। उर्वशी च चित्रलेखां राजानं प्रति स्वानुमतं भणितुं नोदयति, चित्रलेखा च

तिरस्करिणीं अपनोदते। सम्भ्रमात् तस्याः स्वागतं कृत्वा सखीं विनैकाकिनी त्वं मां तथा न विनोदयसि यथा सङ्गमे दृष्टपूर्वा गङ्गाविरहिता यमुना नात्मानं नन्दयति इति क्व ते सखीति जिज्ञासू राजा चित्रलेखया आदौ मेघराजिस्तदनु च विद्युदिति अन्योक्त्या उक्तिविचित्रया प्रत्युक्तः आत्मानमाशाबद्धं कथञ्चिद् विधाय इदमासनमास्यतामिति उपचारं विदधाति। विदूषकश्चानुपमसौन्दर्यामिमां चित्रलेखामेवोर्वशीं विचिन्तयन् नेयमुर्वशी तत्सहचरी एव, तदा सा कीदृशी सौन्दर्यसारनिकेतनं भवेदिति विस्मयेनापहृतात्मा बभूव। चित्रलेखा च राजानमाह यदुर्वशी विज्ञापयति यथाहं महाराजेनैव असुरावलेपादुद्धृतास्मीदानीं च बलवन्मदनेन बाध्यमाना भवतैवानुकम्प्यास्मीति। राजा च तत्कारणां स्वावस्थां दर्शयन् उभयोः पारस्परिकप्रीतिप्रवाहस्यानुवाहात् अभ्यर्थयते चित्रलेखां उभयोः समागमम्। चित्रलेखया प्रेरिता उर्वशी ससाध्वसमुपसृत्य सव्रीडम् जयतु जयतु महाराज इति विजयमाशंसते। राजा च हर्षपरिप्लुतमानसः अयि सुन्दरि यस्य त्वया जयः अद्योदीर्यते एतादृशोऽहं सत्यमेव विजयीति ससम्मानमुक्त्वा स्वहस्तेनासने उपवेशयति। तामुपविष्टाञ्चोर्वशीं विदूषकः अनभिवादनादुपालभते। सा च सलज्जं प्रणमति। अनन्तरं कश्चन देवदूतः आकाशे घोषयति "चित्रलेखे त्वरयोर्वशीं यतः महेन्द्रः भरताचार्येणोपदिष्टं ललिताभिनयं प्रयोगं द्रष्टुं कामयते" इति एवं अतिकठोरं वियोगजनकं शब्दं निशम्योर्वशी विषादं रूपयन्ती चित्रलेखामुखेन महाराजमनुज्ञामभ्यर्थयते। राजा च कथमपि विसर्जितवाग् नास्म्यहमीश्वरनियोगपरिपन्थी, किन्तु स्मर्तव्योऽयं जन इति प्रार्थनापरायणो भूत्वा तां गन्तुमनुमेने। गतायां च तस्यां चक्षुषः अगोचरतां स्वनयननिर्माणवैफल्यं अनुभवन् परं खिन्नो बभूव। विदूषकश्च भावानुबन्धा सा इतो गत्वा न त्वां विस्मरिष्यतीति बहुशः महाराजं विश्रम्भयति। राजा च वारं वारं तस्याः प्रस्थानसामयिकाननुभावान् स्मारं स्मारं उन्मनसमात्मानं विनोदयितुं किञ्चिदपि अलभमानो भूर्जपत्रं स्मरति। विदूषकश्च उर्वशीदर्शनेन विस्मृतात्मा कुत्र प्रभ्रष्टं तदित्यजानन् विषादमुपगच्छति राजानं च विज्ञापयति यद्दिव्यं तत् पत्रमुर्वशीमनुगतमिति। अन्वेषितुं च यतते।

ततः औशीनरी काशिराजतनया महाराजस्य परिणीता महिषी प्रविशति विभवतः परिवारेणानुगम्यमाना। सा च निपुणिकां स्वचेटीं प्रमदवनमलङ्कुर्वाणं समाणवकं महाराजं सत्यमेव दृष्टवतीति पृच्छति। नालीकं मया निवेदितमिति विज्ञापिता लतान्तरालेऽन्तरितमूर्तिः देवी श्रोतुं कामयते राज्ञः वयस्येन सह रहसि मन्त्रणम्। अत्रान्तरे वायुना नीयमानं भूर्जपत्रं देव्या दर्शनपथमवगाहते। निपुणिकयानीतं च तत् पत्रं तया पठितम् च। चेटी महाराजमुद्दिश्योर्वश्याः काव्यबन्धोऽस्तीति तर्कयामि इति विज्ञापयन्ती, गृहीतार्था भवेति देव्या समाज्ञप्ता तथा करोति। लतागृहे श्रुत्वा चार्थं पत्रस्य, महिषी परिक्रामन्ती अप्सरःकामुकं प्रेक्षितुं मनश्चक्रे। राजा च वसन्तसखायं मलयानिलं सम्बोध्य लतानां त्वं पौष्पं रजः सौरभ्यायाहरसीति युक्तम् किन्तु कामार्तस्य मे विनोदनैकहेतुं

भूर्जपत्रमपनेतुं किं वा ते प्रयोजनमिति बहुशश्चाधिक्षिपति । तत्कारणं बहुपीडितं राजानं विलोक्य सहसोपसृत्य देवी अलमावेगेनेदं भूर्जपत्रमिति आचक्षाणा स्वात्मानं प्रकाश्य राजानं ह्रेपयति । राजा च ससम्भ्रमं तां स्वागतेनाभिनन्दयति । देवी च क्रोधेद्धचक्षुर्षी दुरागतं न तु स्वागतमिति भर्त्सयति । राजा च जनान्तिकं वयस्यं प्रतिविधानं पृच्छति । तदप्रामुवन् राजादौ मन्त्रपत्रं मार्गये नेदमिति आत्मानं गोपायति । पश्चाच्च स्वापराधमनुमनुते । देवी च नायं भवतोऽपराधः ममैवायं यदहमत्र स्थितास्मीति कोपं रूपयन्ती प्रस्थिता । राजा च चाटुकारेण तां प्रसादयितुं यतते । सा तु प्रावृट्काले नदीवाप्रसन्ना गता । तां दृष्ट्वा नेदमुपपन्नमिति राजा तर्कयते । मध्याह्नवेलां च दृष्ट्वा दिनार्धसमयं वर्णयति यतो मयूरः उष्णार्तः सन् तरोर्मूलालवाले तिष्ठति, भ्रमराश्च कर्णिकारमुकुलान्यधिशेरते, कारण्डवश्च तीरनलिनीनासेवते, पञ्जरशुकश्च क्लान्तो जलं याचते इति बहूनि निदाघकालसूचकानि चिह्नानि विलोक्य माध्याह्नवेला सम्प्राप्तेति जानन् स्वगृहं विरामाय गन्तुमनाः सवयस्यो महाराजो रङ्गभूमितो निष्क्रान्तः ।

॥ इति द्वितीयोऽङ्कः ॥

---

## ॥ तृतीयोऽङ्कः ॥

अत्र प्रथमतः प्रविशतो गालवपेलवाख्यौ भरतशिष्यौ । तयोः गालवः पेलवं पृच्छति यतस्त्वं महेन्द्रमन्दिरे स्थापितस्तत्रभवता गुरुणा कथय देवपरिषदाराधितगुरोः प्रयोगेण न वेति । पेलवश्च सरस्वतीकृतललितपदावलीबन्धलेखे लक्ष्मीस्वयंवरे उर्वशी लक्ष्मीभूमिकां धारयन्ती वारुणीभूमिकया विलसन्त्या मेनकया सकेशवलोकपालमण्डितायामस्यां सभायां उपस्थितेषु कतमस्मिंस्ते हृदयाभिनिवेशः इति पृष्टा सती पुरुषोत्तमे इति कथयितव्ये प्रियसखीमाख्यदनाख्ययेयमपि प्रख्यातख्यातौ पुरूरवसाख्ये भूभर्तरि आत्मनः सख्यम् । ततश्च तस्यै क्रोधाग्निना दंदह्यमानशुष्कशमीवृक्षचेतास्तापसो मुनिस्तां ममोपदेशस्त्वयालङ्घितः अतो नार्हसि दिव्यामवस्थामिति शशाप । किन्तु पुरन्दरो दरं दर्शितदयाभावः प्रेक्ष्य व्रीडावनतवदनामुर्वशीं पञ्चबाणबाणविद्धदेहां स्वीयरणसहायस्य राजर्षेः पुरूरवसः कारणेन "यावत्स परिदृष्टसन्तानो भवेत्तावत्त्वं यथाकामं तं सेवस्वेति" शापस्यानुकूलतां विदधानः परमनुजग्राह । एवमुर्वशीसमागमसूचनम् भावि प्रदर्श्य भरतशिष्यौ सूर्यमवलोक्य कथाप्रसङ्गेनापराद्धाभिषेकवेला तदुपाध्यायस्य पार्श्ववर्तिनौ भवाव इति विज्ञाप्य पूर्वापरकथांशं सम्यग्योजयित्वा निष्क्रान्तौ ।

ततश्च रङ्गभूमिम् विशन् वृद्धकञ्चुकी अस्यां जरदवस्थायां कार्यभारोद्वहनेऽक्षमः परिश्रान्तो विश्राममलभमानः सेवां कारापरिणतिरिति निन्दन् स्त्रीषु कष्टोऽधिकारः इति खेदं प्रकाशयमानः औशीनर्या निपुणिकामुखेन व्रतसम्पादनाय पूर्वं याचितं महाराजं तदेव तस्या वचनेन विज्ञापयितुकामः सन् राजगृहे दिवसावसानवेलां रमणीयां वर्णयन् नेपथ्याभिमुखं विलोक्य तत्रैव प्रस्थितं राजानं वीक्ष्यावलोकन-

मार्गे प्रतिपालयन् स्थितः। ततः सविदूषकं परिवारेणानुगम्यमानं रङ्गभूमिं प्रविशन्तम् अनङ्गबाणव्यथिताङ्गयष्टिं कार्यव्यापारवशादनतिदुःखेन दिनं गमितं कथं नु अविनोददीर्घयामा यामिनीदानीं यापयितव्येति नितान्तमन्तःसन्तापसन्तप्तं नृपतिमुपेत्य कञ्चुकी जयपुरःसरं मणिहर्म्यपृष्ठे चन्द्रस्य सुदर्शनत्वात्तत्राहं सन्निहितेन देवेन रोहिणीसंयोगपर्यन्तम् प्रतिपालयितुमिच्छामीति देवीवचनं निवेद्य राज्ञोऽङ्गीकारवचनमङ्गीकृत्य निश्चक्राम। राजा च माननी देवी कथं मां स्वयमेव मयानुपश्लोक्यमानापि आहूतवतीति किं सत्यम् व्रतनिमित्तमिदमिति विचिकित्साक्रान्तचेताः वयस्येन तदुत्तरेऽत्रभवती संजातपश्चात्तापा व्रतव्यपदेशेन तत्रभवतः प्रणिपातलङ्घनापमानमपगमयितुमिच्छन्ती भवेदिति लब्धतर्कः दयितप्रणिपातानुलङ्घिनीनां मानिनीनां मनस्विनीनाम् अनुशयवतीं निसर्गजां प्रकृतिं वर्णयन् विदूषकं मणिहर्म्यपृष्ठस्य मार्गमादेष्टुमादिदेश। विदूषकश्च सरलेन मार्गेण राजानं तत्र नीत्वा मणिशिलासोपानेन यथानिर्दिष्टं स्थलमारुह्यतामिति प्रार्थयति। राज्ञः तदारोहणानन्तरं सर्वे सोपानारोहणं रूपयन्ति। विदूषकश्च निरूप्यावसरं तिमिररहितं प्राचीदिङ्मुखमवलोक्य आसन्नं चन्द्रोदयं मनुते। राजनि च चन्द्रस्यालौकिकीमुदयसुषुमां वर्णयत्येवौषधीनां पतिर्गगनं व्यभूषयत्। राजा च उदितं नलिनीदयितं प्रणामपुरःसरम् उपस्तौति। तत्र च चन्द्रिकायामभिव्यक्तायां दीपिकानां व्यर्थत्वं परिज्ञाय तदुपशान्तये परिजनं समादिश्य विदूषकवचनेनासने समासीनः चन्द्रमवलोक्य देव्या आगमने मुहूर्तावसरं ज्ञात्वा विविक्ते स्वामवस्थां वर्णयितुं प्रचक्रमे। तत्र च वर्णनाप्रमुख एव दक्षिणस्य बाहोरास्पन्दनरूपं सुनिमित्तं चिन्तयन् अचिरेणैव प्रियया समागमं भाविनं मत्वाऽऽत्मानं धारयति।

ततश्चाभिसरणवेषशोभावर्धिताङ्गसौन्दर्या सचित्रलेखा तत्रभवत्युर्वशी गगनमार्गेण प्रविशति। उर्वशी कृतनवाभिसरणवेषा आत्मानं निरूपयन्ती मुक्ताभरणभूषितनीलांशुकपरिग्रहः कथं ते रोचते इति चित्रलेखां पृच्छति। सा च "प्रशंसनाय मे नास्ति वाग्विभवः, पुरूरवा एव अथवाहं भवेयमिति" उत्तरं ददाना प्रियतमस्य नामधेयश्रवणेनाधीरां धारयति प्रियसखीमुर्वशीम्। तथा च महाराजस्य भवनं संप्राप्य क्वास्ते मम हृदयङ्गम इति सख्या कृतप्रश्ना उपभोगयोग्ये सुस्थले स्वस्थः स मनोरथलब्धं प्रियासमागमसुखं अनुभवन् दृश्यत इति उपहासपरायणा बभूव। श्रुत्वा वचनमिदमसूयापरमप्यनसूयां "न मे हृदयं प्रत्येति–" इति स्वप्रेम्णः गाढावस्थां प्रकाशयन्तीं उर्वशीं चित्रलेखा मणिहर्म्यप्रासादगतं राजर्षिं वयस्यमात्रैकसहायं विज्ञापयति। तत्रोपेत्य उभे राज्ञः "रजन्या सह मदनबाधा विजृम्भत" इति वचनं निशम्य समुद्भूतकुतूहले द्रुमान्तरालेऽन्तरिते संलापं श्रोतुं जोषमतिष्ठताम्। ततश्च विदूषकः परमशीतलान् शीतरश्मेः रश्मीन् सेवितुमभ्यर्थयते। किन्तु नरपतिः एकामुर्वशीमेव स्वसुखसम्पन्निधेस्तालिकां मन्वानः कुसुमशयनं चन्द्रमरीचिचयं वा सर्वमनर्थकारणमेव केवलं चिन्तयन् मनसिजरुजमपोहितुं दिव्या उर्वशी तदाश्रयिणी कथा वा केवला अलं भवेदिति स्वहृदयाधिदेवतां बहु प्रशशंस। विदूषकश्च वयस्यसमुचितं त्वं तामचिरेण लब्धासे इति

समाश्वासयामास। चित्रलेखा चैवंवादिनं राजानं दृष्ट्वाप्यननुग्रहां अतीवनिष्ठुरां प्रियसखीं सोपालम्भं कथमद्याप्यसन्तुष्टे विरमसीति सम्यगन्वयुङ्क्त। राजन्यगाधप्रणयोर्वशी प्रभावपिहितं स्वं विस्मरन्ती "सखि चित्रलेखे! अग्रतः स्थितायामपि मय्युदासीनो महाराजः" इति समाख्यापयन्ती चित्रलेखया असङ्क्षिप्ततिरस्करिण्यसीति स्मारिता सती विस्मिता बभूव। अत्रान्तरे नेपथ्ये इदो इदो भट्टिणीति घोषणामाकर्ण्योर्वशी स्वसम्मेलनान्तरायमनन्तरभाविनं विचार्य सह सख्या विषादमाप। विदूषकश्च सम्प्राप्ता देवीति विज्ञापनपरः संवृताकारस्तिष्ठेति राज्ञा आदिष्टः तथाभूत एव आस। उर्वशी चेदानीं किङ्कर्तव्यतामूढा सती चित्रलेखया विहितनियमवेषा राजमहिषी चिरं नात्र स्थास्यति त्वञ्चान्तरितासीति अलमावेगेनेति प्रार्थिता किमिदानीं भवितेति दर्शनपरा समतिष्ठत्।

ततश्च धृतोपहारपरिजनेनानुगम्यमाना देवी रोहिणीयोगेन सन्धिकशोभाधारिणं मृगलाञ्छनं वर्णयन्ती "देवीसहितस्य भर्तुः इदस्येव विशेषरमणीयता भावीति" चेटीभिः प्रत्युक्ता, स्मितविलासवदनाया देव्याः दर्शनेन मर्षितापराधेयं मयि प्रसन्ना देवीति प्रतिभानवन्तं राजानमुपगम्य जयघोषमुदीरयति सप्रणयम्। राजा च देवीं स्वागतां प्रकाशयति, उर्वशी चौशीनरीं शचीतोऽहीनतेजस्विनीं विलोक्य देवीपदयोग्यत्वं तस्याः परामृशति। देवी च सविनयम् 'आर्यपुत्रं पुरस्कृत्य व्रतविशेषः सम्पादनीयो मयेति' कृत्वा कञ्चित्कालमुपरोधः सह्यतामिति राजानं प्रार्थितवती। राजा च नायमुपरोधोऽनुग्रहः खलु इति मधुरं वदन् किन्नामधेयमिदं व्रतमिति पप्रच्छ। प्रियप्रसादनमिति चेट्या निवेदितो राजा मृणालकोमलायाः अस्या अङ्गयष्टेः व्रतेन ग्लपनं वृथेति प्रकाशयन् "प्रसादमाकाङ्क्षति यस्तवोत्सुकः स किन्त्वया दासजनः प्रसाद्यते" इति बहुशः सचाटुकारं प्रियं प्रियः स समभाषत। "महान् खल्वस्यामस्य बहुमानः" इति सवैलक्ष्यस्मितं कथयन्ती प्रियसहचरी चित्रलेखया अन्यसङ्क्रान्तप्रेमाणो नागराः भार्यायामधिकं दक्षिणा भवन्तीति सत्यमेवाभाषि। ततश्च देवी समादिश्य परिजनमुपहारादिकमानेतुं विविधैः पूजापरिमलद्रव्यैः भगवतश्चन्द्रमसः पादानर्चति। स्वस्तिवाचनिकं कञ्चुकिने विदूषकाय च यथामानं दत्वा एषाऽहं देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्यार्यपुत्रमनुप्रसादयामि। अद्यप्रभृति यां स्त्रियमार्यपुत्रः कामयते या चार्यपुत्रसमागमाभिनिवेशिनी तया सदा अप्रतिबन्धेन मया वर्त्तितव्यमिति व्रतं जग्राह। उर्वशी चैनं वचनमबुद्ध्वा चित्रलेखां पृच्छति। सा च प्रियसमागमस्ते पतिव्रतयाऽनयाऽभ्यनुज्ञात इति तामर्थं व्रतस्य व्यख्यापयत्। राजा च नाहमन्यनारीसङ्क्रान्तमना इति बहुशोऽलीकमपालपत्। देवी च भवतु न वेति सुसम्पन्नं मद्व्रतम् आगच्छत परिजना गच्छामो वयमिति वदन्ती "प्रिये! न खलु प्रसादितोऽस्मि यदीदानीं विहाय मां गम्यते" इति राज्ञः आपातरमणीयं वचनमश्रुत्वैव सपरिजना निष्क्रान्ता।

एतादृशं सप्रणयं दम्पत्योः व्यवहारं दृष्ट्वोर्वशी प्रियकलत्रो हि राजर्षिरिति बहुमानेन कथयति। राजा च ततः आसनादुत्थाय दूरं गतां देवीं विज्ञाय

विदूषकेण सह मन्त्रयते यत् अपि नामोर्वशी इदानीमिहागत्य स्वचरणनूपुरस्वेण मम श्रुतिपुटं सम्भावयेत्, अथवा पृष्ठतः समेत्य मे नयने करकमलावृते कुर्वीत, अथवा इह दर्शनेन मां सभाजयेदिति बहुशः प्रलपन् तदेकतानतया तस्यामासक्तस्तिष्ठति । अत्रान्तरे क्रीडापरायणोर्वशी पश्चादेत्य राज्ञः लोचने कराभ्यां निमीलयति । राजा च स्पर्शसुखेन विज्ञातप्रियः इयं नारायणोरुसंभवा वरोरुरिति तर्कयति । विदूषकश्च विस्मयविकसितो भवति । राजा च स्वगात्रस्य पुलकायमानत्वं तदेकसंस्पर्शं विनाऽसम्भवमिति विचार्य तां वरोरुमेवामन्यत । अथ च हस्तावपनीय मुकुलिताक्षीं हस्ताभ्यां गृहीत्वा परिवर्तयति । उर्वशी समुपसृत्य राज्ञो जयमुदीर्य देव्या मह्यं दत्तो महाराजः अतः प्रणयवती शरीरसङ्गतास्मीति स्वाभिप्रायमुद्घोषयति । राजा हि देव्या दानाद्यदि त्वं मां भजसि कस्यानुमतेन त्वया आदौ मे हृदयं चोरितमिति सोपहासं प्रत्याह । पश्चाच्चित्रलेखा तयोरेकान्तवासमाकाङ्क्षमाणा राजानं प्रार्थयते यदियं निरुत्तरा, मया च वसन्तापगमे ग्रीष्मसमये भगवान् सूरः उपचरितव्यः तदहं गच्छामि यथेयं मे प्रियसखी स्वर्गाय नोत्कण्ठेत तथा वर्तितव्यम् । राजा च तदङ्गीकरोति । उर्वशी चित्रलेखां परिष्वज्य मा खलु मां विस्मरेति सकरुणं प्रार्थयते । अपगतायां तु चित्रलेखायाम् राजा सामन्तमौलिमण्यरुणितपादद्वन्द्वे भुवनैकप्रभुत्वे तथा सुखं न लभे यथा अस्याश्चरणयोराज्ञाकरत्वेनाधिगतवानस्मीति स्वानन्दसीमानं प्रकाशयन् त एवेदानीं शशिनः कराः सुखयन्ति, पञ्चबाणस्य बाणास्त एवाधुनाऽनुकूलाः, तथा च यद्यद्विरुद्धं पुराऽऽसीत् तत्तत्सर्वं सम्प्रति मनोऽनुकूलतां प्राप्तमिति प्रियासमागमसुखमलौकिकं वर्णयामास । उर्वशी च चिरकारिका महाराजस्यापराद्धाहमिति आत्मानं क्षमापयति । राजा च क्लेशलब्धस्य वस्तुनः रसवत्तरत्वं ख्यापयन् "निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः" इति दृष्टान्तेन तमेवार्थं विशिनष्टि । विदूषकश्च गृहप्रवेशाय अभ्यर्थयते । ततः सर्वे विशन्ति । राजा चोर्वशीं यदाऽहं त्वत्समागममनोरथावाप्तिवञ्चितः आसम् तदा रजनी शतगुणिता बभूव यदीदानीं तव समागमे तथैव प्रसरेत्तदाऽहं कृतार्थतां भजेयमिति निवेद्य सवयस्यप्रियो निष्क्रान्त इति ।

## ॥ इति तृतीयोऽङ्कः ॥

---

## ॥ चतुर्थोऽङ्कः ॥

इत्थं गर्भसन्धौ प्रेम्णः अवस्थामीदृशीं बोधयित्वा कविशेखरः प्रकृतेऽस्मिन्नङ्के अवमर्शसन्धिं आङ्कपरिसमाप्तेः प्रस्तारयति । नायकनायिकयोरीदृशं समागमं व्युत्पाद्य कविरत्र सम्भोगस्य वैलक्षण्यं दर्शयितुमस्मिन्नङ्के तावत् विप्रलम्भं प्रतिपिपादयिषुस्तत्समये राजा कां कां दशामन्वभवदिति सर्वं ख्यापयति । तत्र च भूतभविष्यतोः वस्तुनोः प्रदर्शनाय सहजन्याचित्रलेखयोर्वादमन्तरा उपक्षिपति । तत्र च चित्रलेखाया म्लानामाकृतिं प्रेक्ष्य सहजन्या तत्कारणं चित्रलेखां पृच्छति । सा च अस्य कारणं प्रियसख्याः उर्वश्या विरह इति निवेदयति । अपि चाह

गुरूणि तस्मिन् विप्रयोगे सत्यपि महता खल्वनेनानर्थेन व्यग्रचित्ताऽस्मीति। तत्कथमिति समुपस्थापितशङ्कायां सहजन्यायाम् चित्रलेखा विज्ञापयति यदेकदा विहरणपरायणा राज्ञा सहोर्वशी कैलासशिखरे गन्धमादनवनं विहाराय गता। तत्र च मन्दाकिनीतटे क्रीडमाना उदयवतीनाम्नी विद्याधरकन्यका तेन राजर्षिणा बहुकालं स्निग्धं निध्याता। तेन च हेतुनोर्वशी असहना सती कोपं कृत्वा भर्तुरनुनयमवमानयन्ती गुरुशापसम्मूढहृदया विस्मृतदेवताव्यवहारा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। तत्र च देवतानियमानुसारं सा लतात्वमाप्ता। तेन चाधिकतरं सोत्कण्ठा सशोका चास्मि। पश्चात् च सहजन्यया पृष्टे तु कस्मिंश्चिदपि पुनर्मेलनोपाये चित्रलेखा सङ्गमनीयाख्यमणिं विहाय नास्ति कश्चनोपाय इति बोधयति। सहजन्या च 'न खलु तादृशा आकृतिविशेषाश्चिरं दुःखभाजो भवन्तीति' समाश्वास्य प्राचीं दिशमवलोक्य 'नदेहि उदयाधिपस्य भगवतो मरीचिमालिनः उपस्थानं कुर्वः' इति ख्यापयित्वा परस्परकथानुसन्धानं विधाय खण्डधारया चिन्तादूनमानसा सहचरीदर्शनबद्धलालसा हंसी सरोवरे ताम्यतीति अन्योक्त्या चित्रलेखायाः उर्वश्याः कारणेन संजातामन्तस्तापावस्थां प्रकटय्य ससखी निष्क्रान्ता॥

ततश्च प्रविशति सोन्मादः आकाशबद्धलक्ष्यो राजा। स च मेघं रक्षो मत्वा 'आः दुरात्मन् मम प्रियां हृत्वा क्व गच्छसि तिष्ठ तिष्ठेति' भर्त्सयित्वा, वर्षापरम्परया हतः बाणैर्हत इति मत्वा लोष्टं गृहीत्वा प्रतिहन्तुं प्रवर्तते। पश्चाच्च विभाव्य सकरुणं नवजलधरोऽयं न नाम राक्षसः, बाणवृष्टिरियं न, किन्तु जलवृष्टिरिति मूर्च्छितः पतति। ततश्च संज्ञां लब्ध्वा पुनरपि सकरुणं विचिन्त्य क्व नु सा गता भवेत्, यतः सा यदि कोपप्रभावात् प्रभावेण पिहिता स्यात् सा मह्यं दीर्घं न कुप्यति, स्वर्गं गता भवेत् किन्तु सा मयि भावार्द्रा इति बहुशो विकल्पयन् परावृत्तभागधेयानां दुःखं दुःखानुबन्धीति शोचमानः सपदि तदीयविप्रयोगस्य नववारिधरोदयादुद्दीपितत्वं परिज्ञाय भृशं पीडां भजते। ततश्च मनस्येव विहस्य वृथा हि मया सन्तापवृद्धिरुपेक्ष्यते यतो 'राजा कालस्य कारणम्' इति प्रसिद्धवागनुसारं कथं न मया जलधरसमयः प्रत्यादिश्यते इति कृत्वा पुनश्च प्रावृषेण्यैरेव लिङ्गैरिदानीं मे राजोपचार इति विचार्य मेघं कनकरुचिरं वितानम्, तरुमञ्जरीः चामराणि, नीलकण्ठान् बन्दिनो मत्वाऽऽत्मानं संस्थापयति। इदानीं परिच्छदश्लाघां वृथा मन्यमानः कानने़ऽस्मिन् गहने प्रियामन्वेष्टुं आरेभे। इतस्ततः परिक्रामन् राजा ससलिलैः कुसुमैर्युक्तां नवकन्दलीमवलोक्य कोपारुणितलोचनैः ससलिलैर्विभूषितां प्रियां स्मरामीति खिन्नमनाः मेघसिक्तसिकतासु वनस्थलीषु यदि सा इतो गता स्यात्तदा अलक्ताङ्का तस्याश्चारुचरणपङ्क्तिर्गुरुनितम्बतया पश्चान्नता दृष्टिपथमवतरेत् इति विकल्प्य, किञ्चिदग्रे गत्वा शुकोदरश्यामं स्तनांशुकम् दृष्ट्वा तदादानपरायणस्तं नवशाद्वलं परिज्ञाय सास्रम् कुतोऽस्मिन् विपिने प्रियाप्रवृत्तिं लभेय इति अन्ततो विचारयन् सञ्चारपरायणः शैलतटस्थलीपाषाणमधिरुह्य नृत्यन्तं शिखिनं विलोक्य किन्त्वया मम प्रिया दृष्टेति पृच्छति। पश्चान्नीलकण्ठं पृच्छति, तच्च प्रतिवचनमदत्त्वैव नृत्यन्तमालोक्य तस्य हर्षकारणं अवगन्तुकामः

मत्प्रियाया इदानीमदर्शनात् कुसुमसनाथे तस्याः केशपाशेऽसति अस्य घनरुचिरकलापः निरुपमतामाप्त इति मत्वा परमहर्षपरिप्लुतोऽयं मयूरो विद्यते इति परव्यसनसुखितमेनं नाहं पृच्छामीति कृत्वा ततः प्रचलितः। तदनु च विहङ्गपण्डितां परभृतमालोक्य तत्पुरो जानुभ्यां स्थित्वा अप्यन्यपुष्टे! यतस्त्वां कामिनः कामदूतिं व्याहरन्ति, त्वञ्च मानिनीनां भामिनीनां मानावभङ्गेऽमोघमन्त्रम् इति हेतोः, प्रियतमाया अन्तिकं मामाशु प्रापयेति प्रार्थयंस्तदीयकुहूरवं निशम्य कथं सा त्वामनुरक्तं विहाय गतेति पृच्छसीति विचार्य तां प्रत्युत्तरं ददाति यदहं मया कृतं तस्याः कोपहेतुं न स्मरामि, किन्तु रमणीनां रमणेषु प्रभुता भावस्खलितानि नह्यपेक्षते इति प्रोच्य ससंभ्रममुपविश्य तां स्वकार्यनिपुणामवधार्य "महदपि परदुःखं शीतलं सम्यगाहु" रिति सामान्यं वचो ददत् प्रियेव मञ्जुस्वनेयमिति न मे कोपोऽस्यामिति तां परिहाय किञ्चिद्दूरं गतः। तत्र च प्रियापदनिक्षेपशंसिनं नूपूररवमाकर्ण्य तदनुसरणपरायणः मानसोत्सुकानां राजहंसानां कूजितमिदं न तु नूपूरशिञ्जितमिति विभाव्य परं दुःखमाप्नुवानः तदन्यतमतः प्रियावार्ता ज्ञातव्येति निश्चित्य तं अहो जलविहङ्गराजेति सम्बोध्य त्वं मानसं पश्चात् गमिष्यसि भूयो ग्रहणाय पाथेयभूतमिदं बिसं परित्यज्य मद्दयितावृत्तान्तदानेन मदीयं शोकशल्यमुद्धरेति अभ्यर्थ्य "स्वार्थात्सतां गुरुतरा प्रणयिक्रियैव" इति साधारणीं वाचमनूद्य स्वपक्षं दृढतां नयति। राजा च तदवमानिनं तमुत्पतन्तं विलोक्य रे हंस यदि त्वया मे प्रिया नावलोकिता कथं त्वया तदीयं मदखेलपदं चोरितं स्यात्किन्तु मां स्तेनानुशासिनं राजानं मत्वा भयात्पलायितोऽसीति अधिक्षिप्य अन्यमवकाशमवगाहते।

प्रियासहायं रथाङ्गनामानं वीक्ष्य तं प्रियाप्रवृत्तिं पृच्छन् तमपि च जायास्नेहात् पृथक्स्थितिभीरुमत एव स्वसमानदुःखं जानन् ततः प्रस्थितः। परिक्रम्य अन्तर्गुञ्जितषट्पदम् पद्मं तस्याः दष्टाधरं ससीत्कारमिवाननं परिज्ञाय कमलसेविनि भ्रमरे प्रणयं कर्तुं प्रवृत्तः। अञ्जलिं बद्ध्वा मधुकरं तं मदिरेक्षणायास्तस्याः उदन्तं शंसितुमभ्यर्थयन् विकल्प्य च यत्त्वया सा वरतनुर्न दृष्टा, यतो यदि त्वं तद्वदनोच्छ्वासगन्धं सुरभिमवाप्स्यस्तदा तवाऽस्मिन् वराके पुण्डरीके न रतिरभविष्यदिति तं हीनभाग्यं त्यजति। करिणीसहायं नागाधिराजं सुखेन निषण्णं समीक्ष्य तदन्तिकमेत्य प्रियोपलब्धिसूचकेन मधुरकण्ठगर्जितेन समाश्वासितः यथा त्वं नागाधिराजः तथाहं राजाधिराजः, यथा त्वं दानी तथैवाहं, यथा तवेयं यूथे वशा तथा मम प्रियोर्वशी इति समानत्वं वीक्ष्य त्वयि मे भूयसी प्रीतिरिति निवेद्य परितो दृष्ट्वा अये! अयमसौ अप्सरसां प्रियतमः सुरभिकन्दरो नाम सानुमान्, अपि नाम सुतनुरस्योपत्यकायां लभ्येतेति मृगतृष्णिकया प्रेरितः तमधिरोहति। तत्रान्धकारसान्द्रं सर्वं समीक्ष्य विद्युत्प्रकाशेनालोकयामीति कृतमन्त्रः मेघोदयमपि सौदामिनीविरहितं दृष्ट्वा शिलोच्चयमेवैनं "अपि वनान्तरमल्पभुजान्तरा श्रयति पर्वतपर्वसु सन्नता; इयमनङ्गपरिग्रहमङ्गला पृथुनितम्बनितम्बवती तवेति" परममाधुर्यसन्दानितेन विनयमहिम्नोपबृंहितेन वचसा तं पृष्ट्वोत्तरमनुपलभ्य शङ्के विप्रकर्षाद्वाक्यं शृणोति समीपमस्य गत्वा पृच्छामीति मत्वान्तिकं प्राप्य प्रियोदन्तं

शुश्रूषुः साञ्जलिः रम्येऽस्मिन् विपिने मया विरहिता रामा त्वया विलोकिता किम् इति उक्त्वा प्रतिशब्दं च "दृष्टेत्याहेति" शृण्वन् दिशोऽवलोक्य सखेदं ममैवायं कन्दरान्तरविसर्पी प्रतिशब्दः इति परिज्ञाय मूर्च्छन् कालेन पुनश्चेतनामुपागम्य आत्मानं श्रान्तं अनुभूय गिरिणद्यास्तीरे तरङ्गवातमासेवितुं प्रक्रमते। तत्र नवाम्बुवाहकलुषां स्रोतोवहां पश्यन् रतिं लभमानस्तरङ्गिण्यास्तरङ्गसङ्घं भ्रूभङ्गं प्रियाया मत्वा, विहगश्रेणिं रशनां विचार्य, फेनं संरम्भशिथिलं वसनं विचिन्त्य, स्खलनमुभयोः समानं निरीक्ष्य "नदीभावेनेयं ध्रुवमसहना सा परिणता" इति विलपन् तत्प्रसादनपरः "अयि प्रिये ! प्रणयभङ्गपराङ्मुखमनसः त्वयि बद्धसक्तेर्मम कमपराधलेशं पश्यसि यनो दासजनं त्यजसीति" मधुरं प्रार्थयन् प्रियामनवाप्नुवन् परमार्थत इयं सरिदेवान्यथा कथं पुरूरवसं मामपहाय समुद्राभिसारिणी भवेदिति विचिन्तयति। पुरः सारङ्गमासीनमभिवीक्ष्य "हंहो हरिणीपते ! अपि मम प्रियामिह वने दृष्टवानसि, तदुपलक्षणन्तु यथेयं पृथुलोचना ते सहचरी सुभगं वीक्षते तथैव सापि" इति कृतायामभ्यर्थनायां तद्वचनमनादृत्य कलत्राभिमुखं स्थितं सारङ्गमवेक्ष्य सर्वथोपपद्यते परिभवास्पदं विधिविपर्ययः इति स्वभागधेयान्यधिक्षिपन् अन्यत् स्थलं जिगमिषति। पुरतः शिलाभेदगतं नितान्तरक्तं किमपि लोकमानः किमिदं केसरिणा हतस्य गजस्यामिषलवः न तत् यतः इदं प्रभावत्; अग्नेः स्फुलिङ्गः किम्, न तत् यतः अभिवृष्टमिदं वनमिति बहुशः सन्दिहानः रक्ताशोकस्तवकनिभरागं कञ्चन मणिमभिगत्य आदानपरः सन् तं निपुणं विविच्य यस्याः वल्लभायाः मन्दारपुष्पैः सनाथीकृतायां शिखायामयं मणिरर्पणीयः सा एव सम्प्रति मम दुर्लभेति मत्वा तं निरुपयोगिनं कल्पयित्वा यावदुत्सृजति तावदेव "वत्स गृह्यताम् गृह्यताम् सङ्गमनीयोऽयं मणिः प्रियजनेनाशु सङ्गमं भावयतीति" नेपथ्यवचनमाकर्ण्य उर्ध्वमवलोक्य अनुशासितारं भगवन्तं मृगराजधारिणं परिज्ञाय उपदेशानुकूलं मणिमादाय तं "हंहो सङ्गममणे ! यदि त्वं मम प्रियया सह समागमाय कल्पसे तदाऽहमात्मनस्त्वां शिखामणिं करिष्ये इति सम्बोध्य इतस्ततः परिक्रमते। तत्रैव पुरोवर्तिनीं कुसुमहीनामपि लतामिमां पश्यता मया रतिरनुभूयते इति सङ्कल्प्य, तस्याः मेघजलार्द्रपल्लवं प्रियायाः अश्रुभिर्धौताधरं परिकल्प्य, विश्रान्तपुष्पोद्गमं विरहादाभरणशून्यत्वं विचार्य, मधुलिहां गुञ्जनहीनत्वं चिन्तामौनं कल्पयित्वा, पादपतितं मामवधूय जातानुतापेयं कोपना विद्यते इति मन्वानः प्रियानुकारिण्यां लतायां यावदाश्लेषप्रणयी तां आलिङ्गति तावदेव तत्स्थाने उर्वशी प्रविशति। राजा च निमीलिताक्षः उर्वशीगात्रसंस्पर्शजन्यसुखं लभमानः यद्यन्मया प्रथमं प्रियेति मतम् तत्तत् क्षणेन विसंवादगोचरोऽभूत् अतोऽहं तत्सुखं भृशमनुभवन् तद्धानिभीतः न सहसा लोचने विनिद्रे करोमि इति स्पर्शविभावितप्रियः रतेः परां भूमिमनुभवन् सहृदयहृदयचेतांसि समुल्लासयन् शनैर्नयने उन्मील्य कथं सत्यमेवोर्वशीति विलोक्य मूर्च्छितः पतति।

उर्वशी च समाश्वासयति महाराजम्। राजा च संज्ञां लब्ध्वा प्रिये ! अद्य जीवितम्, त्वद्वियोगजन्ये महति तमसि मज्जता मया दिष्ट्या त्वं प्रत्युपगतासीति

स्वावस्थां वर्णयति । उर्वशी मर्षयतु मेऽपराधं महाराज इति क्षमापयति । राजा च नाहं प्रसादयितव्यः, त्वत्समागमेन प्रसन्नो मे सबाह्यान्तरात्मा, तत्कथय कथमियन्तं समयं मद्विप्रयुक्ता त्वमनैषीरिति तामपृच्छत् । उर्वशी च "पुरा भगवता महासेनेन शाश्वतं नैष्ठिकं व्रतं गृहीतम्, अध्यासितश्चेदं गन्धमादनवनम् । शप्तं चेदं यत् या किल स्त्री इदं वनं समागमिष्यति सा लताभावं प्राप्स्यति इति । गौरीचरणरागसम्भवस्य मणेर्लाभश्च शापान्तः कृतः । अहञ्च गुरुशापसंमूढहृदया स्त्रीजनपरिहरणीयं रमणीयकुमारवनं प्रविष्टा लतात्वञ्च प्राप्ता" इत्याह । राजा समागमकारणं सङ्गममणिं प्रियायै दर्शयति । तथा च स्ववचनानुसारं तं ललाटेऽभिनिवेशयति । उर्वशी च "प्रियंवद ! महान् खलु कालः संवृत्तः आवयोः प्रतिष्ठानान्निर्गतयोरित्यतः तत्रास्माभिर्गन्तव्यमिति" राजानमाह । अङ्गीकृते तु तस्याः प्रस्तावे, राजानं सा कथं गन्तुमिच्छति महाराज इति पृच्छति । राजा नवं पयोमुचं विमानं परिकल्प्य नगरं नेतुं तां निवेदयति । उर्वशी च तथैव करोति ।

"प्राप्तसहचरीसङ्गमः पुलकप्रसाधिताङ्गः ॥
स्वेच्छाप्राप्तविमाने विहरति हंसयुवा ॥"

इति हंसान्योक्त्या विरहोपक्रमानुसारं अन्तिममपि तथा उपसंहरतः कविपण्डितस्य कलाकौशलं निपुणं प्रेक्षमाणानां सामाजिकानां अग्रतः इत्थं नायिका नायकश्च रङ्गभूमितो निष्क्रान्तौ ॥

## ॥ इति चतुर्थोऽङ्कः ॥

---

## ॥ पञ्चमोऽङ्कः ॥

अथ कविताकुमुदिनीचन्द्रः कवीन्द्रः सर्वं सुस्थं सम्पादयितुं रतेः परां भूमिं दर्शयित्वा, विप्रयोगेण प्रेम्णः परम्परां वर्धयित्वा, नियताप्तिं विधातुं, निर्वहणसन्धिं प्रारिप्सुः विदूषकमुखेनाग्रिमकथोपन्यासाय तत्प्रवेशमाह ।

राज्ञः समागमेन सन्तुष्टो विदूषकः चिरेणोर्वशीसहायो राजा नन्दनवनप्रभृतिषु प्रदेशेषु विहृत्य प्रतिनिवृत्तोऽधुना स्वराज्यकार्यनिर्वहणपरायणः सन् प्रकृतिमनुरञ्जयन् विद्यत इति राज्ञः प्रतिष्ठाने प्रतिष्ठानानन्तरं कीदृशी दशेति सूचयति । शोभते चासौ यतो निःसन्ततित्वमपहाय राजा सुस्थ एव । तथा च अद्य कश्चन तिथिविशेष इति कृत्वा देव्या सह गङ्गायमुनयोः सङ्गमे कृताभिषेकस्तिष्ठति । इति सर्वां राज्ञः परिस्थितिं विज्ञाप्य विदूषकः परिक्रामति ।

नेपथ्ये धिगिति शब्दं सङ्गममणिः आमिषशङ्किना केनचन गृध्रेणाक्षिप्त इति विज्ञापनां च श्रुत्वा विदूषकः अत्याहितम् अत्याहितमिति खेदं प्रकाशयन् राज्ञः असमाप्तनेपथ्यविधानावस्थायामेव प्रवेशं सूचयति । ततः सूतः कञ्चुकी वेधकः सपरिजनश्च राजा प्रविशन्ति । राजा च वेधकं क्वासौ विहगकुम्भीलको गत इति पृच्छति । किरातश्च मुखे न्यस्तकनकसूत्रं मणिमादायोड्डयमानं गृध्रं दर्शयति । विदूषकश्च राजानमुपेत्य तं गृध्रं दण्डयितुं प्रार्थयते । राजा धनुषे समाज्ञापयति । यावता

कालेन धनुरानीयते तत्पूर्वमेव विहगाधमः नयनागोचरतां गतः। तं पक्षिणं तादृशं परिज्ञाय राजा कञ्चुकिनमाज्ञापयति, उच्यतां मदाज्ञया यत् सर्वैः नागरिकैरद्य सायं विचेतव्यः स विहगाधम इति। कुत्रापि पलायितः स रत्नपाटच्चरो भवतः शासनात् कथं मोक्ष्यते इति राज्ञः महिमानं ख्यापयन् विदूषकः राजानं सान्त्वयित्वोपवेष्टुं प्रार्थयति। राजा उपविशति मणेः प्रियया सह समागमकारकत्वेनोपबृंहितमूल्यवत्त्वं चोपवर्णयति। अत्रान्तरे सशरं मणिमादाय जयघोषपुरःसरं कञ्चुकी प्रविशति। मणिं तत्र दृष्ट्वा सर्वे विस्मयं नाटयन्ति। राजा च मणिं तं प्रक्षाल्य कोषपेटके स्थापयितुं आज्ञापयति। राजा च पुरःस्थं कञ्चुकिनं पृच्छति, कस्यायं बाण इति। कञ्चुकी वार्धक्यात् दृष्टेः दुर्बलत्वात् वर्णविभावनेऽसामर्थ्यं निजं प्रकाशयति। ततश्च राजा स्वयं नामाक्षराणि "उर्वशीसम्भवस्यायमैलसूनोर्धनुष्मतः। कुमारस्यायुषो बाणः संहर्ता द्विषदायुषाम्" इति श्रावयति। विदूषकश्च राज्ञः सन्तानवार्ता निशम्य हर्षपरिप्लुतः राजानमभिनन्दयति। राजा च सस्मितोऽपि कथमेतदिति विस्मितः सन् आह— अहं तु उर्वश्या वियुक्त एवासम्, न चाहं तां मम पत्नीमन्तर्वत्नीं सहयोगकालेऽपि कदाप्यपश्यम्, कुत एव प्रसूतिः इति। अनुचितं हि अमानुष्यां तस्यां मानुषीसदृशव्यवहारारोपणम् इति विदूषको राजानं भणति। भवतु नाम यथाह भवान् किन्तु मत्तः पुत्रस्य गोपने तत्रभवत्याः किं कारणम् इति राज्ञा पृष्टो विदूषकः वृद्धां मां राजा परिहरिष्यतीति मत्वा संवृतः पुत्र इति सोपहासं उत्तरं ददाति। अत्रान्तरे प्रविश्य कञ्चुकी "च्यवनाश्रमात्कुमारं गृहीत्वा तापसी देवं द्रष्टुं संप्राप्तेति विज्ञाप्य प्रवेशयितुं लब्धसम्मतिः तापसीसहितं कुमारमादाय प्रविष्टः। सुकुमारं जितमारं कुमारं तं दृष्ट्वा विदूषकः "यस्य नाम्ना अङ्कितो बाणः स एवायं क्षत्रकुमारः, भवत्सदृक्षतैवात्र प्रमाणं" इति राजानं निवेदयति। सोऽपि नयनयोः सबाष्पत्वम्, मनसः प्रसादत्वम्, हृदयस्य वत्सलत्वम्, देहस्य सवेपथुत्वम् अनुभाव्य तथैव मनुते। कञ्चुकी च तापसीकुमारौ यथास्थानमुपवेशयति। राजा चोपसृत्य तापसीमभिवादयते। तापसी मङ्गलमाशंसती मनसि आयुषः राज्ञश्च औरसं संबन्धं समीचीनं विचारयन्ती, प्रकाशं कुमारं गुरुं प्रणन्तुमाह। कुमारः सबाष्पमञ्जलिं बद्ध्वा प्रणमति। राजा च तमायुष्मन्तमाशंसन् कुमारकं हस्ते गृह्णाति, कुमारस्य स्पर्शं रूपयित्वा स्वगतमेव "वृद्धानामुत्सङ्गे एव वृद्धानां बालानां कीदृशोऽनिर्वचनीयः स्नेह" इति स्पर्शमात्रेण अनुभवन् विचिन्तयति। राजा च तापसीमागमनप्रयोजनं पृच्छति। तापसी चाह यत् एष दीर्घायुरायुर्जातमात्र एव केनापि निमित्तेन मम हस्ते न्यासीकृतः। क्षत्रकुलोचितं चास्य जातकर्मादि संस्करणम् तत्रभवता च्यवनेन महर्षिणा विहितम्, गृहीतविद्यो धनुर्वेदे विनीतश्चायम्। अद्य पुष्पसमित्कुशनिमित्तम् ऋषिकुमारैः सह गतेनानेनाश्रमविरुद्धं गृहीतामिषः गृध्रः आश्रमपादपशिखरे निलीयमानो लक्ष्यीकृतो हतश्च। तदुपलब्धोदन्तेन मुनिनादिष्टाऽस्मि यदेनं न्यासं उर्वशीहस्ते निर्यातयेति।" तदुर्वशीं प्रेक्षितुमिच्छामि इत्युक्त्वा आसने समासीना। राजा चोर्वशीमाह्वातुमादिशति। ततो राजा कुमारं लालयति। अत्रान्तर एव प्रविशत्युर्वशी कञ्चुकी च। उर्वशी प्रविश्यालोक्य

च कोऽयं महाराजेन प्रसाध्यमानशिखण्डकः तिष्ठतीति सन्दिहाना विभाव्य सत्यवतीसहितो मे पुत्रक आयुरिति परिज्ञाय सशङ्काऽभवत्। राजा च कुमाराय तज्जननीं दर्शयति। तापसी कुमारमाहूयोर्वशीमुपसर्पति। उर्वशी पादाभिवन्दनं करोति। सर्वे यथोचिताभिवादनस्वागतानन्तरं यथास्थानमुपविष्टाः। तापसी च उर्वश्यै कुमारं यच्छति। उर्वशी च समुदाचारानुसारं तापसीं विसृजति। राजा च च्यवनायाभिवादनमर्पयितुमभ्यर्थयते। कुमारश्च बालभावसदृशं तापसीं जातकलापं शितिकण्ठं शिखिनं तदर्थे प्रेषयितुमभ्यर्थनां विदधाति। गतायां च तस्यां, राजा अद्याहं तवामुना पुत्रेण पुत्रिणामग्रसरः जयन्तेन पुरन्दर इव सम्पन्नः इति प्रियामभिनन्दयति। अत्रान्तरे उर्वशी महेन्द्राभिधानात् किमपि स्मृत्वा रोदिति। तां तादृशावस्थां विलोक्य विदूषकः राजानं दर्शयति। राजा च सावेगम् "अयि सुन्दरि! मदीयवंशस्थितेर्हेतोरधिगमात् अद्य प्रमोदहेतौ सत्यपि किम्-कारणं रोदिषी"ति प्रियां सादरं पृच्छति। उर्वशी च महेन्द्रसंकीर्तितं समयं स्मरन्ती "अहं पुरा महाराजनिहितहृदया गुरुशापसम्मूढा महेन्द्रेणावधीकृत्या-भ्यनुज्ञाता यदा मम प्रियवयस्यस्त्वयि समुत्पन्नसुतस्य वदनं प्रेक्षते तदा त्वया प्रत्यागन्तव्यमिति, ततश्च महाराजवियोगभीरुतया मया संवृणीतः पुत्रकः" इति सर्वं समाख्याय एतावान्मम महाराजेन सह संवास इति विज्ञापितवती।

एतन्निशम्य सर्वे विषादं रूपयन्ति राजा च मुह्यति। सर्वैः समाश्वासनानन्तरं राजा संज्ञामधिगम्य दैवस्य सुखप्रत्यर्थितां वर्णयन् सुतोपलब्ध्या आश्वासितस्य मम त्वया सह विप्रयोगः आतपरुजः प्रथमाभ्रवृष्ट्या रक्षितस्य जनस्य कृते विद्युदिवोप-स्थित इति स्वीयं गुरुशोकवत्त्वं प्रकाशयति। तदनन्तरं विदूषकस्तपोवनं प्रचलितुं समुचितं मन्यमानस्तथोपदिशति। उर्वशी च पुत्रावाप्तेरनन्तरमेव समापन्नां विपत्तिं समीक्ष्य भृशं दुःखिता भवति, राजा च तां भर्तुराज्ञां पालयेत्युक्त्वा सूनौ राज्यं विन्यस्य वनान्यधिगन्तुं निश्चिनोति। कुमारश्च सविनयं प्रार्थयते यदधुना नृपपुङ्गवधृतायां राज्यधुरि वत्सतरं मां नियोजयितुं तातो नार्हतीति। राजा च तस्य साहसं वर्धयितुं गन्धद्विपस्य कलभोऽपि अन्यान् गजान् शमयति, भुजङ्गशिशोरपि विषं वेगोग्रं भवतीति उदाहरणैः स्वपक्षं दृढयन्, "बालोऽपि त्वं भुवं शासितुमलमसीति" वचनैः कुमारस्य तेजस्वित्वं प्रकाश्य तं सान्त्वयति। राजा कञ्चुकिनं अमात्यपर्वतं आयुष्मतो राज्याभिषेकं विधातुं निवेदयेत्यादि-शति। कञ्चुकी दुःखेन निष्क्रान्तः। सर्वे दृष्टिमधः कुर्वन्ति। राजा च गगनमवलोक्य कुतो नु खलु विद्युत्सम्पातः इति शङ्कमानः किञ्चिन्निपुणं विभाव्य भगवन्तं नारदं पश्यन् चकितः सन् महामुनिं पिङ्गलजटाजूटं सितोपवीतं नारदं मुक्तासरसन्नि-वेशितं हेमप्ररोहं जङ्गमकल्पद्रुमं वर्णयन् अर्घायाज्ञापयति, उर्वशी च तम् समर्पयति। ततो भगवान्नारदः प्रविशति। उपेत्य च विजयमाशंसते। राजा चोर्वशी अभिवादनं कुरुतः, नारदश्चाविरहितौ दम्पती भूयास्तामिति आशिषं वदति। राजा चोर्वश्या विप्रयोगमासन्नं निरीक्षमाणः "अपि नामैवं स्याद्यथा महामुनिराशंसत" इति मनसि विचिन्तयन् एव कुमारम् आश्लिष्य भगवन्तमभिवादयेति प्राह। कुमारश्च

प्रणमति। नारदस्तं आयुष्मन्तं अभिभाषते। राजा नारदं विष्टरं ग्राहयित्वा सविनयं किमागमनप्रयोजनमिति पृच्छति। भगवान्नारदः प्रभावदर्शी मघवा वनगमनाय कृतधियं भवन्तमनुशास्ति यत् त्रिकालदर्शिभिः सुरासुरविमर्दो भावीति समादिष्टम्, भवांश्च सांयुगीनः सहायः अतो न भवता शस्त्रन्यासो विधेयः, इयं चोर्वशी यावदायुः तव सहधर्मचारिणी भवत्विति महेन्द्रसंदेशं कथयति। उर्वशी च मनसि विप्रयोगमहच्छल्यं अपनीतं ज्ञात्वा परं सुखमलभत। राजा च वासवस्य महाननुग्रह इति ख्यापयति। नारदश्च राज्ञे "परस्परं भावयतोः युवयोः पारस्परिकी इष्टकारिता अविच्छिन्ना भवतु" इति प्रोच्य आकाशमवलोक्य रम्भां मन्त्रेण सम्भृतं कुमारस्याभिषेकसम्भारमुपनेतुं समाज्ञाप्य कुमारं भद्रपीठे उपवेशयति। कलशांश्च शिरसि आवर्ज्य रम्भां शेषं विधिं निर्वर्तयितुं समादिशति। विधौ समाप्ते कुमारः सर्वान् प्रणमति। सर्वे यथोचितं मङ्गलं भाषन्ते।

अत्रान्तरे नेपथ्ये वैतालिकद्वयम् पितृसदृशः सन् त्वमभ्यधिकतरं विराजमानां राजलक्ष्मीं सविशेषं सम्भावयेति कुमाराय विजयं घोषयामास। ततश्चोर्वशी कुमारं ज्येष्ठमातरमभिवन्दितुमाह किन्तु सममेव जिगमिषुणा राज्ञा निवारितः। नारदश्च ते तनयस्य यौवराज्यश्रीः मरुत्वता सैनापत्ये समारोपितस्य कार्तिकेयस्य शोभां स्मारयतीति स्कन्दसदृशत्वं आयुषः प्रख्यापयति। इत्येवं सर्वस्मिन् सुसंपन्ने सति सर्वेषां मङ्गलाशासनगर्भेण भरतवाक्येन

"परस्परविरोधिन्योरेकसंश्रयदुर्लभम्
संगतं श्रीसरस्वत्योः भूयादुद्भूतये सताम्।
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु" इत्यमुना समाप्तं त्रोटकमिदम्॥

---

## ॥ संक्षिप्तेतिवृत्तम् ॥

त्रोटकस्यास्य तावत् प्रथमेऽङ्के सूर्योपस्थाननिवृत्तेन श्रुतदेवाङ्गनाक्रन्दनेन राज्ञा पुरूरवसा केशिदैत्येन हृतायाः सचित्रलेखायाः उर्वश्याः समुद्धरणम्। हेमकूटशिखरे राज्ञो विजयं प्रतिपालयन्तीनां सखीनां तया सह समागमः, श्रुतैतद्वृत्तेन महेन्द्रेण प्रेषितायाः गन्धर्वसेनाया नायकस्य चित्ररथस्य राज्ञा सम्मेलनम्, उर्वशीग्रहणम्, अत्रान्तरे सञ्जातपूर्वरागयोः राजोर्वश्योः स्वस्वालयं प्रति प्रस्थानम्।

द्वितीये तु कामेनाभिभूयमाने राजनि पुरूरवसि प्रमदवनस्थे तिरस्करिणीप्रच्छन्नायाः ससख्याः उर्वश्याः स्वर्गादवतीर्य राज्ञे प्रेमपत्रप्रदानम्, तस्य च राज्ञानुवाचितस्य विदूषकहस्ते न्यासः। अत्रान्तरे लक्ष्मीस्वयंवराख्यं रूपकमभिनेतुं आहूतायाः अपूर्णमनोरथायाः उर्वश्याः स्वर्लोकगमनम्। अथ विदूषकानवेक्षया प्रभ्रष्टं मदनलेखमन्विष्यति राजनि कुपितया चेट्या सहायान्त्या काशिराजदुहित्रा मार्ग एव वायुवाहितस्य पत्रस्याधिगमः। पत्रनाशाद्राजनि दुःखिते सा लेखमर्पयित्वा भर्तुरनुनयं पादपतनं चावधीर्य शुद्धान्तमभिप्रस्थिता, ततो भीतस्य राज्ञः सविदूषकस्य निष्क्रमणम्।

तृतीये विष्कम्भके भरतशिष्ययोः संवादे इन्द्रालये प्रयुज्यमाने लक्ष्मीस्वयंवरे रूपके वारुणीभूमिकायां वर्तमानया मेनकया "कस्मिंस्ते हृदयाभिनिवेशः" इति पृष्टा लक्ष्मीभूमिकोर्वशी "पुरुषोत्तमे" इति वक्तव्ये प्रमादात् 'पुरूरवसि' इति उक्तवतीति कुपितेन भरतेन "न ते दिव्यं स्थानं भविष्यति" इत्यभिशप्ता पुनर्देवेन्द्रेण "यथाकामं आपुत्रवदनदर्शनं तं मे सांयुगीनं सहायं सखायं सेवस्व" इत्यनुकम्पितेति कथांशः संयोजितः। मणिहर्म्यगृहे राज्ञि विदूषके च समागते प्रभावच्छन्नायाः सखीसनाथायाः तत्रभवत्या उर्वश्या अभिसारिकावेषेण आगत्य विदूषकराज्ञोः रहसि मन्त्रणस्य श्रवणम्, देव्या औशीनर्याश्च प्रियप्रसादनव्रतव्यपदेशेन तत्रैवागमनम्, रोहिणीसङ्गतं भगवन्तं चन्द्रमसं कञ्चुकीविदूषकौ राजानं चाभ्यर्च्य तस्याः प्रतिगमनम्। उर्वश्याः राज्ञः समीपे आगमनम्, चित्रलेखायाश्च सूर्योपस्थानाय स्वर्गारोहणं च।

चतुर्थे, एकदा विहारं राज्ञा सह गतायाः, काञ्चन विद्याधरकन्यकामुदयवतीं प्रेक्षमाणाय राज्ञे कुपितायाः गुरुशापसंमूढायाः कुमारवनं प्रविष्टाया उर्वश्याः लताभावकीर्तनम्, सङ्गममणिश्च तन्मोक्षोपाय इति कथनं च; विरहविधुरस्य राज्ञो वने मेघमयूरमधुकरमरालपिककरिशैलसरित्सारङ्गनीपेषु प्रियाप्रवृत्तिजिज्ञासानन्तरं सङ्गममणिमधिगत्य लताभूतां प्रियामालिङ्गितवतः शापमुक्तया तया सह सङ्गमः, प्रभूतेन च कालेन स्वराजधानीं प्रत्यागमनम्॥

पञ्चमे तु गृध्रेण सङ्गममणिहरणम्, कुमारेणायुषा तन्मारणम्, कुतो मे तनयः, तस्य गोपने च को वा हेतुरिति राज्ञो विकल्पनम्, जातमात्रस्यैव सत्यवतीहस्ते उर्वश्या न्यासीकृतस्य च्यवनेन महर्षिणा निर्वृत्तक्षात्रोचितसंस्कारस्य, गृहीतधनुर्वेदविद्यस्य कुमारस्यायुषः गृध्रवधरूपाश्रमानौचित्यकारित्वात् तापसीवेषधारिण्या सत्यवत्याऽऽनयनम्, तस्य च पित्रा परिचयः, तद्दर्शनप्रमुदितेन राज्ञा समाहूताया उर्वश्या आदौ पुत्रावाप्त्या प्रमोदः, विसर्जितायां तु सत्यवत्याम् "आपुत्रदर्शनं मे वयस्येन सह यथाकामं त्वयोषितव्यमिति" महेन्द्रकृतनियमस्य स्मरणेन विषादः, कृतप्रश्नाय राज्ञे विषादहेतोः प्रख्यापनम्, तस्मिन्नेव समये कुमारस्य राज्याभिषेकनिश्चयः, वनप्रस्थानाय कृतचेतसि राजनि नारदेनागत्य "सुरासुरविमर्दो भावी, भवान्मे समरसहायः सखा, न त्वया शस्त्राणि परित्यक्तव्यानि, इयं चोर्वशी यावदायुस्ते सहधर्मचारिणी भवतु" इति महेन्द्रसंदेशस्य कथनम्, राजोर्वश्योः विप्रयोगभीतयोः समाश्वासनम् नारदेन कुमारस्यायुषो यौवराज्येऽभिषेकः। तत्पश्चात् सर्वस्मिन् सुसम्पन्ने देवर्षिः नारदः राज्ञः किमपरं प्रियं कर्तुं शक्यते इत्यनुयुज्य राज्ञः प्रार्थितां समेषां जनानां सुखसम्पत्तिं आशिषा आशंसति। एवं राजा पुरूरवाः उर्वश्या सह ससुखं वार्धक्योचितशान्तिपरायणकार्यव्यापृतः सन् शेषं वयोऽयापयत् इति॥

॥ श्रीः ॥

# ॥ नायकादिसिद्धान्तः ॥

## तत्र स्वरूपम्

प्रायेण नाटकलक्षणलक्षिततया रूपकेषु तदिदं विक्रमोर्वशीयम् नाम त्रोटकम् । तथा च दर्पणे:—

"सप्ताष्टनवपञ्चाङ्कम् दिव्यमानुषसंश्रयम् ।
त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम् ॥"

पञ्चाङ्कं यथा विक्रमोर्वशीयमिति ॥*

अत्रेदमवधेयं यत् स्वप्रतिभाविर्भूताभिप्रायानुसारिणी किल कविकल्पना न च तेनार्हति सर्वथैवेतिहासानुसरणम् । अतश्च नापेक्षते सामञ्जस्यमैतिह्येन सकलम्, ना चैतिहासिकनायकनायिकानुबन्धिनी केवलम् । तथा च महाभारतेन अभिज्ञानशाकुन्तलस्येव रामायणेन चोत्तररामचरितादीनामिवोपाख्यानभागे प्रकृतेऽपि ब्राह्मणादिभिः वैषम्ये सत्यपि काव्यचमत्कृतौ तदानन्दसन्दोहचर्वणायाञ्च न कदापि काचन क्षतिः इति ॥

**अत्र च बुधेलयोस्तनूजन्मा सोमवंशी विक्रमापराभिधानो राजर्षिः पराक्रमाकरः पुरूरवाः शठो धीरोदात्तप्रकृतिर्नायकः ।**

शठोऽयमेकत्रबद्धभावो यः । दर्शितबहिरनुरागो विप्रियमन्यत्रगूढमाचरति ॥

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥

**सहायश्चास्य विदूषको माणवकाख्यः—**

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः कलहरतिः विदूषकः स्यात् स्वकर्मज्ञः ॥

**अत्र नायिका रक्ताऽभिसारिका दिव्या साधारण्युर्वशी ।**

अभिसारिका हि:—अभिसारयते कान्तं या मन्मथवशंवदा ।
स्वयं वाऽभिसरत्येषा धीरैरुक्ताभिसारिका ॥

तस्या अप्सरोभावात् दिव्यात्वम् । प्रेयसि गाढानुरागत्वात् रक्तात्वं । साधारणीत्वं हि:—
धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ।

वेश्यात्वं च— विचित्रोज्ज्वलवेषा तु रणन्नूपुरमेखला ।
प्रमोदस्मेरवदना स्याद्वेश्याभिसरेद् यदि ॥

**अत्र प्रतिनायिका तु—कलाहान्तरिता मध्या धीरा स्वकीया औशीनरी ।**

स्वीयात्वम्:— विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ।

मध्यात्वम्:— मध्या विचित्रसुरता प्ररूढस्मरयौवना ।
ईषत्प्रगल्भवचना मध्यमव्रीडिता मता ।

---

* इह हि प्रथमाङ्के विदूषकादर्शनात् नाटकमेव विक्रमोर्वशीयं न त्रोटकमित्यपि कश्चित् ।

**धीरात्वम्:-** प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा ।
( सोत्प्रासम् साक्षेपम् । )

कलहान्तरितात्वम्:—चाटुकारमपि प्राणनाथं रोषादपास्य या ।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा ॥

**उद्दीपनविभावाश्च मलयानिलमाकन्दमुकुलवर्षासमयप्रभृतयः—**

यदुक्तम्:- तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथोदयास्तमयः ।
लताकेलिवनविहारप्रभातमधुपानयामिनीप्रभृति ।
उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ॥

**अनुभावाश्च परस्परसंवादाक्षिविक्षेपादयः स्तम्भो वैवर्ण्यं च—**
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्तितः ।

**सात्त्विकाः-** हासपुलकादयः सात्त्विकाः ।

**अत्र व्यभिचारिणस्तु आवेगौत्सुक्योन्मादचिन्तादयः ।**

आवेगः सम्भ्रमो मतः । औत्सुक्यं हि:-
इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।
चित्ततापत्वरास्वेददीर्घनिःश्वसितादिकृत् ॥

उन्मादः:- चित्तसम्मोह उन्मादः कामशोकभयादिभिः ।
अस्थानहासरुदितगीतप्रलपनादिकृत् ॥

चिन्ता- ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत् ।

**अत्र रतिः स्थायी भावः ।**
अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः ।
आस्वादाङ्कुररूपोऽसौ भावः स्थायीति सम्मतः ॥

तत्र शृङ्गारस्य स्थायी भावो रतिः "रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्" ।
( प्रवणायितं हि जलमिव सरलं सत्स्वभावतः प्रवृत्तमिव स्थितम् )

**सम्भोगः शृङ्गारोऽङ्गी रसः ।**
शृङ्गं हि मन्मथोद्भेदः तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार उच्यते ॥
(अयं च श्यामवर्णो विष्णुदैवतः कीर्तितः ।)

सम्भोगत्वम्:- दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।
यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः ॥

(अङ्गी प्रधानम् ।)

**परश्चात्र हास्यविप्रलम्भादयोऽङ्गरसाः ।**

अत्र हि सम्भोगस्य चमत्कारकारित्वात् विप्रलम्भो निपुणैर्दीयते—यदुक्तम् "न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान् रागो विवर्धते" इति । विप्रलम्भो हि—यत्र तु रतिः प्रकृष्टानामीष्टमुपैति विप्रलम्भोऽसौ ।

तत्र इह साक्षाद्दर्शनाद् पूर्वरागः "श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः। दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते।" तत्र च रागस्य सप्त दशाः प्रोक्ताः— अभिलाषश्चिन्ता स्मृतिः, गुणकथनोद्वेगसंप्रलापाश्चोन्मादः......इति।

**अत्र च पूर्वरागे माञ्जिष्ठो रागः—**

मञ्जिष्ठारागमाहुस्तद्यन्नापैत्यतिशोभते।
इन्दुमत्या यथाजस्य दमयन्त्या नलस्य वा॥

तत्र च "विप्रलम्भः पुनरपि प्रवासाख्यः शापजन्यः संभ्रमेण च।
प्रवासो भिन्नदेशत्वं कार्याच्छापाच्च सम्भ्रमादिति॥"

अत्र चतुर्थेऽङ्के उर्वश्या सह विहरता पुरूरवसा उदयवती नाम विद्याधरकन्यका क्षणं दृष्टा, तत्कुपिता उर्वशी मित्रावरुणशापाच्च हतविवेका कुमारवनं प्रविष्टा अतः अत्र संभ्रमाच्च शापाच्च प्रवास इति। अत्र दिव्यः संभ्रमः तेन जातः प्रवासः। यथा "दिव्यनाभसमानुष्योत्पातजात् सम्भ्रमात्त्रिधा" इति। क्वचन हास्यश्चाङ्गरसः—"विकृताकारवाग्वेषचेष्टादेः कुतुकाद्भवेत्। हास्यो हासस्थायिभावः श्वेतः प्रमथदैवतः" विदूषकादिभिः सहायैः सार्धं हासः।

**रीतिः पाञ्चालीः—**

पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत्—उपकर्त्री रसादीनाम्।
पाञ्चालीः—वर्णैः शेषैः पुनर्द्वयोः। समस्तपञ्चषपदो बन्धः पाञ्चालिका मता॥
द्वयो वैदर्भीगौड्योः भिन्नैः वर्णैरित्यर्थः। आत्यन्तिकौजाः स्वभावलालित्यपूर्णैर्वर्णैः भिन्नो बन्धः इति।

**गुणो माधुर्याख्यः**—"रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा। तथा गुणा" इति।
माधुर्यं चः— चित्तद्रवीभावमयोल्हादो माधुर्यमुच्यते।
तत्र वर्णास्तुः—"मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना।
रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः।
एतादृशा वर्णाः माधुर्यव्यञ्जनायापेक्ष्यन्ते इत्यर्थः।
"अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा॥ इति।

**प्रस्तावना प्रयोगातिशयाख्याः—**

चित्रैः कार्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयम् नाम्ना प्रस्तावनाऽपि सा॥

प्रयोगातिशया—यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा॥

**दूती चित्रलेखा निसृष्टार्था—**

कार्यप्रेष्येति दूतीलक्षणम्।

निसृष्टार्थत्वं हिः—

उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम्।
सुश्लिष्टं कुरुते कार्यं निसृष्टार्था तु सा स्मृता॥ इति।

अभिसरणस्थानं च उद्यानवाटीप्रभृतिकं यदुक्तम्—

"क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् ।
माऽऽलापश्च श्मशानं च नद्यादीनां तटी तथा" इत्यादयः ।

वृत्तिश्चात्र कैशिकी—

शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः ।
...............सर्वनाट्यस्य मातृका ॥ इति धनञ्जयः ।

कैशिकीलक्षणं यथा भरतः—

या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसङ्कुला पुष्कलनृत्यगीता ।
कामोपभोगप्रभवोपचारा सा कैशिकी चारुविलासयुक्ता ॥

नान्दी चात्र द्वादशपदा पत्रावली ।

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैर्युतेति ॥

"यत्र बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः । श्लेषेण वा समासोक्त्या नाम्ना पत्रावली तु सा ॥"

सङ्क्षेपेण तु—

नायकश्चात्र पुरूरवाः शठो धीरोदात्तः, रक्ताभिसारिका दिव्या साधारण्युर्वशी, कलहान्तरिता मध्या धीरा स्वकीयौशीनरी च नायिके आलम्बनविभावाः । मलयानिलचूतमुकुलादयः उद्दीपनविभावाः । परस्परसंवादाक्षिविक्षेपादयश्चानुभावाः । आवेगौत्सुक्यचिन्तादयो व्यभिचारिणः । रतिः स्थायी । स्तम्भवैवर्ण्यादयः सात्त्विकाः, सम्भोगशृङ्गारोऽङ्गी, हास्यविप्रलम्भादयोऽङ्गरसाः । विदूषकादयः सहायाः, रीतिः पाञ्चाली, गुणो माधुर्याख्यः, प्रस्तावना प्रयोगातिशयाख्या, दूती चित्रलेखा निसृष्टार्था, अभिसरणस्थानं उद्यानवाटी, माञ्जिष्ठो रागः, कैशिकी वृत्तिः, द्वादशपदा पत्रावलीसमाख्या नान्दी । ऋष्याशंसितम् भरतवाक्यम् ।

॥ इति ॥

तदयं सङ्ग्रहश्लोकः—

धीरोदात्तः शठोऽपि द्विजपतिकुलजो नायको विक्रमाख्यो
वेश्या दिव्याभिसारिण्यनुगतहृदया नायिकात्रोर्वशी च ।
सम्भोगाख्यो रसोऽङ्गी पुनरपररसो विप्रलम्भश्च हास्यः
पाञ्चाली नाम रीतिर्भुवननिरुपमो माधुरीसान्द्रबन्धः ॥ * ॥

अथ वा—

धीरोदात्तशठोऽप्युदारमतिमान्नेता नृपो विक्रमो
दिव्योर्वश्यभिसारिकाऽतिरुचिरा साधारणी नायिका ।
सम्भोगोऽङ्गिरसश्च हास्यविरहावङ्गे रसौ त्रोटके
पाञ्चाली किल रीतिरत्र मधुरो बन्धः कवेर्विश्रुतः ॥

# पात्राणां स्वभाववर्णना।

तत्रभवान् पुरूरवाः—

अयं हि सकलसामन्तमौलिमणिरञ्जितपादपीठो विलक्षणगुणगणैकभाजनो निखिलदेवतारूपस्वरूपः सकलकलोऽपि अविकलमतिः अमित्रजिदपि मित्रजेता, विचारवान् अपि चारदृष्टिः, कुपतिरपि कलत्रवल्लभः, आयतलोचनोऽपि सूक्ष्मदर्शनः, नलपृथुप्रभोऽप्यनलपृथुप्रभः, समित्संबन्धस्फुरितप्रतापोऽपि अकृशानुभावोपेतः, पृथ्वीमय इव स्थैर्ये, सवित्रमय इव तेजसि, भारतीमय इव वचसि, लक्ष्मीमय इव सौन्दर्ये, सुधामय इव माधुर्ये, सर्वकालमुर्व्या भुजङ्गतया भ्राजितः शत्रुघ्नोऽपि विश्रुतकीर्तिः सार्वभौमः सन्ततपराक्रमो विक्रमो नाम सोमवंशीयो राजा रसाब्धिरधेऽस्मिन् काव्ये तत्रभवता कविवरेण्येन नायकीकृतः। तस्य सूर्योपस्थाननिवृत्तेतिपदेन **धर्मधुरन्धरत्वं, सत्यसन्धत्वम्, वीरत्वम्,** "तेन हि मुच्यतां विषादः" इत्यनेन स्ववीर्यविश्वस्तत्वं "उपस्थितसाम्परायो महेन्द्रोऽपि मध्यमलोकात्सबहुमानमानाय्य तमेव विबुधविजयाय सेनामुखे नियुङ्क्ते" इति मेनकावाक्येन, 'अस्माकं चायं सांयुगीनः सहायः' इति महेन्द्रवाक्येन **इन्द्रसदृशपराक्रमशालित्वम्, महेन्द्रसखित्वम्,** "त्रिलोकरक्षी महिमा हि वज्रिणः" इत्यनेन निरभिमानित्वम्, "मन्दारकुसुमदाम्ना गुरुरस्याः सूच्यते हृदयकम्पः" मुहुरुच्छ्वसतामध्ये परिणाहवतोः पयोधरयोः तथा चागामिना "स्थाने खलु नारायणमृषिं विलोभयन्त्यः तदूरुसंभवामिमां प्रेक्ष्य व्रीडिता" इति अनेन पद्येन "अस्याः सर्गविधावि"ति पद्येन च **सहृदयत्वम्, प्रेमाङ्कुराङ्कुरितचित्तत्वम्,** "चित्ररथसन्देशेन **महेन्द्रोपकारित्वम्** "ननु वज्रिण एव वीर्यमेतदित्यनेन **विनयित्वम्,** "आ लोकान्तात् प्रतिहततमोवृत्तिरासां प्रजानां तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः" इति वैतालिकवाक्येन **सूर्योपमत्वम्,** "विविक्तादृते नान्यदुत्सुकस्य शरणमित्यनेन **गाढप्रेमवत्त्वम्,** "प्रतिगृहीतं ब्राह्मणवचनमित्यनेन" **विप्रपूजकत्वम्,** "तुल्यानुरागपिशुनं ललितार्थबन्धं पत्रे निवेशितमुदाहरणं प्रियायाः, उत्पक्ष्मलं मम सखे मदिरेक्षणायाः तस्याः समागतमिवाननमाननेन" इत्यनेन **सरसालङ्कारिकत्वम्** "मया नाम जितं यस्य त्वयायं जयमुदीर्यते" इति **नायिकायां आदरभाववत्त्वम्,** "सेव्यो जनश्च कुपितः कथं दासो निरपराधः" इत्यनेन सप्रणयत्वम् देव्या दासत्वकल्पनापुरःसरम् **याथार्थ्यप्रतिपादकत्वम्,** "विज्ञाप्यतां देवो यस्तव च्छन्द" इति अनेन **दक्षिणत्वम्, देव्या आज्ञासंवाहकत्वम्** "भगवन् ऋक्षराज हरचूडानिहितात्मने नमस्ते" इत्यनेन **आस्तिकत्वम्, देवार्चकत्वम्,** "अभिव्यक्तायां चन्द्रिकायां किं दीपिकापौनरुक्त्येन" इत्यत्र रहसि प्रियसंलिलपिषया परिजनवर्जने दर्शित**नीतिप्रवणत्वम्** "अयमास्पन्दितैर्वायुराश्वासयति दक्षिणः" इत्यनेन शकुनशास्त्रेऽपि **श्रद्धासमेतत्वम्,** "उपस्थिता देवी, संवृताकारमास्तामित्यनेन औशीनर्याः अपराधाद् **भीतत्वम्,** "अनुग्रहो नोपराधः" इत्यत्र देव्याः **च्छन्दानुवर्तित्वम्,** "अनेन कल्याणि मृणालकोमलं

व्रतेन गात्रं ग्लपयस्यकारणम्, प्रसादमाकांक्षति यस्तवोत्सुकः स किन्त्वया दासजनः प्रसाद्यत" इत्यनेन चाटुवचनैराराधकत्वम्, "नाहं पुनस्तथा त्वयि यथा हि मां शङ्कसे भीरु" इति आपाततः **निर्दोषित्वकल्पनाय प्रार्थनापरत्वम्**, तत्तादृशम् महिष्याराधनवेलायामपि **नायिकायां गाढतयानुप्रविष्टहृदयत्वम्** "अन्यत्कथं कलितं मम गात्रकं करस्पर्शादिति" अनेन **सत्यप्रेमवत्त्वम्**, **सात्विकभाववत्त्वम्**, "यदेवोपनतं दुःखात् सुखं तद्रसवत्तरमित्यनेन" प्रियाप्राप्त्या **विलक्षणानन्दपात्रत्वम्**, उदयवतीनामधेयायाः विद्याधरदारिकायाः प्रेक्षणेन सूचितं **चञ्चलचित्तत्वम्**, चतुर्थाङ्के च मनःसौधपाञ्चालिकायाः हिमकरकिरणावदातवर्णायाः प्रियाया उर्वश्या विप्रयोगेन **सोन्मादत्वम्**, संगममणिना सहयोगेन **प्रसन्नत्वम्**, लताभावमवाप्तायाः प्रियायाः ऽआलिङ्गनेन स्पर्शसुखानुभवेन **प्रियेयमिति सनिश्चयत्वम्**, प्रियाविरहकालेऽपि **धैर्यधारणक्षमत्वम्**, मणेः प्रियावाप्तिहेतुत्वात् तस्मै **कृतज्ञत्वम्**, सन्मानकत्वम्, आयुषः स्वतनयस्य दर्शनेन विस्मितत्वम्, "सर्वाङ्गीणः स्पर्शः सुतस्य किलानेन मामुपनतेन । आल्हादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव" इत्यनेन सूचितं तनये सहजस्नेहसन्तानप्रवृत्तिमत्त्वम्, "अद्याहं पुत्रिणामग्र्यः जयन्तेन पुरन्दरः" इत्यनेन **पुत्रावाप्तिसन्तुष्टत्वम्**, उर्वश्याः भाविनं वियोगं दृष्ट्वा **मूर्च्छितत्वम्**, "प्रियाविप्रयोगेन तपसे वनगमनं वरमि"ति मत्वा सोमवंशानुसदृशं वनगमनाय **कृतबुद्धित्वम्**, "नहि सुलभवियोगा कर्तुमात्मप्रियाणि प्रभवति परवत्ता शासने तिष्ठ भर्तु"रित्यनेन **न्यायपथप्रवर्तकत्वम्**, कुमारस्य यौवराज्ये प्रतिष्ठापनेन अलौकिक**पुत्रस्नेहवत्त्वम्**, **सुसमीक्ष्यकारित्वम्**, भूतेषु सानुकम्पत्वम्, नितान्तललितललनासम्भोगभोग्यभाग्यवत्त्वम्, नायिकायां स्थिरस्नेहवत्त्वम्, सभ्यत्वम्, सरसत्वम्, एवमादि नानागुणगणं वहमानः नाटकीयवस्तुसमीचीनेन धीरोदात्तलक्षणेनोपेतः नारदस्य प्रियकारितया प्रसन्नान्तरात्मा स्वकार्यनिर्वहणेन सामाजिकान् मुग्धानद्धा सम्भावयितुं प्रवृत्तः सहृदयचेतांसि प्रीणयन् नाटकस्य नायकत्वं साधु धारयन् कवये प्रशंसामाहरन् विलसतितराम् ।

**उर्वशी**—इयं चाप्सरसां प्रमुखा अशेषरमणीयरमणीजनललामभूता अलङ्कारस्याप्यलङ्करणात्मिका, मारस्य सुकुमारप्रहरणभूता, सौन्दर्यसारसर्वस्वनिकेतनं, रामणीयकत्वोपेतमिन्दोरधिदेवतात्वमाप्ता, सङ्कल्पयोनेः सङ्कल्पसिद्धिरिव, शृङ्गारसुधाभृङ्गारस्य निस्यन्दधारेव, रङ्गशाला रागशैलूषस्य, मनोजगारुडिकस्य वशीकरणविद्या, धातुवादिकस्य रससिद्धिवेदः सौभाग्यसङ्गिलावण्यसन्दानितवपुषी अस्य त्रोटकस्य नायिका । केशिनाहृतायां राज्ञा पुरूरवसा च समुद्धृतायां तस्यां चक्षुषी उन्मील्य "किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मी"त्यनेन तस्याः साधारणस्त्रीत्वं व्यज्यते । "उपकृतं दानवेन्द्रसंरम्भेणेति" वाक्येन राज्ञे तस्याः कृतज्ञता प्रख्यापिता । "क्व मे सखीजनः" इत्यनेन सखीवृन्दे नितान्तप्रेमवत्त्वम् स्निग्धत्वं च तस्या गम्यते । समायाते तु चित्ररथे गमनायानुज्ञां गृहीतुं कृतमनस्कया तया स्वस्य व्यवहारकोविदत्वं व्यजिज्ञपि । द्वितीयाङ्के राजानं उपगच्छन्ती सा चित्रलेखां "दृढं लग्ना

सा वैजयन्ती मोचयितुमशक्येति'' वचनस्मारणेन वाक्चातुरीं स्वीयां व्यभासयत् । "राज्ञो भवनं स्थानान्तरगतः स्वर्गः इति" शंसन्त्या प्रियपक्षपातस्तया प्रकटितः । "प्रथमदर्शनादपि सविशेषं प्रियदर्शनो महाराज" इति अनेन तस्या औत्सुक्यं सूचितम् । "न तावदुपसर्पिष्ये, किमयं महाराजो विविक्ते मन्त्रयते" इत्यनेन तस्याः कपटपटुत्वं "राज्ञः कियत्प्रेमेति" गाहितुं सयत्नत्वं च गम्यते । "रोचते ते मेऽभिसारिकावेष" इत्यनेन अभिसारिकात्त्वं प्रकटितम् । राजमहिष्यां समायातायाम् तस्याः सौन्दर्यं, राज्ञा आदरणीयत्वं, तस्यां च राज्ञः प्रगाढप्रेमाणमपि विलोक्य असूयाहीनत्वम्, राज्ञा सह समागमादर्वाक् महिष्यनुमतं मे समागमं न वेति जिज्ञासावत्यास्तस्याः भावराहित्यं च व्यक्तम् । किन्तु राज्ञः परिणीत-महिषीं विहाय परस्याः विद्याधरकन्यकायाः समीक्षणे असहिष्णुत्वं मानिनीत्वं चात्मनः प्रकाशितवती । चतुर्थाङ्कसमाप्तौ चिरकालानवस्थानाय क्षमापयत्यात्मानं राज्ञोऽनुग्रहाय । राज्ञा सह वियोगमाशङ्कमानया तया तद्वियोगासहिष्णुत्वं बुद्ध्वा जातमात्रेणैव आत्मजेन सह वियोगो वरमिति दर्शयन्त्या राजन्यगाधस्नेहवत्त्वं स्वीयं प्रख्यापितम् । पुनरपि "जेट्ठमादरं वन्देहीति" पुत्रमाज्ञापयन्त्यास्तस्या औशीनर्याः कृते मनसि सन्मानभाववत्त्वं सपत्नीभावराहित्यञ्च गम्यते । इत्थं साधारणी अपि बहुसद्गुणभाजनं नायके अविचलानुरागपिशुनेन समुदाचारेण व्यवहरन्ती नायिकाधुरं सम्यग्वहमाना स्वीयभावानुभावैः प्रेक्षावतां प्रेक्षकाणां मनांसि समुल्लासयन्ती नाटकीयवस्तुगतमाकर्षकत्वं भृशमुपबृंहयतितराम् ॥

**औशीनरी—**

इयं काशिराजस्य दुहिता राज्ञः पुरूरवसः पट्टाभिषिक्ता महिषी । इयं स्वभर्तारं अन्यनारीसङ्क्रान्तचेतसं परिज्ञाय तं ततो निवर्तयितुमशक्नुवाना, स्वभागधेयान्येवाधिक्षिपन्ती स्वमनसि शोकक्रोपोद्भावं नियन्त्रयन्ती, शान्तिमेव चरममुपायमधिगम्य राज्ञो मार्गेऽन्तरायमकुर्वती कालमयापयत् । किन्तु "हञ्जे निपुणिके, सत्यं किं त्वया लतागृहं विशन्नार्यमाणवकसहायो दृष्टो महाराजः–इतः प्रभृति" उर्वशी-निहितहृदयाय राज्ञेऽभ्यसूयति तत्रभवती तपस्विनी राज्ञी । भूर्जपत्रं उर्वशी-ललिताक्षरं स्वयं वाचयित्वा तत्कृते व्यग्रे तु राजनि तत्तत्र तस्मै प्रयच्छन्ती तं भृशं ह्रेपयति । पश्चाच्च राजानं विहाय सा गता, तेन तस्या मानिनीत्वं प्रकाशितम् । पुनश्च "आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया सम्पादनीयः तत्क्षणं मुपरोधः सह्यताम्, तथा च यां नारीं कामयते आर्यपुत्रस्तया सहाप्रतिबन्धेन वर्त्तितव्यमि"ति व्रतग्रहणेन च साक्षेपपरिभाषणगर्भं स्वीयं व्यवहारं प्रकाशयन्ती अन्ते राज्ञः तस्या मृगतृष्णिकायाः पराङ्मुखत्वमशक्यं वीक्षन्ती तथैव तस्य कुशलं प्रार्थयन्ती सती सा विविक्तवासमाश्रितवती ॥

**विदूषकः—**

दृश्यते हि विविधेषु संस्कृतेषु रूपकेषु हास्यरसोद्दीपकः वाचालः अप्रतिहत-बुद्धिः अद्भुतप्रतिभोद्भासितधीः नर्मकर्मसचिवः द्विजातिप्रवीणो भोजनप्रियः आङ्ग्ल-रूपकेषु इव (clown) विदूषकाख्यः पात्रविशेषः । तस्य राज्ञा सह वयस्यभावः

अन्तःपुरचारित्वञ्च भवतः । द्वितीयाङ्कप्रारम्भे निपुणिकायां राजरहस्यमवगन्तुं विदूषकमनुसन्धातुं च यतमानायां सरलतया राजरहस्यस्य समुद्घाटनेन तस्य सरलस्वभाववत्त्वं अनियन्त्रितजिह्वत्वं च प्रकटीक्रियते । "किं तत्रभवत्युर्वशी अद्वितीया रूपेणेति" राजानं पृच्छन् स्वं नर्मसचिवभारमावहति । "महानसं गच्छामः, दिष्ट्या मम खलु बुभुक्षितेन स्वस्तिवाचनिकमिव लब्धं भवतः समाश्वासनकारणम्, त्वरयस्वास्य भोजनम्, पित्तोपशमनेन स्वस्थो भवतु, एष खण्डमोदकसदृश उदितो राजा ओषधीनाम्, अहमपि यदा शिखरिणीं रसालं च न लभे तदेव चिन्तयन्नासादयामि सुखम् इत्येवं विविधैः वाक्यैः स्वं भोजनपरायणत्वं व्यक्तम् । तथा च स स्वैरूप्यस्य मूर्खत्वस्य च अभिज्ञः एव । भूर्जपत्रप्रभ्रंशेन स्वानवधानता प्रदर्शिता । "गतमुर्वशीमार्गेण दिव्यं भूर्जपत्रं" तथा च "एवं मया जिह्वा संयन्त्रिता येन भवतोऽपि नास्ति प्रतिवचनमि"त्यनेन वाक्चातुर्यं गम्यते । "यदा भवत्या मुखकमलं प्रेक्षिष्यते ततो निवर्त्तयिष्यते" इति मधुरालापेन देव्या औशीनर्याः चाटुकारित्वम् द्योत्यते । "भो ! ब्राह्मणसंक्रामिताक्षरेण ते पितामहेनाऽभ्यनुज्ञातोऽसि । तदासनगतो भव । येनाहमपि सुखासीनो भवामि ।" इत्यनेन राजानमपि वयस्यतया यथाकथमपि वक्तुं पारयति । विदूषकश्च राज्ञः प्रियवयस्यभावेन सदैव सुखं कामयमानः तस्योत्तरोत्तरसन्तानप्रतिसन्तानवृद्धिमीप्समानः निस्सन्ततित्वमेव केवलं दुःखकारणं मत्वा विचारपरायणो भवति । तथा च पुत्रसंवरणे उर्वश्याः कारणं किमित्यजानति राजनि विदूषकं पृच्छति सति "मा वृद्धां राजा मां परिहरिष्यतीति" परिहासं कुर्वन् मध्ये मध्ये रसमुपस्कुर्वन् सामाजिकानां चेतांसि रञ्जयन् स्वावश्यकतां अनिवार्यां बोधयन् नाटकीयवस्तु परमुपकरोतीति ॥

**चित्रलेखा—**

तत्रभवत्या उर्वश्याः प्रियसखी चित्रलेखा "सखि समाश्वसिहि समाश्वसिहि कथमुच्छ्वसितमात्रसम्भावितजीविता अद्याप्येषा संज्ञां न लभते" इत्यादिवाक्यैः उर्वशीविषयकं हृद्गतं गाढं प्रणयं ज्ञापयति । "अनप्सरेव प्रतिभासी" ति वाचा उर्वशीं स्वीयाप्सरस्त्वं बोधयन्ती स्वाभिमानं मानवीविशेषत्वं च व्यनक्ति । प्रियसख्या "किमपि परतोऽपसरे"ति कृतायां याचनायां, चित्रलेखा राजनि उर्वश्याः प्रणयप्रसरं जानती; "नाहं शक्नोमि" इति वाचमाददती प्रियसख्याः प्रियकारित्वं बोधयति । ततश्च लताविटपे लग्नां एनां वैजयन्तीं मोचयेति प्रार्थितया तया "दृढं खलु लग्ना सा अशक्या मोचयितुम्" इति भणन्त्या स्वसहृदयत्वं, हासपरत्वं च व्यजिज्ञपि । पश्चाच्च द्वितीयाङ्के "कुत्र खल्वनिर्दिष्टकालं गम्यते" इति पृच्छया उर्वश्याः सा अपरमिव हृदयमासीदिति विश्रम्भभाजनत्वं प्रकटीकृतम् । समये समये च उर्वशीकृतं विचारमनुमोदमाना सा स्वदाक्षिण्यं भृशमेव सूचयति । महाराजे विक्रमे "क्वास्ते ते प्रियसखीति" पृच्छति, ननु प्रथमं मेघराजिर्दृश्यते पश्चाद् विद्युल्लतेति वदन्त्या तया स्वीयं वचनचातुर्यं मधुरालापित्वं च द्योतितम् । प्रथमाङ्कद्वितीयाङ्कयोः समाप्तौ च राज्ञे स्वाभिप्रायस्य विज्ञापनाय उर्वशी चित्रलेखामेव नोदयति, एतेन चित्रलेखायाः सहायकत्वं अर्थसंसाधकत्वं निसृष्टार्थत्वं च द्योत्यते । "कीदृशो मे

अभिसारिकावेषः" इति पृच्छन्त्यै उर्वश्यै "नास्ति मे वाग्विभवः प्रशंसितु"मिति ब्रुवाणा चित्रलेखा स्वां विनोदवृत्तिं शंसति। तृतीयाङ्के च "क्रीडिष्ये तावदेतया सह" अनेन तस्याः सखेलत्वं सदैव प्रसन्नचित्तत्वम् स्फुटमेव। तथा च तत्रैव सम्भोगयोग्यं विक्रमोर्वश्योः सम्मेलनं घटयित्वा अपसरणेन सा समयानुसाराचारं ज्ञापितवती। उर्वश्या विक्रमेण सह सति विप्रयोगे, तस्या अपि पीडितत्वप्रकाशनेन प्रियसखी-समुचितं सहानुभूतिमत्त्वं, सुखदुःखसहभागित्वं प्रीतिलतापोषकत्वं च स्फुटमवगम्यते। सा च प्रियसखीसमुचितसकलगुणगणसंयुता बभूवेति स्पष्टतरं लक्ष्यते सहृदयैः त्रोटकस्यास्य पर्यालोचनेनेति।

**कुमारः—**

आयुः जनकस्य स्पर्शमेव सम्भाव्य "उत्सङ्गे वृद्धानां गुरुषु भवेत्कीदृशः स्नेहः" इति वचनेन स्वाभाविकीमेव प्रीतिसन्ततिमनुभवति। "तात वन्दे" इत्यनेन तस्य विनयित्वं प्रकाश्यते। च्यवनाश्रमं प्रति गच्छन्त्यै तापस्यै, तामेवाम्बां मन्वानेन कुमारेण "इतो मामपि नेतुमर्हसीति" बालभावस्य सदृशमेव प्रोक्तम्। शिखण्डिनं प्रेषयेत्यनेन स्वीयं आरण्यकोचितं चित्तं तेन प्रकटीकृतम्। कुमारं राज्येऽभिषेचयते राज्ञे "नार्हति तातः नृपपुङ्गवधारितायां धुरि दम्यं नियोजयितुमिति" सविनयं निवेदयता कुमारेण स्वीयं बुद्धिमत्त्वं, नयवत्त्वं, विनयवत्त्वं च सममेव प्रकाशितम्।

शेषाणां गौणानां पात्राणां चारित्र्यन्तु नातीव चित्रं, तथा च सौकर्येणैव भावयितुं शक्यमतः ग्रन्थगौरवभिया नेह विवेचितम् सहृदयैश्च यथापेक्षमूह्यम्॥

---

## समालोचना।

विक्रमोर्वशीयं नाम त्रोटकं तत्रभवता श्रीमन्महाकविकालिदासेन विरचितम्। अस्य कथासन्दर्भादिकाव्यवैभवमतिमात्रं रमणीयम्। काव्येऽस्मिन् सहृदयहृदय-द्रावीणि सन्ति प्रभूतानि ललितमधुराणि पद्यानि। विशेषतश्च तुरीयाङ्के विरहविधुरस्य राज्ञः असन्निहितप्रेयसीसमन्वेषणप्रकारस्तु सचेतसां मनसां सम्मोहनमेव। स्वाभाविकवर्णनापाटवं तु कविवरेण्यस्य सुतरां श्लाघ्यम्। यथा हि प्रियप्रसादनार्थमेष्यन्त्यां तत्रभवत्यामौशीनर्यां विदूषकवचनं निशम्य दिशमैन्द्रीं विलोक्य राज्ञः उक्तिः

"उदयगूढशशाङ्कमरीचिभिस्तमसि दूरतरं प्रतिसारिते।
अलकसंयमनादिव लोचने हरति मे हरिवाहनदिङ्मुखम्॥"

अत्र हि उदयगिरिं समारुरुक्षोः शीतकिरणस्याभिख्यां वीक्ष्य संयमितालकजालाया अनवद्याङ्गनायाः मुखसुषुमां मनोहरायाः दिशः उपरि नायिकात्वेनारोपयतः सुकवे-रुक्तिः प्रत्यक्षमेव कविताविलाससमास्वादसमुल्लसितानां मनांसि प्रीणयति, एतद्धि एतादृशकल्पनाकुञ्जकोकिलस्य कवयितुर्लेखिनीमृते नान्यत्र सुलभमिति स्वयमध्येतारः एव प्रमाणम्।

इह हि प्रथमाङ्क एवादौ उर्वशीपुरूरवसोः परिचयसमये यदुर्वशी चन्द्रवंशा-वतंसस्य महाराजपुरूरवसः स्वर्लोकालभ्यविक्रमशालित्वात्, केशिदानवोद्धरणोपकारित्वाद्वा परिहसितमारसुकुमाराभिरामरूपवैभवाद्वा दिव्योपभोगपरितृप्ताप्सरा सत्यपि

मानुषीविलक्षणा साधारण्यपि प्रथमसन्दर्शनावसरे एव तस्मिन् शीलशालिनि विक्रमवति पार्थिवे सुतरां दृढं लग्नेति सहृदयधौरेयाणां मनांसि दुष्यन्तशकुन्तलयोः प्रथमप्रेमप्रसरापेक्षया भृशं सभाजयतीति निर्विवादम्। शाकुन्तले पूर्वरागसमये कविवरेण न किञ्चिदपीत्थं प्रतिपादितं येनैतादृशी प्रणयगम्भीरता नायकयोः प्रकाशिता स्याद्यथेह "दृढं लग्ना न मोचयितुं शक्या एकावलीति" सहासमसहचरीवचनस्य "स्मर्तव्यं खल्विदं वचनमिति" हृदयभावोद्बोधकं उत्तरवाक्यं दृढप्रणयताशालित्वं व्यनक्ति। भुक्तदिव्योपभोगायाः कस्याश्चन साधारण्याः दिव्याङ्गनायाः मानवपदं भजमाने राजनि गूढप्रणयप्रसरस्यावश्यमेवाधिकतया मनोहारित्वमनुभववीथीं सचेतसामवतरति। अत्र च प्रथमपरिचय एव राज्ञो महेन्द्रसदृशानुभाववत्त्वं उर्वश्यां परमासक्तिं गमयति। पुनश्च राज्ञः उर्वशीप्रतिगमनानन्तरं या तान्तदशा सा शकुन्तलासुकुमारकुमारीभावापहारकस्य दुष्यन्तस्य स्वकृतकर्मविस्मरणपरायणस्यापेक्षया निगूढप्रणयवत्तरत्वं व्यञ्जयन्ती रसज्ञरास्वादनं प्रभूतमुपस्करोति। पुनश्च गृहीतनेपथ्यायाः नायिकायाः पुरूरवोविषयकं प्रेम महेन्द्रसभायामपि विस्मृतात्मदेशकालाव्यवस्थाबोधकं प्रकाशयन्त्याः लब्धशापायाः स्वहृदयहारिणा नायकेन सह तस्याः समागमकारकं शापमभिनिवेशयन् महाकविः दुष्यन्तशकुन्तलयोः विप्रयोगकारिणः शापस्य संघटनापेक्षयाधिकमेव काव्यकलाकुशलत्वं स्वीयं गमयति। "विप्रयोगं विना न रतिः पुष्टिमश्नुते" इति राद्धान्तमनुरुध्य कवीशेनेह तुरीयाऽङ्के करुणभावतरुं भृशं सिञ्चता, नायकस्यानवरतम् नायिकागतानवच्छिन्नस्मृतिसन्ततिप्ररोहेण तं पल्लवयता, तदीयगवेषणपरायणस्य राज्ञः प्रतिपदस्खलनचारुरूपैः चेतनाचेतनाविवेकनिबन्धनैर्गिरिमयूरसारसादिभ्यः प्रेयसीसन्दर्शनप्रार्थनैरुन्मेष्य तमेव भावतरुं कुसुमितं विदधताऽनुपममेघनगानां स्वभाववर्णनसन्दानितं भगवता सोमेनोद्भावितसङ्गमनीयमणियोगेन तयोः झगिति संयोगं कारयता प्रमातॄणां अमन्दानन्दाभिनन्दनरूपया फलसम्पदा स एव योजितः। चरमाङ्के च नारदमुनिसमागमतनयावाप्तियावज्जीवप्रेयसीसंयोगलाभाद्यभिमतं सर्वं समवायेनैव सङ्गमय्य स्वल्परूपेणापि त्रोटकेन तथा सामाजिकान् कविः सभाजयति यथा कदापि महागरिममताऽपि काव्यप्रबन्धेनासुलभं जायत इति कविभूषामणेरनुपमलेखनी सौहार्दहृद्या कवितासुमनस्ततिरियं तन्वीव सुकुमारा केषां सुमनसां चेतांसि न द्रावयतीति कविताकमलिनीसमुपभोगभाग्यभाजो मधुरससङ्गभृङ्गा एवात्र प्रमाणम्॥

---

## नाटकीयवस्तूद्गमः।

तत्रभवान् नरपतिचक्रचूडामणिः प्रतिष्ठानाधीशः पुरूरवा मनुना सार्धमादौ ऋग्वेदे भगवतः अग्नेः मित्रत्वेन सुकृतनाम्ना समाख्यातः। तस्य देवाङ्गनायामुर्वश्यां प्रणयः, पुनः सम्मेलनाय चाभ्यर्थनम् वर्णितम्। (ऋक्-१०-९५) तत्रैव पञ्चनवतितमेऽष्टादशे सूक्ते देवास्तमिलायाः पुत्र इति सम्बोध्य स्वर्ग लोकेऽनन्तसुखावाप्तये, तया चाप्सरसा समागमाय यज्ञैर्भावयितुं प्रेरयामासुः। शतपथब्राह्मणेऽपि अयमेवार्थः प्रतिपादितः।

यथा वेदे "ऐलोर्वशीतिहासोऽत्र वैशद्यार्थं प्रवर्ण्यते । मित्रश्च वरुणश्चोभौ दीक्षितौ प्रेक्ष्य चोर्वशीम् । रेतः सिषिचतुः सद्यस्तत्कुंभे यदधुस्तदा । तां शप्तवन्तौ मनुजभोग्या भूमौ भवेति तौ । अत्रान्तर इलो राजा मनोः पुत्रैश्च संयुतः । मृगयां संचरन् साश्वो देवीक्रीडं विवेश ह । यत्र देवं गिरिसुता सर्वैर्भाविरतोपयत् । अत्राविशन् पुमान् स्त्री स्यादित्युक्त्वा तत्र चाविशत् । स्त्री भूत्वा व्रीडितः सोऽगात् शरणं शिवमञ्जसा । इयं प्रसाद्यतां राजन्नित्युक्तः शम्भुना नृपः । जगाम शरणं देवीं आत्मनः पुंस्त्वसिद्धये । अकरोत्सा नृपं देवी षण्मासात्प्राप्तपुंस्त्वकम् । ततः कदाचित् स्त्रीकाले बुधः सौन्दर्यमोहितः । अप्सरोभ्यो विशिष्टां तामिलां सङ्गतवान् मुदा । तदेलायां सोमपुत्राज्जातो राजा पुरूरवाः । तमुर्वशी तु चकमे प्रतिष्ठानपुरे स्थितम् । तल्पादन्यत्र नग्नं त्वां दृष्ट्वा यामि यथागतम् । सुताावुरणकौ त्वञ्च समीपं कुरु मे छुनम् । इति सा समयं कृत्वा रमयामास तं नृपम् । चतुरब्दे गते रात्रौ देवैरुरणकद्वयं । हृतं तस्य ध्वनिं श्रुत्वा नग्न एव स भूपतिः । उत्थाय जित्वा तावागच्छेत्येवं जल्पको नृपः । विद्युता दर्शितोऽस्यै स नग्न एव पुरूरवाः । अथ सा दृष्टसमया ह्युर्वशी तु दिवं ययौ । तत उन्मत्तवद्राजा दिदृक्षुस्तामितस्ततः । कुर्वन्नन्वेषणं तीरे सरसो मानसस्य ताम् । विहरन्तीमप्सरोभिः सहापश्यत्पुरूरवाः । पुनः स चकमे भोक्तुमुर्वशीं च पुरूरवाः । सान्त्वं सापश्यदुक्त्वा च प्रत्याचष्ट व्रजेति तम् । इत्युर्वश्यैलसंवादमिममेषोप्यसूचयत् ॥" ( Sayan's Introduction to Rgveda ).

अत्र च वाजसनेयकम्—उर्वशी हाप्सराः पुरूरवसमैलं चकमे तꣳ हविन्दमानोवाच त्रिः स्म माह्वो वेतसेन दण्डेन हतादकामा स्म मा निपद्यासै मा स्म त्वा नग्नं दर्शमेष वै नः स्त्रीणां उपचार इति । साहास्मिन् ज्योगुवासापि हास्माद्गर्भिण्या स तावत् ज्योग्घास्मिन्नुवास । ततो ह गन्धर्वाः समूदिरे ज्योग्वा इयमुर्वशी मनुष्येष्ववात्सीदुपजानीत यथेयं पुनरागच्छेदिति । तस्यै हाविद्र्युरणाशयने उपबद्धास । ततो ह गन्धर्वा अन्यतरमुरणं प्रमेथुः । सा होवाचावीर इव बत मे जन इव पुत्रं हरन्तीति । द्वितीयं प्रमेथुः साथ तथैवोवाचाथहायमीक्षांचक्रे कथं नु तदवीरं कथमजनꣳ स्याद्यत्राहꣳ स्यामिति । स नग्न एवानूत्पपात चिरं तन्मेने यद्वासः पर्यधास्यत । ततो ह गन्धर्वाः विद्युतं जनयाञ्चक्रुस्तं यथा दिवैवं नग्नं ददर्श ततो हैवेयं तिरोबभूव । पुनरैनमीत्येत्तिरोभूताꣳ स आध्याजल्पन् कुरुक्षेत्रꣳ समया चचारान्यतः प्लक्षेति बिसवती तस्यैहाध्यन्तेन वव्राज तद्धता अप्सरस आतयो भूत्वा परिपुप्लुविरे । तꣳ हेयं ज्ञात्वोवाचायं वै स मनुष्यो यस्मिन्नहमवात्समिति । ता होचुस्तस्मै वा आविरसामेति । तथेति तस्यै हाविरासुस्ताꣳ हायं ज्ञात्वाभिपरोवाद हये जाये मनसा इति ॥ ( Sukta 95 ( सूक्त–९५ ).

तथा च विविधेषु पुराणेषु उर्वशीपुरूरवसोराख्यानम् भिन्नं भिन्नं दीयते । महाभारते त्वादिपर्वे इदमेवोक्तं यत् पुरूरवाः ब्राह्मणैर्युद्धा गन्धर्वलोकादग्नित्रयमानीतवान् । तस्य च षट् पुत्रा आसन् ज्येष्ठस्तावदुर्वशीतनय आयुः । न किञ्चिदुक्तं तत्र पुरूरवस उर्वश्या सह विप्रयोगो जातो न वेति । श्रीमन्महाभारते पुरूवंशवर्णने" अदित्यां कश्यपाद्विवस्वान्, विवस्वतो मनुर्मनोरिला । इलायाः पुरूरवाः ।

पुरूरवस आयुः । आयुषो नहुषः । नहुषस्य ययातिरिति ( आ. प. ६३ ) "पुरूरवास्तत्र विद्वानिलायां समपद्यत । सा वै तस्याभवन्माता पिता चैवेति नः श्रुतम् । त्रयोदशसमुद्रस्य द्वीपानश्नन् पुरूरवाः । अमानुषैर्वृतः सत्वैर्मानुषः सन्महायशाः ॥ विप्रैः सह विग्रहं चक्रे वीर्योन्मत्तः पुरूरवाः । जहार च स विप्राणां रत्नान्युत्क्रोशतामपि । सनत्कुमारस्तं राजन्ब्रह्मलोकादुपेत्य ह । अनुदर्श ततश्चक्रे प्रत्यगृह्णान्न चाप्यसौ । ततो महर्षिभिः क्रुद्धैः सद्यः शप्तो व्यनश्यत । लोभान्वितो बलमदान्नष्टसंज्ञो नराधिपः । स हि गन्धर्वलोकस्थानुर्वश्या सहितो विराट् । आनिनाय क्रियार्थेऽग्नीन् यथावद्विहितां त्रिधा । षट् सुता जज्ञिरे चैलादायुर्धीमानमावसुः । दृढायुश्च वनायुश्च शतायुश्चोर्वशीसुता इति ॥ ( आ. प. ६९ ).

किन्तु विष्णुपुराणे कथेयं स्पष्टतया प्रतिपादिता—यथा **मैत्रेय उवाच**—सूर्यस्य वंश्या भगवन् कथिता भवता मम । सोमस्याप्यखिलान् वंश्यान् श्रोतुमिच्छामि पार्थिवान् । कीर्त्यते स्थिरकीर्तीनां येषामद्यापि सन्ततिः । प्रसादसुमुखस्तान्मे ब्रह्मन्नाख्यातुमर्हसि । **पराशर उवाच**—श्रूयतां मुनिशार्दूल वंशः प्रथिततेजसः । सोमस्यानुक्रमात्ख्याता यत्रोर्वीपतयोऽभवन् । अयं हि वंशोऽतिबलपराक्रमद्युतिशीलचेष्टावद्भिरतिगुणान्वितैर्नहुषययातिकार्तवीर्यार्जुनादिभिर्भूपालैरलङ्कृतः तमहं कथयामि श्रूयताम् । अखिलजगत्स्रष्टुर्भगवतो नारायणस्य नाभिसरोजसमुद्भवाब्जयोनेर्ब्रह्मणः पुत्रोऽत्रिः । अत्रेः सोमः । तं च भगवानब्जयोनिः अशेषौषधिद्विजनक्षत्राणामाधिपत्येऽभ्यषेचयत् । स च राजसूयमकरोत् । तत्प्रभावादत्युत्कृष्टाधिपत्याधिष्ठातृत्वाच्चैनं मद आविवेश । मदावलेपाच्च सकलदेवगुरोः बृहस्पतेस्तारां नाम पत्नीं जहार । बहुशश्च बृहस्पतिचोदितेन भगवता ब्रह्मणा चोद्यमानस्सकलैश्च देवर्षिभिर्याच्यमानोऽपि न मुमोच । तस्य चन्द्रस्य च बृहस्पतेर्द्वेषादुशनाः पार्ष्णिग्राहोऽभूत् । अंगिरसश्च सकाशादुपलब्धविद्यो भगवान्रुद्रो बृहस्पतेः साहाय्यमकरोत् । यतश्चोशनः ततो जंभकुम्भाद्याः समस्ता एव दैत्यदानवनिकाया महान्तमुद्यमं चक्रुः । बृहस्पतेरपि सकलदेवसैन्ययुतः सहायः शक्रोऽभवत् । एवं च तयोरतीवोग्रसंग्रामस्तारानिमित्तस्तारकामयो नामाभूत् । ततश्च समस्तशस्त्राण्यसुरेषु रुद्रपुरोगमा देवाः, देवेषु चाशेषदानवा मुमुचुः । एवं देवासुराहवसंक्षोभक्षुब्धहृदयम् अशेषमेव जगद्ब्रह्माणं शरणं जगाम । ततश्च भगवानब्जयोनिरप्युशनसं शंकरमसुरान्देवांश्च निवार्य बृहस्पतये तारामदापयत् । तां चांतःप्रसवामवलोक्य बृहस्पतिरप्याह । नैष मम क्षेत्रे भवत्याऽन्यस्य सुतो धार्यस्समुत्सृजैनमलमलमतिधार्ष्ट्येनेति । सा च तेनैवमुक्तातिपतिव्रता भर्तृवचनानन्तरं तमिषीकास्तम्बे गर्भमुत्ससर्ज । स चोत्सृष्टमात्र एवातितेजसा देवानां तेजांस्याचिक्षेप । बृहस्पतिमिंदुं च तस्य कुमारस्यातिचारुतया साभिलाषौ दृष्ट्वा देवास्समुत्पन्नसन्देहास्तारां पप्रच्छुः । सत्यं कथयास्माकमतिसुभगे सोमस्याथवा बृहस्पतेरयं पुत्र इति । एवं तैरुक्ता सा तारा ह्रिया किंचिन्नोवाच बहुशोऽप्यभिहिता यदासौ देवेभ्यो नाचचक्षे ततस्स कुमारस्तां शप्तुमुद्यतः प्राह । दुष्टेम्ब कस्मान्मम तातं नाख्यासि । अद्यैव ते व्यलीकलज्जावत्यास्तथा शास्तिमहं करोमि यथा च नैवमद्याप्यतिमन्थरवचना भविष्यसीति । अथाह भगवान् पितामहः तं

कुमारं सन्निवार्य स्वयमपृच्छत्तां ताराम्। कथय वत्से कस्यायमात्मजः सोमस्य वा बृहस्पतेर्वा इत्युक्ता लज्जमानाह सोमस्येति। ततः प्रस्फुरदुच्छ्वसितामलकपोलकान्तिः भगवानुडुपतिः कुमारमालिंग्य साधु साधु वत्स प्राज्ञोऽसीति बुध इति तस्य च नाम चक्रे। तदाख्यातमेवैतत् स च यथेलायामात्मजं पुरूरवसं उत्पादयामास। पुरूरवास्त्वतिदानशीलोऽतियज्वातितेजस्वी यं सत्यवादिनमतिरूपस्विनं मनस्विनं मित्रावरुणशापान्मानुषे लोके मयावस्तव्यमिति कृतमतिरुर्वशी ददर्श। दृष्टमात्रे च तस्मिन्नपहाय मानमशेषं अपास्य स्वर्गसुखाभिलाषं तन्मनस्का भूत्वा तमेवोपतस्थे। सोऽपि च तामतिशयितसकललोकस्त्रीकान्तिसौकुमार्यलावण्यगतिविलाससाहसादि-गुणामवलोक्य तदायत्तचित्तवृत्तिर्बभूव। उभयमपि तन्मनस्कमनन्यदृष्टि परित्यक्त-समस्तान्यप्रयोजनमभूत्। राजा तु प्रागल्भ्यात्तामाह। सुभ्रु त्वामहमभिकामोऽस्मि प्रसीदाऽनुरागमुद्वहेत्युक्ता लज्जावखण्डितमुर्वशी तं प्राह। भवत्वेवं यदि मे समयपरिपालनं भवान् करोतीत्याख्याते पुनरपि तामाह। आख्याहि मे समय-मिति। अथ पृष्टा पुनरप्यब्रवीत्। शयनसमीपे ममोरणकद्वयं पुत्रभूतं नापनेयम्। भवांश्च मया न नग्नो द्रष्टव्यः। घृतमात्रं च ममाहार इति। एवमेवेति भूपतिरप्याह। तया सह स चावनिपतिरलकायां चैत्ररथादिवनेष्वमल-पद्मखण्डेषु मानसादिसरस्स्वतिरमणीयेषु रममाण एकषष्टिवर्षाण्यनुदिनप्रवर्धमान-प्रमोदोऽनयत्। उर्वशी च तदुपभोगात्प्रतिदिनप्रवर्धमानानुरागा अमरलोकवासेऽपि न स्पृहां चकार। विना चोर्वश्या सुरलोकोऽप्सरसां सिद्धगन्धर्वाणां च नातिरमणी-योऽभवत्। ततश्चोर्वशीपुरूरवसोस्समयविद्विश्वावसुर्गन्धर्वसमवेतो निशि शयनाभ्या-शादेकमुरणकं जहार। तस्याकाशे नीयमानस्य उर्वशी शब्दमशृणोत्। एवमुवाच च ममानाथायाः पुत्रः केनापह्रियते कं शरणमुपयामीति। तदाकर्ण्य राजा मां नग्नं देवी वीक्ष्यतीति न ययौ। अथान्यमप्युरणकमादाय गन्धर्वा ययुः। तस्यापह्रिय-माणस्याकर्ण्य शब्दमाकाशे पुनरप्यनाथास्म्यहमभर्तृका कापुरुषाश्रयेत्यार्तराविणी बभूव। राजाप्यमर्षवशादंधकारमेतदिति खड्गमादाय दुष्ट दुष्ट हतोऽसीति व्याहरन्न-भ्यधावत्। तावच्च गन्धर्वैरप्यतीवोज्वला विद्युज्जनिता। तत्प्रभया चोर्वशी राजा-नमपगताम्बरं दृष्ट्वा प्रवृत्तसमया तत्क्षणादेवापक्रान्ता। परित्यज्य तावप्युरणकौ गन्धर्वाः सुरलोकमुपगताः। राजा चापि तौ मेषावादायातिहृष्टमनाः स्वशयनमा-यातो नोर्वशीं ददर्श। तां चापश्यन् व्यपगतांबर एवोन्मत्तरूपो बभ्राम। कुरुक्षेत्रे चाम्भोजसरस्यन्याभिश्चतसृभिरप्सरोभिस्समवेतामुर्वशीं ददर्श। ततश्चोन्मत्तरूपो जाये! हे तिष्ठ मनसि घोरे तिष्ठ, वचसि कपटिके तिष्ठेत्येवमनेकप्रकारं सूक्तमवो-चत्। आह चोर्वशी। महाराजालमनेनाविवेकचेष्टितेन। अन्तर्वत्न्यहमब्दान्ते भव-तात्रागन्तव्यं कुमारस्ते भविष्यति एकां च निशामहं त्वया सह वत्स्यामीत्युक्तः प्रहृष्टः स्वपुरं जगाम। तासां चाप्सरसामुर्वशी कथयामास। अयं स पुरुषोत्कृष्टो येनाहमेतावन्तं कालमनुरागाकृष्टमानसा सहोषितेति। एवमुक्तास्ताश्चाप्सरस ऊचुः। साधु साध्वस्य रूपमप्यनेन सहास्माकं अपि सर्वकालमास्या भवेदिति। अब्दे च पूर्णे स राजा तत्राजगाम। कुमारं चायुषमस्मै उर्वशी ददौ। दत्त्वा चैकां निशां तेन

राज्ञा सहोषित्वा पञ्च पुत्रोत्पत्तये गर्भमवाप । उवाच चैनं राजानमस्मत्प्रीत्या महाराजाय सर्वे एव गन्धर्वा वरदास्संवृत्ताः व्रियतां च वर इति । आह च राजा । विजितसकलारातिरविहतेन्द्रियसामर्थ्यो बन्धुमानमितबलकोशोऽस्मि नान्यदस्माकमुर्वशीसालोक्यात्प्राप्तव्यमस्ति तदहमनया सहोर्वश्या कालं नेतुमभिलषामीत्युक्ते गन्धर्वाः राज्ञेऽग्निस्थालीं ददुः । ऊचुश्चैनं अग्निमाम्नायानुसारी भूत्वा त्रिधा कृत्वोर्वशीसलोकतामनोरथमुद्दिश्य सम्यग्यजेथाः ततोऽवश्यमभिलषितमवाप्स्यसीत्युक्तस्तामग्निस्थालीं आदाय जगाम । अन्तरटव्यामचिन्तयत् अहो मेऽतीव मूढता किमहमकरवम् वह्निस्थाली मयैषानीता नोर्वशीति । अथैनामटव्यामेवाग्निस्थालीं तत्याज स्वपुरं च जगाम । व्यतीतेऽर्धरात्रे विनिद्रश्चाचिन्तयत् । ममोर्वशी सालोक्यप्राप्त्यर्थमग्निस्थाली गन्धर्वैर्दत्ता सा च मयाटव्यां परित्यक्ता । तदहं तत्र तदाहरणाय यास्यामीत्युत्थाय तत्राप्युपगतो नाग्निस्थालीमपश्यत् । शमीगर्भं चाश्वत्थमग्निस्थालीस्थाने दृष्ट्वाऽचिन्तयत् । मयात्राग्निस्थाली निक्षिप्ता सा चाश्वत्थश्शमीगर्भोऽभूत् । तदेनमेवाहमग्निरूपमादाय स्वपुरमभिगम्यारणिं कृत्वा तदुत्पन्नाग्नेरुपास्तिं करिष्यामीति । एवमेव स्वपुरमभिगम्यारणिं चकार । तत्प्रमाणं चांगुलैः कुर्वन् गायत्रीमपठत् पठतश्चाक्षरसंख्यान्येवांगुलान्यरण्यभवत् । तत्राग्निं निर्मथ्याग्नित्रयमाम्नायानुसारी भूत्वा जुहाव । उर्वशीसालोक्यं फलमभिसन्धितवान् । तेनैव चाग्निविधिना बहुविधान् यज्ञानिष्ट्वा गान्धर्वलोकानवाप्योर्वश्या सहावियोगमवाप । एकोऽग्निरादावभवत् एकेन त्वत्र मन्वन्तरे त्रेधा प्रवर्तिताः ॥ ९४ ॥ ( विष्णुपुराणे चतुर्थांशे षष्ठोऽध्यायः ) ॥

एवमेव च पद्मपुराणे "इलोदरे च धर्मिष्ठं बुधः पुत्रमजीजनत् । धर्मेण पालिता तेन सर्वलोकमयी मही । अश्वमेधशतं साग्रमकरोद्यः स्वतेजसा । पुरूरवा इति ख्यातः सर्वलोकनमस्कृतः । हिमवच्छिखरे रम्ये समाराध्य पितामहम् । लोकैश्वर्यमगाद्राजन् सप्तद्वीपपतिस्तदा । केशिप्रभृतयो दैत्यास्तद्भृत्यत्वं समागताः । उर्वशी यस्य पत्नीत्वमगमद्रूपमोहिता । सप्तद्वीपा वसुमती सशैलवनकानना । धर्मेण पालिता तेन सर्वलोकहितैषिणा । चामरग्रहणा कीर्तिः स्वयं चैवाङ्गवाहिका । ब्रह्मप्रसादाद्देवेन्द्रो ददावर्धासनं तदा । धर्मार्थकामान् धर्मेण समवेतोऽभ्यपालयत् । धर्मार्थकामास्तं द्रष्टुमाजग्मुः कौतुकान्विताः । जिज्ञासवस्तच्चरितं कथं पश्यति नः समम् । भक्त्या चक्रे ततस्तेषामर्घ्यपाद्यादिकं तथा । आसनत्रयमानीय दिव्यं कनकभूषणम् । निवेश्याथाकरोत्पूजामीषद्धर्मेऽधिकां पुनः । जग्मतुस्तौ च कामार्थावतिकोपं नृपं प्रति । अर्थः शापमदात्तस्मै लोभात्त्वं नाशमेष्यसि । कामोऽप्याह तवोन्मादो भविता गन्धमादने । कुमारवनमागत्य नियोगाच्चोर्वशीभवात् । धर्मोऽप्याह चिरायुस्त्वं धार्मिकश्च भविष्यसि । सन्ततिस्तव राजेन्द्र यावदाचन्द्रतारकम् । शतशो वृद्धिमायाति न नाशं भुवि यास्यति । षष्टिं वर्षाणि चोन्मादः उर्वशीकामसंभवः । अचिरादेव भार्यापि वशमेष्यति चाप्सराः । मन्वन्तरसमग्रं तु एवमेव न संशयः । इत्युक्त्वान्तर्दधुः सर्वे राजा राज्यं तदन्वभूत् । अहन्यहनि देवेन्द्रं द्रष्टुं याति पुरूरवाः । कदाचिदारुह्य रथं दक्षिणाम्बरचारिणा । सार्धं शक्रेण सोऽपश्यन्

नीयमानामथाम्बरे। केशिना दानवेन्द्रेण चित्रलेखामथोर्वशीम्। तं विनिर्जित्य समरे विविधायुधपातनैः। बुधपुत्रेण वायव्यमस्त्रं मुक्त्वा यशोऽर्थिना। पुरा शक्रोऽपि समरे येन वज्री विनिर्जितः। मित्रत्वमगमत्तेन प्रादादिन्द्राय चोर्वशीम्। ततः प्रभृतिमित्रत्वमगमत्पाकशासनः। सर्वलोकातिशयितं पुरूरवसमेव तम्। प्राह वज्री तु सन्तुष्टो नीयतामियमेव च। सा पुरूरवसः प्रीत्यै चागायच्चरितं महत्। लक्ष्मीस्वयंवरं नाम भरतेन प्रवर्तितम्। मेनकां चोर्वशीं रम्भां नृत्यध्वमिति चाऽऽदिशत्। ननर्त सलयं तत्र लक्ष्मीरूपेण चोर्वशी। सा पुरूरवसं दृष्ट्वा नृत्यन्ती कामपीडिता। विस्मृताऽभिनयं सर्वं यत्पुरातनचोदितम्। शशाप भरतः कोपाद् वियोगात्तस्य भूतले। पञ्चपञ्चाशदब्दानि लताभूता भविष्यति। पुरूरवाः पिशाचत्वं तत्रैवाऽऽस्तो भविष्यति। ततस्तमुर्वशी गत्वा भर्तारमकरोच्चिरम्। शापानुभवनान्ते तु उर्वशी बुधसूनुना। अजीजनत्सुतानष्टौ नामतस्तान्निबोधत। आयुर्दृढायुर्वश्यायुर्धनायुर्धृतिमान्वसुः। दिविजातः सुबाहुश्च सर्वे दिव्यबलौजसः॥ इत्यादि" (पद्मपुराणे प्रथमे सृष्टिखण्डे यदुवंशकीर्तने द्वादशाध्याये ५१–८७)॥

हरिताश्वस्य दिक्पूर्वा विश्रुता कुरुभिः सह। प्रतिष्ठानेऽभिषिच्याथ स पुरूरवसं सुतम्। (मत्स्य. १२–१८) अनेन राज्ञः प्रतिष्ठानाधीशत्वं कल्प्यते। तथा च मत्स्यपुराणे यत्पाद्मे प्रोक्तं तदेवाक्षरशः प्राप्यते। (मत्स्य. २४–९–३३) तथा च मात्स्ये पुरूरवसः पूर्वजन्मवृत्तान्तमपि लभ्यते। यथा स पूर्वं मद्रदेशाधिपतिरासीत्, राज्यभरं च सचिवेषु समारोप्य तपसे हिमाद्रिं जगाम तत्रैरावतीं नाम नदीं ददर्श। तत्र च तस्य अप्सरसां गणैः सम्मेलनं जातम्। तत्र गन्धर्वाप्सरोभिः राज्ञः संवादः, तत्र च स्वप्नदर्शनम् इत्यादि सर्वं पुरूरवसः आख्यानम् एकादश-द्वादश-चतुर्विंशेषु अध्यायेषु तथा च पञ्चदशाधिकशतादध्यायात् विंशत्यधिकशततमाध्यायपर्यन्तं दत्तम्।

कथासरित्सागरे च सप्तदशे तरङ्गे—आसीत्पुरूरवा नाम राजा परमवैष्णवः। अभूद्भुवीव नाकेऽपि यस्याऽप्रतिहता गतिः। भ्रमन्तं नन्दने जातु तं ददर्श किलाप्सराः। उर्वशी नाम कामस्य मोहनास्त्रमिवापरम्। दृष्टमात्रेण तेनाभूत्सा तथा हृतचेतना। यथा सभयरंभादिसखीचेतांस्यकम्पयत्। सोऽपि तां वीक्ष्य लावण्यरसनिर्झरिणीं नृपः। यन्न प्राप परिष्वङ्गतृषाक्रान्तो मुमूर्च्छ तत्। अथादिदेश सर्वज्ञो हरिः क्षीराम्बुधिस्थितः। नारदाख्यं मुनिवरं दर्शनार्थमुपागतम्। देवर्षे नन्दनोद्यानवर्ती राजा पुरूरवाः। उर्वशीहृतचित्तः सन् स्थितो विरहनिःसहः। तद्गत्वा मम वाक्येन बोधयित्वा शतक्रतुम्। दापय त्वरितं तस्मै राज्ञे तामुर्वशीं मुने। इत्यादिष्टः स हरिणा तथेत्यागत्य नारदः। प्रबोध्य तं तथाभूतं पुरूरवसमब्रवीत्। उत्तिष्ठ त्वत्कृते राजन् प्रहितोऽस्मीह विष्णुना। स हि निर्व्याजभक्तानां नैवापदमपेक्षते। इत्युक्त्वाश्वासितेनाथ स पुरूरवसा सह। जगाम देवराजस्य निकटं नारदो मुनिः। हरेर्निदेशमिन्द्राय निवेद्य प्रणतात्मने। उर्वशीं दापयामास स पुरूरवसे ततः। तदभूदुर्वशीदानं निर्जीवकरणं दिवः। उर्वश्यास्तु तदेवासीन्मृतसंजीवनौषधम्। अथाजगाम भूलोकं तामादाय पुरूरवाः। स्वर्वधूदर्शनाश्चर्यमर्पयन्मर्त्यचक्षुषाम्। ततोऽनपायिनौ द्वौ तावुर्वशी च नृपश्च सः। अन्योन्यदृष्टिपाशेन निबद्धा-

विव तस्थतुः। एकदा दानवैः सार्कं प्राप्तयुद्धेन वज्रिणा। सहायकार्थमाहूतो ययौ नाकं पुरूरवाः। तत्र तस्मिन्हते मायाधरनाम्न्यसुराधिपे। प्रवृत्तस्वर्वधूसार्थः शक्रस्याभवदुत्सवः। ततश्च रम्भां नृत्यन्तीं आचार्ये तुम्बुरौ स्थिते। चलिताभिनयां दृष्ट्वा जहास स पुरूरवाः। जाने दिव्यमिदं नृत्तं किन्त्वं जानासि मानुष। इति रम्भापि तत्कालं सासूयं तमभाषत। जानेऽहमुर्वशीसङ्गात्तद्वेत्ति न तुम्बुरुः। युष्मद्गुरुरपीत्येनामुवाचाथ पुरूरवाः। तच्छ्रुत्वा तुम्बुरुः कोपात्तस्मै शापमथादिशत्। उर्वश्या ते वियोगः स्यादाकृष्णाराधनादिति। श्रुतशापश्च गत्वैव तमुर्वश्यै पुरूरवाः। अकालाशनिपातोग्रं स्ववृत्तान्तं न्यवेदयत्। ततोऽकस्मान्निपत्यैव निन्ये क्वाप्यपहृत्य सा। अदृष्टैस्तेन भूपेन गन्धर्वैरुर्वशी किल। अवेत्य शापदोषं तं सोऽथ गत्वा पुरूरवाः। हरेराराधनं चक्रे ततो बदरिकाश्रमे। उर्वशी तु वियोगार्ता गन्धर्वविषयस्थिता। आसीन्मृतेव सुप्तेव लिखितेव विचेतना। आश्चर्यं यन्न सा प्राणैः शापान्ताशावलम्बिनी। मुक्ता विरहदीर्घासु चक्रवाकीव रात्रिषु। पुरूरवाश्च तपसा तेनाच्युतमतोषयत्। तत्प्रसादेन गन्धर्वा मुमुचुस्तस्य चोर्वशीम्। शापान्तलब्धया युक्तः पुनरप्सरसा तया। दिव्यान्स राजा बुभुजे भोगान् भूतलवर्त्यपि॥ (कथा. १७–४–३०)

सर विलियम विल्सनमहोदयानां मते तु सर्वमिदं नाटकीयं वस्तु अन्योक्तिपरमेवास्तीति कल्पितम् तद्यथा—नायकस्त्वत्र सूर्यः नायिका च उषा विद्यते। कतिकालं उभौ संयुक्तौ भवतः पश्चाच्च वियुज्येते। केवलं रविरेव नदीकूपतडागवृक्षपर्वतेषु एकाकी परिभ्रमति पश्चाच्च दिनावसाने उषसा संयुक्तो भवतीति॥

एवञ्च ऋग्वेदपद्मविष्णुमत्स्यपुराणबृहत्कथादिविविधानां ग्रन्थानामालोचनेन स्फुटतयेदमवभासते यत् अस्य त्रोटकस्य कथाप्रबन्धः पुरातनः सन् विद्वत्सु प्रसिद्ध एवास्ते। तथा चैतेषां ग्रन्थानां परिशीलनेन सिद्धमेवेदं यत् पुरूरवाः नाम कश्चन चन्द्रवंशीयो राजा बभूव। तस्य प्रतिष्ठानाख्या नगरी राजधानी। स परमधार्मिकः अच्युतचरणसेवापरायणश्च अभूत्। तस्य इन्द्रेण सह महत्सख्यम्। तत्रेन्द्रसभायां प्रत्यहं गच्छता राज्ञोर्वशी दृष्टा। तत्र पारस्परिकावलोकनेनोभावपि कामस्य वश्यतां प्राप्तौ। ततो महेन्द्रप्रसादात् उर्वशी राज्ञा लब्धा। पश्चात्केनापि कारणेन, कस्यापि शापेन, उत नग्नदर्शनेन तयोर्वियोगः सञ्जातः। पश्चात् उभयोः विरहवेदनाखिन्नत्वात्, देवतानां प्रसादात् संयोगः सञ्जातः। तेनाजन्मसुखेनोभाभ्यामेव पृथिव्यां कालो यापितः। उर्वशीगर्भसम्भूता राज्ञः अष्टौ पुत्रा आसन्। तेषु ज्येष्ठः आयुर्नाम। पुरूरवसोऽनन्तरं स एव राज्येऽभिषिक्त इति एतावान् कथांशः सर्वत्र सामान्यः। यद्यप्येतावत् कथावस्तु समानतया सर्वत्र लभ्यते तथापि कवीन्द्रेण कालिदासेन अस्यैव वस्तुनः नाटकोपयोगित्वं, सहृदयहृदयाल्हादकत्वं, कविताचातुरीनिधित्वम् सर्वाङ्गसुन्दरत्वं यथा सम्पद्येत तथा किञ्चित् परिवर्तनं स्थाने स्थाने कृतम्। तत्र प्राधान्येन वक्ष्यमाणाः कतिचित् विपर्ययांशा अधस्ताद्दीयन्ते।

(१) आदौ राज्ञः सूर्योपस्थाननिवृत्तस्यैव आक्रन्दनाकर्णनेन समाकृष्टस्य, केशिना हृतया तेन च समुद्धृतया उर्वश्या संयोगः सञ्जातः। पुराणेषु तावत् क्वचिदिन्द्रसभायां, क्वचिन्नन्दनवने तयोस्संयोगो जात इत्युपनिबद्धम्॥

(२) राज्ञः औशीनर्या सह उर्वशीप्रेम्णः अर्वागेव उद्वाहः। पुराणादिषु औशीनरी राज्ञः पट्टाभिषिक्ता महिषीति कुत्रापि न दृश्यते। हरिवंशे तु राज्ञः उर्वशी एव अनन्या प्रणयिनी बभूवेति प्रोक्तम्। यद्यपि महाभारते आदिपर्वे (१०६।२२) "उशीनरस्य राजर्षेः सत्यसन्धस्य धीमतः। दुहिता प्रथिता लोके मानुषे रूपसंपदा" इति प्रोक्तम् तथापि तस्याः पुरूरवसा विवाहसम्बन्धोऽभूदिति न कुत्रचिल्लभ्यते। अस्मिन् रूपके राज्ञे औशीनर्या कृतया अभ्यसूयया द्वितीयतृतीयाङ्कयोः नाट्यवस्तु परमुपस्कृतम्। इदन्तु कवेः प्रतिभोत्थितमेव प्रतिभाति।

(३) उर्वश्यै शापोऽत्र भरतेन दत्तः तथा च पुराणेषु क्वचन भरतेन क्वचन तुम्बुरुणा, क्वचन मित्रावरुणाभ्यामिति कथितम्।

(४) पुराणेषु उर्वश्या वियुक्ते राजनि क्वचन हरिणा, क्वचिद्गन्धर्वैरनुग्रहः कृत इति दृश्यते किन्त्वत्र महेन्द्रेणेति लभ्यते।

(५) क्वचित् उर्वशीपुरूरवसोः सालोक्यावधि आवस्त्रहीनदर्शनं उद्दिष्टा, अन्यत्र च केवलं गन्धर्वैर्हरणमेव, किन्त्वत्र आकुमारमुखदर्शनमुक्ता।

(६) राज्ञश्च पुराणेषु पिशाचत्वं उर्वश्याः लतात्वं यद्यपि प्रतिपादितम् तथापि तयोः पुनर्मेलनं सङ्गममणियोगेन जातमिति न क्वापि लभ्यते।

(७) तथा च कुमारस्य सत्यवतीहस्ते निक्षेपः, सङ्गममणिं हरतः गृध्रस्य तेन वधः, तस्माच्च च्यवनस्य सत्यवत्यै निक्षेपनिर्यातनायादेशः, सर्वमिदं कविप्रौढोक्तिसिद्धं नवीनमेवास्ति।

(८) तथा च पुराणेषु राज्ञा उर्वश्याः मर्त्यलोके आनयनम् प्रतिपादितम्, न तु तस्याभिसारिकात्वम्।

(९) अपि च पुराणेषु राजानं चरमावस्थायाम् प्रियतमाविश्लेषव्यथादूनमेवात्रावधीकृत्य कथा समाप्तिमाप्ता किन्तु भारतीयसहृदया एतादृशं शोकपरिणामिनं दृश्यकाव्यं प्रेक्षितुमभ्यस्ता न सन्ति, इत्येवमुद्दिश्य कविना इयमापत्तिः समुद्धृता। कुमारस्यायुषो मुखदर्शनान्तरं भाविनं विप्रयोगं परिज्ञाय कुमारं राज्येऽभिषिच्या वनगमनाय कृतधियं राजानं महेन्द्रसन्देशं श्रावयितुं नारदस्य प्रवेशः कविनाकारि। तत्र च काव्यमिदं सुखपर्यवसायिनं कर्त्तुमीहमानेन कर्त्रा जन्मपर्यन्तमियमुर्वशी त्वत्सहधर्मचारिणी भवत्विति राजानं सुखमयमादेशं निशामयितुं, कुमारस्य यौवराज्येऽभिषेकाय, नायकयोरीप्सितसम्पादनाय, भरतवाक्यस्यान्तिमस्य कथनाय च नारदप्रवेशं विधाय सुजनमानसप्रमोदजनकं सर्वं सुस्थं सम्पादितम् तत्रभवता कविप्रौढेन स्वीयनाटकीयकलाकौशलप्रावीण्येनेति।

॥ श्रीः ॥

# ॥ सोमवंशतरुः ॥

( पुरूरवो वंशः )



वि. प्र. ४

- (मनुः)
  - इलः — शापान्मासमेकं पुमान् मासमेकं स्त्री ।
    - (बुधः) — इन्यवस्थायामिलयां
      - पुरूरवाः
        - उर्वशीतः
          - आयुः
            - नहुषः
              - ययातिः
                - देवयानीतः
                  - यदुः
                    - यादवाः
                  - तुर्वसुः
                - शर्मिष्ठायाम्
                  - द्रुह्युः
                  - पूरुः
                    - कौसल्यायां जनमेजयः (प्रथमः)
                  - अनुः
          - दृढायुः
          - वश्यायुः
          - धनायुः
          - धृतिमान्
          - वसुः
          - दिविजातः
          - सुबाहुः

- (प्रल्हादः)
  - विरोचनः
    - बलिः
      - बाणासुरः
        - विप्रचित्तिः
        - नमुचिः
        - शम्बरः
        - केशी (य उर्वशीमपाहरत्)
        - अन्ये ३६

(परस्मिन् जन्मनि सर्वे एते मनुजाः, जरासन्ध-शिशुपालशल्यप्रभृतयः। )

(जनमेजयः)
|
सुनन्दायां प्राचीन्वान्
|
आश्मक्यां शय्यातिः
|
त्रिशङ्कोः दुहितरि वराङ्ग्यां अहंयातिः
|
भानुमत्यां सार्वभौमः
|
कैकय्यां सुन्दरायां जयत्सेनः
|
सुश्रवायां अपराचीनः
|
मर्यादायां अरिहः
|
खल्वाङ्ग्यां महाभौमः
|
सुयज्ञायां अयुतानायी
|
भासायां अक्रोधनः
|
कण्डूतः देवातिथिः
|
(देवातिथिः)
|



मर्यादायां ऋचः
वामदेव्यां ऋक्षः
ज्वलन्त्याम् अन्त्यनारः
सरस्वत्यां त्रस्नुः
कालिन्द्यां इलिलः
रथन्तर्यां दुष्यन्तः
अन्ये चत्वारः
लाक्ष्यां जनमेजयः (द्वितीयः)
शकुन्तलायां भरतः
सुनन्दायां भूमन्युः
सुवर्णायां सुहोत्रः (प्रथमः)
पञ्च अन्ये


(सुहोत्रः)
जयन्त्यां हस्ती ( यो हस्तिनापुरं निर्मितवान् )
यशोदायां विकुञ्जनः
सुन्दरायां अजमीढः
कैकेय्यां
नागायां
गान्धार्यां
विमलायां
ऋक्षायां
२३९९ पुत्राः
संवरणः
तपत्यां कुरुः
शुभाङ्ग्यां विदूरथः
संप्रियायां अनश्वान्
अमृतायां परीक्षित्



(परीक्षित्)
सुवेषायां भीमसेनः
सुकुमार्यां परिश्रवाः (प्रतीपः)
सुनन्याम्
देवापिः
शन्तनुः
बाल्हीकः
सत्यवत्यां (काल्यां)
गङ्गायां भीष्मो देवव्रतः (नैष्ठिकः)
कन्यागर्भो द्वैपायनः ।
चित्राङ्गदः
विचित्रवीर्यः
व्यासात् अम्बिकायां
व्यासात् अम्बालिकायां
व्यासात् अम्बिकादास्यां
अम्बिकायां
अम्बालिकायां
धृतराष्ट्रः
पाण्डुः
विदुरः
मृते विचित्रवीर्ये द्वैपायनात् प्राप्ता सन्ततिः

- (धृतराष्ट्रः)
  - गान्धार्यां १०० पुत्राः तत्र प्रधानाः
    - दुर्योधनः
    - दुश्शासनः
    - विकर्णः
    - चित्रसेनः
- (पाण्डुः)
  - कुन्त्यां
    - धर्मात् युधिष्ठिरः
      - देवक्यां यौधेयः
      - द्रौपद्यां प्रतिविन्ध्यः
    - वायोः भीमः
      - जलन्धरायां शर्वत्रातः
      - हिडिम्बायां घटोत्कचः
      - द्रौपद्यां सुतसोमः
    - इन्द्रात् अर्जुनः
      - द्रौपद्यां श्रुतकीर्तिः
      - सुभद्रायां अभिमन्युः
        - उत्तरायाम् परीक्षित्
      - उलूप्यां इरावान्
      - चित्राङ्गदायां बभ्रुवाहनः
  - माद्र्यां
    - अश्विभ्यां नकुलः (तथा) सहदेवः
    - नकुलः
      - द्रौपद्यां शतानीकः (प्रथमः)
      - रेणुमत्यां निरमित्रः
    - सहदेवः
      - द्रौपद्यां श्रुतसेनः
      - विजयायां सुहोत्रः (द्वितीयः)
- (विदुरः)
  - देवक्यां पारसव्यां नैके पुत्राः




इत्येष पूरोर्वंशस्तु पाण्डवानां च कीर्तितः ।
पूरोर्वंशमिमं श्रुत्वा सर्वपापैः प्रमुच्यते ॥



॥ श्रीः ॥

# तत्रभवान् कविः ।

सर्वो हि लोको जगत्यस्मिन् परममात्मनः पुरुषार्थं सुखमेव मन्वानस्तदधिगमाय बहुशो यतमानस्तद्विरोधिनो दुःखस्य प्रहाणोपायं विस्मरणहेतुं वा कञ्चिल्लब्धुं ध्रुवं कामयतेतराम् । स च दुर्लभ एव प्रायः, तस्मिंश्चाधिगतेऽपि शास्त्रेभ्यो नूनं स दुर्घट एवातः सुकुमारशेमुषीणां निवृत्तिपरावृत्तानां निर्वृतिवृत्तीनां जनानां कृतेऽमन्दानन्दसन्दोहशालिनोऽपहसितमृद्वीकामधुमधुरिमकाव्याकूपारावगाहनादृते । नान्यद्रुचिरतरं साधनं भुवि विद्यत इति विश्वजनीना प्रतीतिः यदेवावितथमभाणि भट्टमम्मटैः—

"नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्रां ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥"

यदुक्तं च राजानकेन

"धर्मादिसाधनोपायः सुकुमारक्रमोदितः ।
काव्यबन्धोऽभिजातानां हृद्याह्लादकारकः ॥
चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम् ।
काव्यामृतरसेनान्तश्चमत्कारो विधीयते ॥"

यतो हि नैकविद्याभ्यसनदारुणाम्नायसन्दर्भस्तावदत्यन्तमनोहारिपरिपाटीपटीयसोऽनणीयःकमनीयचमत्कृतेः काव्याम्बुधेः स्पर्धां क्वचित्कथञ्चिदप्यधिरोहतीति मनाक्कल्पनापि भ्रान्तिकल्पैव नूनं; यतो युक्तमेवाभियुक्तैः प्रयुक्तं वचः—

"कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम् ।
आह्लाद्यमृतवत्काव्यमविवेकगदापहम् ॥" इति ।

अतः सर्वतो नैकविधदुःखदवदहनदग्धानां विदग्धानां हितं दिव्यं खलु भुवि भव्यं नवरसं काव्यरसायनं यत्समस्ततन्त्रपरमप्यपरतन्त्रतया वरीवर्तते प्रवरकविकालिदासभासभवभूतिप्रभृतिभिः प्रतिभाभास्वद्भिः कल्पनाकुञ्जपुंस्कोकिलैः सलीलैः समुद्भावितम् । एतच्च काव्यरसायनं संसेवितं चेत् समस्तक्लेशव्यूहव्यपोहनपुरस्सरं महान्तमानन्दं जनयतीति न मनागपि संशयलवः, यतः सर्वासां काव्यव्यापृतीनां प्रवृत्तिनिमित्तं खलु लोकोत्तरानन्द एव । यत्तूक्तमाचार्यहेमचन्द्रेण काव्यबीजमुद्भावयता "सद्यो रसास्वादजन्मा निरस्तवेद्यान्तरब्रह्मास्वादसदृशी प्रीतिरानन्दः" इति । अयमेव रसास्वादजनितानन्दः कवीनां प्रथमः प्रवर्तकस्तदनु च काव्याध्ययनेनौपचारिकमानुषङ्गिकं वा फलमुपदेशः स च पुनः कान्तासम्मित एव, नूनं भामहमतेऽपि काव्यस्य भूयसार्थोपदेशकृत्त्वाच्च । एवमेव कैश्चन पाश्चात्यैरप्यपश्चिमैर्विपश्चिद्भिर्मन्यते यत् काव्यस्य प्रवृत्तिहेतुरानन्दमात्रमेव, फलं चानन्दसहकृतोपदेशोपलब्धि-

रेव। अस्य च काव्यरसायनस्य प्रादुर्भावे कविगतप्रतिभाया एव शक्तिः सा च नवनवोन्मेषशालिसामर्थ्यं, यदुक्तमभिनवगुप्तपादैः 'अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा तस्या विशेषरसवैशद्यसौन्दर्यनिर्माणक्षमत्वं प्रतिभावत्त्वम्'। अमुमेवार्थं पुरस्कृत्यै-मरसनपण्डितेन दृष्टान्तितं यत्काव्ये किमपि कविभिरद्भुतं वस्तु समुपस्थाप्यते यच्च चमत्कारि विकारि च इष्टपदार्थानां सदपि नवं भास्वत् स्वत एवाभिमुखीकरोति विदुषो यथा खलु द्विरेफः कुसुमसञ्चये भ्रमन् किञ्जल्कान् स्पृशन् परागबिन्दून-ङ्गीकुर्वन्नपि परागकिञ्जल्कव्यतिरिक्तं किञ्चिन्नवीनं मधु द्रवति एवमेव महाकवि-र्जगति नैकानि निसर्गरुचिराणि वस्तुजातान्यवलोकयन्नवधारयंश्च समस्ता वाचः समुद्भावयति निजप्रतिभोल्लसितमपरमेव रमणीयं मधुमधुरं कामधुरं नवरसमयं काव्यरसायनम्।*

यतो यत्किमपि कठोरमरुचिरं दृशदिव दरीदृश्यतेऽखिलं तत्कविचन्द्रप्रतिभामरीचिभिः स्पृष्टं शशकान्त इव द्रवतीति विद्वदनुभवः सार्वजनीन एव। यदुक्तमभिजातैर्यदवचिनोति कविराट् पाटलान्येव श्वदंष्ट्राभ्योऽपि। यथा वानुभूतं सहृदयैर्यत् "पाषाणादपि पीयूषं स्यन्दते यस्य लीलयेति" तादृशं सामर्थ्यं कवयितुः काव्यव्यापारस्य, यच्च स्मर्यते "रमणीयार्थप्रतिपादकः शब्दः काव्यं"; श्रूयते च "रसो वै सः रसꣳ ह्येवायं लब्ध्वानन्दी भवतीति"।

एतादृशोऽयं महामहिमशाली कविरमितप्रभया निजप्रतिभया जगदिदं नवमिव विकासयंश्चकास्त अपर इव विरिञ्चिर्यथा "अपारे काव्यसंसारे कविरेकः प्रजापतिः। यथास्मै रोचते विश्वं तत्तथैव प्रवर्तत" इति न्यायात्। एतादृशां कवीनां कुले तिलकायमानो महाकविः कवीन्द्रसार्वभौमः साहसिकानामुपहास इव कविताकामिन्या हास इव कालिदासः कविषु मूर्धन्य इव राजत इति विदितचरमेव सुरभारतीजुषां समेषामेव विदुषां भारतीतले, लभ्यन्तेऽत्र च महाकवये प्रेक्षावद्भिर्नैकाः स्तुतिकुसुमाञ्जलयः समर्पिता यास्त्वधस्तादिङ्मात्रोदाहरणायोद्ध्रियन्ते यथा—

'यस्योच्छिष्टं जगत्सर्वं'मितिलब्धबिरुदेनापि भट्टबाणेन—

"निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते॥" इति

मुक्तकण्ठमभाणि। गीतगोविन्दसदृशनिबन्धस्य रचयित्रा जयदेवेनापि ख्यापितगौरवो विद्वद्वरो गोवर्धनसुधीरपि प्रशंसन्नतनु महाकविमाह—

"साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये।
शिक्षासमयेऽपि मुदे रतिलीलाकालिदासोक्ति"रिति॥

---

* In Poetry we say require the miracle: the bee flies among the flowers, and gets mint and marjoram and generates a new product which is not mint nor marjoram but honey... and the poet listens to conversation and beholds all objects in Nature, to give back not them, but a new transcendent whole.

R. W. EMERSON.

अपरश्चाह यत्—

"भासो रामिलसौमिलौ वररुचिः श्रीसाहसाङ्कः कवि-
र्मेण्ठो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः ।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते" ॥

स्वयमपि जयदेवो महाकवीनां नामोत्कीर्तनप्रसङ्गे कविताकामिन्याः सौन्दर्य-सर्वस्वभूतं विलासं कालिदासमेव मेने यथा—

"यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥"

एवं सम्मानितममुं कविकुलगुरुमेवालम्ब्यानामिकायाः प्रवृत्तिनिमित्तस्योत्प्रेक्षण-भङ्ग्याह कश्चिद्रसिकः—

"पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः ।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥"

एतादृशं कविगणाग्रसरं महाकविं वीक्ष्य कालिदासं कविताकामिनी नूनमेव वृतवतीति सम्यगाह कश्चनालोचकप्रवरः

"वाल्मीकेरजनि प्रकाशितगुणा व्यासेन लीलावती
वैदर्भी कविता स्वयं वृतवती श्रीकालिदासं वरम् ।
याऽसूतामरसिंहमाघधनिकान् सेयं जरा नीरसा
शून्यालङ्करणा स्खलन्मृदुपदा कं वा जनं नाश्रिता ? ॥" इति ॥

सहृदयप्रौढस्यैतादृशो महाकवेरमितकवित्वप्रतिभाभासा हसितभासादिभी रसिकैः कवनप्रसङ्गे आत्मनोऽपि श्लाघाभिसन्धिः स्वयं शिथिलीकृतो यथा—

"कवयः कालिदासाद्याः कवयो वयमप्यमी ।
पर्वते परिमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥"

एवमेव

"वयमपि कवयः कवयः, कवयोऽपि च कालिदासाद्याः ।
दृषदो भवन्ति दृषदश्चिन्तामणयोऽपि हा दृषदः ॥"

इत्थं नैककोविदवरैः भृशमुपश्लोकितोऽयं महाकविः कतमस्मिन् काले कुत्र वा प्रादुर्भावमनुभूय कीदृशीमवस्थामवलम्ब्यानुजग्राह स्वजन्मलाभेन भारतं वर्षमिति प्रायोऽयं सन्देहभाजनमेवाद्यापि विषयस्तथापि अमुष्मिन् विषये विचिकित्सा-विषमेऽपि क्षोदक्षमया खलु प्रेक्षया समुद्धृताः केचन राद्धान्ताः समासेनोपन्य-स्यन्त इति—

तत्रभवतः कालिदासस्य नैकेषु ग्रन्थेषु लभ्यन्ते खलु रमणीयदेशादिवर्णनास्थानानि । यतः कैश्चिन्निश्चीयते यदनेन महाकविनाऽवन्तीषु श्रीविशालायारनुपमवर्णनगौरवप्रदर्शनात् नूनमावन्तिकेनोज्जयिनीशस्य विक्रमादित्यस्य सभायां नवरत्नेष्वन्यतमेन भवितव्यम्, यच्च लभ्यते "धन्वतरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ।" इदमेव वस्तु प्रमाणीकर्तुं बहवो विक्रमोर्वशीयनाटकस्याख्यायाः विक्रमनामग्रहणेनैवाभिख्यां ख्यापयन्ति । अपरे तावदेनं विदिशावास्तव्यमामनन्ति, परे च मन्यन्ते यदयं हिमवत एव तादृग्सौन्दर्यजनितपक्षपातः काश्मीरिकः किल । तं काश्मीरदेशिनं मन्वानैर्विद्वद्भिरुह्यते यदयं प्रथमावस्थां स्वदेश अतिवाह्य पश्चात् समायातश्चोज्जयिनीम् । इदमेवावलम्ब्य तैः प्रत्यादिश्यते यदयं वङ्गीयः तत्रस्थकविसाधारणतया गौडीरीत्या अस्य लेखेऽदर्शनात् ।

यत्र कुत्रत्योऽप्ययं भवेत्तथापि नैकविधेष्वपि सत्सु विषयेऽस्मिन् वितर्केषु, प्रायः समेषामेव विदुषामत्रैकमत्यं दृश्यते यदयं महाराजस्य विक्रमादित्यस्य सभामलभकार्षीत् । किन्तु ईशवीयसंवत्सरसहस्रात्पूर्वम् महीं विक्रमादित्याभिधानाः षड्राजानोऽशासन्त । यद्यपि तेषु कतमस्तावन्महाकविबद्धसख्यः इति नूनं सन्देहास्पदमेव तथाप्यध्यवस्यते विपश्चिद्भिर्यदस्य महाकवेरायहोलीयशिलापट्टलेखे भारविसहक्तस्योल्लेखदर्शनात् ख्रिस्टीयसप्तमशताब्देर्द्वितीयपाद एव । लब्धप्रख्येन बाणभट्टेनापि हर्षचरिते कालिदासस्य प्रशंसनाच्च तदूर्ध्वं जातस्य चालुक्यवंशीयविक्रमादित्यस्य तत्पश्चात्तनानामप्यत्र विचारणमसङ्गतमेव, यतः पूर्वभणिते शिलाफलके "येनायोजिनवेश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म । स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्त्तिरिति" उल्लिखित एव महाकविः । भट्टबाणस्य पूर्ववर्तिनोऽभूवंस्तावत्त्रयो विक्रमादित्यास्तदर्थमेव पाश्चात्यानां गवेषकाणां मतत्रैविध्यमुपस्थितममुष्मिन् विषये:—

पूर्वं पुरातत्त्वकोविदेन फर्ग्युसनविदुषा कारूरैः साकं युयुत्सुनावन्तिकेन विक्रमेण जयिना हूणान् विद्राव्य स्वनाम्नो महिमानं प्रचिख्यापयिषुणा विक्रमसंवत्सरसन्ततिः प्रादुरभावि, ततोऽस्य विक्रमस्य कालः इशुमशीयजन्मनः सप्तपञ्चाशद्वर्षपूर्वक एवामानि । तत्त्वमेतदेवावलम्ब्य मोक्षमूलरभट्टादिभी रघुवंशे हूणादीनां निर्देशमुद्दिश्य कालिदासस्तु विक्रमीयसभाया रत्नमित्यायोजि । किन्तु एनमर्थमसहमानेनापरेण फ्लीटपण्डितेन हूणानां विजयिनं यशोधर्मनामानं विक्रमव्यतिरिक्तमपरमेव वीरं प्रमाणीकुर्वताऽसन्नेव विज्ञापितोऽयमर्थो यद्यपि बहुभिरपीदानीन्तनैर्विद्वज्जनैः प्रयत्यते यदीशुमशीयजन्मनः अर्वाक्तन एवायं कविरिति राद्धान्तयितुम् ।

फ्लीटमहानुभावस्य संशोधनमुररीकृत्य, तदर्थमेवान्वेष्टुकामैः नैकशिलापट्टोपलब्धकाव्यालोचकैः माननीयस्मिथमेकडोनलसदृशैः मालवान्तर्गतमन्दसौरग्रामे वत्सभट्टीयशिलालेखं स्वीकृत्य महाकविस्तच्छिलालेखकालाच् चतुःशतख्रिष्टाब्दादर्वाक्तन इत्यनुमाय चन्द्रगुप्तविक्रमादित्यस्य समकालीनः प्रमीयते । एतन्मतावलम्बि-

भिस्तर्कैरमुं प्रसन्नतरमवगाहमानैः रघोर्दिग्विजयव्याजेन समुद्रगुप्तस्य विजयं वर्णयतश्चन्द्रगुप्तात्मजस्य कुमारगुप्तस्य जन्मप्रसङ्गं कुमारसंभवमहाकाव्यमिषेण शंसतो, महाराजचन्द्रगुप्तस्यैव विक्रमादित्य इति गृहीतमुपाधिं चिरयितुं विक्रमोर्वशीयं त्रोटकमुपग्रथ्नतो महाकवेः समस्तं कवनकलाव्यापारं चन्द्रगुप्तपरकमेवेति निर्धार्यते। एवं कृते च तेषां मते कालिदासदिङ्नागयोः समकालीनत्वं कालिदासीयमहाकाव्येषु प्रतिबिम्बितानां विलासचित्राणां समाजसुखानामपि सामञ्जस्यं सञ्जाघटीतीति विद्वद्दूहः। एवं चेत् कीदृशं हेतुमुद्दिश्य वर्षशतपञ्चकप्राक्तनस्य शुङ्गीयस्याग्निमित्रस्य स्वीयनाटकीयवस्तुनेतृत्वेन महाकवेर्ग्रहणं तत्र चाश्वघोषकालिदासयोः प्रभूतेऽपि काव्यकलासौसादृश्ये तदनभिधानपुरस्सरं धावकसौमिल्लानामेव प्रत्नानां कवीनां नाम्नो ग्रहणं रघुवंशे तत्कालं पह्लवीयानां राज्ञां उग्रतरेऽपि प्रतापे कथं पाण्ड्यानां तादृक्सविस्तरं वर्णनं सङ्घटेदिति सूक्ष्मदृशां महदिदं संशयपदम्।

एवं सन्दिग्धतादिग्धमनसो विदग्धाः कतिपये रायजयस्वालशिवरामप्रभृतयो महाकविमिशुमशीयाब्दशतकादर्वाक्तनं वर्तमानं नानुमोदन्ते समीक्षन्ते चोपरिष्टाद्वक्ष्यमाणाः स्वमतं द्रढयितुमुपपत्तीरिमाः याः कविं कालिदासं ख्रिष्टीयजन्मनः पूर्वं प्रथमे शतके वर्धमानं साधयन्तिः—

(१) इशुमशीयाष्टमशतकं यावत् भारतीयं संवत् मालवीयमेवासीन्न विक्रममिति मन्वानेन फ्लीटविदुषा साकं वैमत्यं प्रकटयन्तः परे विपश्चितः कल्याणिनश्चायुष्यवंशीयमैतिह्यमनुसरन्तो नूनमामनन्ति यदाङ्ग्लाब्दशतके तुरीये गुप्तवंशीयेन चन्द्रेण विक्रमादित्य इत्युपाधिमुरीकृत्य स्वीयः प्रतापः याथार्थ्यमनायि तदर्वाक्तनैश्चोजस्विभिर्महीपैर्निजौजोगमकोऽयमुपाधिरङ्गीकृत आसीदिति वस्तु विश्वस्य निश्चीयते किल तत्त्वमिदं यच्चतुर्थाब्दशतकात् पूर्वं केनचिदप्यमितौजसा सम्राजा नूनमेव भारतभूतले भाव्यं यमुपमानमलं मेनिरे पश्चात्तना राजान इति। स एव प्राक्तनः संवत्सरप्रवर्तयिता महाराजो विक्रमो महाकवेः पुरस्कर्ता यश्च विक्रमोर्वशीये "अनुत्सेकः खलु विक्रमालङ्कारः" इत्येवं भूरि स्थाने प्रशंसितः। अतस्तत्समकालीनो महाकविरिति।

(२) परं च महाकविनोपनिबद्धस्य महाराजरघोः पूर्वजस्य दिलीपस्य निर्देशेनाप्यनुमापदमिदं यन्महाकविनालम्बितो भिन्न एवावलिर्वंशस्य रामायणपवनपुराणाद्यन्तर्गतात्कथोपाख्यानात्। परं च रघुवंशे "अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभि"रिति प्रतिज्ञातं च महाकविना यत्पूर्वसूरिभिरपि वर्णितोऽयं वंशः। टीकाकृतश्च "पूर्वसूरी"तिपदेन प्राचेतसादीन् परिकल्पयन्ति। विभिन्नश्च तस्मात्कालिदासीयो वंशक्रमो यश्चानुसरति हरिवंशानन्दरामायणादीनामुपाख्यानं संवदति च भासीयप्रतिमानाटकान्तर्गतोपाख्यानपरम्परया। अतो निर्धार्यते यद्भासकालिदासयोरुपजीव्या विभिन्ना एव ग्रन्था अभवन् येन सुबोधमिदं यत्पञ्चमशतकीयरामायणपुराणान्तरादूर्ध्वतनो नायं महाकविरिति।

(३) अपि च ज्योतिर्विदोऽपि रामचन्द्रविबुधप्रवरा रघुवंशे "प्रससादोदयारम्भः कुम्भयोनेर्महौजसः" इति वाक्यमाश्रित्य मेघदूते च "आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं" "प्रत्यासन्ने नभसि" च "शापान्तो मे भुजगशयना"दित्यादिपद्य-कदम्बेनोपस्थापितेन क्रमेण भगवति गभस्तिमालिनि पुष्यभस्य प्रथमं पादमधि-रोहत्येव नभोमासस्य प्रक्रमस्तदानीमभवदिति निश्चिन्वन्ति, मन्यन्ते च यदेतादृशो-पक्रमस्तु इदानीन्तनात्कालादष्टशताधिकसंवत्सरसहस्राद्दूर्ध्वं न भवितुं क्षमोऽतस्ता-दृशस्य वस्तुनो वर्णनात्कालिदासस्य प्रथमाब्दशतके वर्तमानत्वं सिद्ध्यति ।

(४) परं च विदिशाविशांपतेरग्निमित्रस्य नाटकीयवस्तुनायकत्वेन स्वीकृतौ महा-कवेराशयस्तदानीं ख्रिष्टीयाब्दाच्च पूर्ववर्तिनि काले पुष्यमित्रवसुमित्राग्निमित्राणां तत्कृताश्वमेधादीनामाख्यानस्य च ख्याततत्वात्तदानीन्तनानां स्पृह्यमाणत्वात् तादृशस्यैव वस्तुनः काव्यव्यापारस्याधारत्वेन स्वीकारस्तु कविसम्प्रदायानुरोधी प्रतिभातीत्यतो महाकविः ख्रिष्टाब्दप्रारम्भात्पूर्वतन एव । अमुष्मिन् विषये कविसम्प्रदायस्तु सूक्त एव जयानकेन "परीक्षकाणां रुचिमाकलय्य प्रकाशनीयः कविताप्रकर्षः । असा-त्विकां हि प्रकृतिं विलोक्य तीक्ष्णोऽभ्युपायो भिषजा न योज्यः" इति

(५) अपरं चोरगाख्यपुरस्य नाथमिति पाण्ड्यराजमुपवर्णयतो महाकवेः कालः पाण्ड्यवंशीयानां प्रतापवर्णनेनानुमीयते यत्सः प्रथमे शतके ख्रिष्टजन्मनः पूर्वमेवा-भवत् यतः प्लिनिटॉलमीप्रमुखैरैतिह्यकोविदैरीशवीयप्रथमद्वितीयाब्दशतके पाण्ड्या-नामपचीयमानं महिमानं ख्यापयद्भिश्चोलानां तदा प्रभुत्वं व्यज्ञापि ।

(६) यच्च कालिदासीयभावगाम्भीर्य्यमनुभवद्भिस्तस्य दार्शनिकत्वं च जानद्भि-रश्वघोषकालिदासयोः काव्यव्यापृतौ प्रभूतं साम्यमाकलयद्भिर्विद्वद्भिः समीचीनमेव तर्क्यते यत्कालिदासाश्वघोषोपजीव्यस्तत्पूर्ववर्ती नूनमेवेशुमशीयजन्मनो नार्वाक्तन इति ।

(७) महाकविना कालिदासेन विरचितोऽयं ग्रन्थ इति लब्धप्रख्ये ज्योतिर्विदा-भरणे "रूमदेशाधिपते"र्नाम्नोल्लेखः समुपलभ्यते । अयं च प्रसिद्धो रूमदेशाधिपो जूलियस सीज़र इति विवादशून्यमेवातो जूलियससमकालीनोऽयं महाभागो यत्र कुत्रचिदपि पञ्चपञ्चाशद्वर्षपूर्वमिशुमशीयजन्मनोऽभूदिति निश्चप्रचं बहूनां मते ।

**अस्य वास्तव्यम्**—अमुष्मिन्नपि विषये प्रेक्षावतामभिप्राये प्रायो महान् विवादः । कालिदासं तादृशं महामहिमशालिनं विद्वांसं परिज्ञायाऽऽत्मनः प्रान्ती-यधिया विद्वांसः स्वस्वभारतभूभागमलङ्कुर्वाणं महाकविमामनन्ति यथा वङ्गीयाः स्वयं कालीदासाः कालिदासं वङ्गीयं विधाय नदियावास्तव्यं निश्चित्यात्मनो गौरवं ख्यापयन्ति । परे काश्मीरिकाः महाकविं बाह्लीकजमित्यभिमन्यन्ते किन्तु तादृशार्थ-निगमनं प्रायो नैकान्तिकमेव, यतः कालिदासीयकाव्यरचनानां निटिलं निभालनेनेदं विचारसहत्वमाप्नोति तत्त्वं यद्येन केनापि हेतुना महाकवेः श्रीविशालायामवन्ति-कायां च सप्रश्रयो महान् पक्षपातो दरीदृश्यते । उज्जयिन्या विशालानां हर्म्याणां, तत्रत्यनदीनिर्झराणां, कुटिलाक्षिविक्षेपदक्षाणां रमणीनां च बहुधा बहुशो वर्णनात्

तादृशपक्षपातस्य "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी"ति भावप्राबल्याभावेऽदर्शनस्य निश्चितत्वादस्य कविकुलालङ्कारस्यावन्तिकत्वकल्पनमनलीकतरङ्किल ।

**तत्रभवतो जीवनम्**—यथा हि कविवरेण्यः कतमस्मिन् काले वर्षमिमं जन्मनालमकार्षीदिति सन्देहदरीमेवाधिष्ठितं वस्तु तथैव कतमं च कुलं कीदृशं च प्रदेशं कौ च पितरौ कविरत्नमिदं जन्मना सभाजयमासेति विदुषामद्यावधि नाभूदतिरोहितम् । बहवश्च तावत् प्रसन्नाः प्रसन्नतराश्च तर्काः पूर्वपूर्वतरतर्कप्रतिष्ठाप्रयोजकाः धीमद्भिरक्रियन्त तथापि ऐतिह्यधिया नास्ति किमप्यस्मिन् विषये निश्चप्रचम् । केचन विद्वांसो मन्वते यदयं काश्मिरिकः सन् स्वबाल्यावस्थायामेवेतस्ततः परिभ्रमन् नैकजनपदेभ्यो गच्छन् अवन्तिकां प्राप तत्रैव स्वीयकाव्यकलागौरवेण महाराजविक्रमस्य सभायां प्रवेशं स्थानं च लेभे परं च तत्र नैकविद्वन्मण्डलीमण्डितगोष्ठीषु स्वपाण्डित्यं स्थाने प्रकाश्य नवरत्नान्यतमत्वमार, प्राप च महाराजाश्रयेण महतीं कीर्तिम् । अपरे च वदन्ति यदयं महाकविः पुरा कौमारेऽतीव जडमतिर्बभूव । तस्य च पत्नी सुतरां मनोरमा सती स्वधवस्यासक्तिवशात् तस्मै महताधिकारेण प्राभवत् । तदीयमूर्खत्वेन खिन्नायां एकदा पितरं गतवत्यां तस्यां, तदीयविरहदूनमानसः, तस्या भीतः तां प्रति जिगमिषुरपि गन्तुमनुत्सहमानः भवगतीं देवीं कालीमुपास्त, तदीयप्रसादमहिम्ना सारस्वतं निधिमवाप, तादृशीं च प्रतिभामलभत । लब्ध्वा चाभीष्टं वरं सः श्वशुरालयं गत्वा द्वारि तिष्ठन् श्रृङ्खलानादमकरोत् । उद्घाटनायागतायां स्वप्रेयस्यामाह महाकविर्यदनावृतकपाटं द्वारं विधेहि । परिचित्य च वाचं सा तं पप्रच्छ यद्, "अस्ति कश्चित् वाग्विशेषः । तद्वाचमुपश्रुत्यास्तीति स्वप्रेयस्या वाक्यस्य एकैकं पदमादाय काव्यत्रयं कविना निरमायि, तद्यथा अस्त्युत्तरस्यामिति कुमारसंभवमहाकाव्यम्, कश्चित् कान्तेति खण्डकाव्यम्, वागर्थाविति रघुवंशं नाम पुनर्महाकाव्यमेव । एवं स मूढः कान्तायाः कान्तोपदेशवशात् महाकवित्वं प्रापदिति । अन्ये विपश्चितः प्रकल्पन्ते यदयं धाराधीशस्य भोजदेवस्य सखा तत्र च तदीयसभायाः कविवरेण्योऽयमितिच, यद्विषयिण्यो नैकाः कथा भोजप्रबन्धादिषु लभ्यन्ते । किन्तु यद्ययं प्रथमशताब्दीयस्तदा भोजदेवसमकालो भवितुं नार्हति ।

एवमेतादृशि सन्देहतिमिरतिरोहिते चरिते तदीये केवलं कल्पनमेव कल्पश्चेदनल्पं तथ्यमिदं प्रतिभाति यदयं कविर्जात्या विप्रः सन् शैवो बभूव । अयं काश्मीरिको वाऽवन्तिको वा तथाप्ययं प्रभूतं स्वजीवनमुज्जयिन्यामनैषीत् परश्चोत्तरभारतेऽयं बहुतिथं बहुधा प्रावात्सीत् । महाकालचरणयोः क्षिप्रातरङ्गिण्याश्च विषये तदीयामेतादृशीं भक्तिमनुभवता केनापि तस्यावन्तिकत्वं न शङ्क्येत । अपि चेदमनुमीयते यदनेन महाकविना क्वचिदपि दारिद्र्यदुःखं नान्वभावि । युक्तमेवाह कश्चन दरिद्रः "एकोऽपि दोषो गुणसन्निपाते निमज्जतीन्दोरिति यो बभाषे । नूनं न दृष्टं कविनापि तेन दारिद्र्यदोषो गुणराशिनाशी" । एवं हि सरस्वतीविलासभाजापि महाकविना इतस्ततः स्वप्रतिभयानेकराजन्यबद्धसख्येन सुखेन कालं यापयता भार-

तोऽयं वर्षैः साहित्यविश्वस्मिन् प्रोच्चैः पदं लम्भित इति नास्ति केषामपि विवादास्पदम् ।

## तत्रभवतः कालिदासस्य कवित्वं पाण्डित्यं च

तत्रभवतो महाकवेर्जीवनं निश्चयेन परिचेतुं यथा न पार्यते, इदमपि तथैव वक्तुमशक्यमेव यत् क्व तावत्तत्रभवतोऽध्ययनं, क्व वा बाल्येऽवस्थानं कश्च कविशेखरस्य गुरुरिति ।

विषयेऽस्मिन् विहिते तु गवेषणे प्रहिते वा लोचकलोचने तदीयप्रणीतग्रन्थाभ्यसनेन तदन्तर्गतानि नैकविधतन्त्रपरिचयनिदर्शनानि लभ्यमानान्येव प्रमाणत्वं प्रेक्षावतां भजेयुः । उपायान्तराभावपारवश्यात् अमुष्मिन् क्षोदक्षमे क्षेत्रे विचक्षणैर्महाकवेः प्रणीतत्वेन विद्वद्भिरङ्गीकृता ग्रन्थास्त्रिषु विभागेषु समालोचनसौकर्यान्निक्षिप्ताः । तत्र श्रव्यकाव्यानि कानिचित् महाकाव्यखण्डकाव्यरूपाणि, पराणि दृश्यकाव्यानि ततोऽवशिष्टानि प्रकीर्णकानीतराणि खलु काव्यानि । तत्र प्रथमकक्षावपतितानि महाकवेः कुमारसम्भवरघुवंशौ महाकाव्ये, खण्डकाव्ये च मेघदूतार्तुसंहारकाव्ये, द्वितीये च मालविकाग्निमित्रविक्रमोर्वशीयाभिज्ञानशकुन्तलाभिधानानि रूपकाणि, प्रकीर्णकेषु तदीयनिबन्धेषु शृङ्गारतिलक-पुष्पबाणविलास-श्रुतबोधज्योतिर्विदाभरणप्रभृतीनि रचनान्यभिमन्यन्ते ।

एतेषां च सम्यक्पर्यालोचनेन सहृदयैर्नूनमनुभूयते यन्महाकवेर्लेखिनी नितान्तं रसस्रोतोवहाऽध्येतॄणां सविशेषं हृदयाह्लादिनी विदुषां विश्वमखिलं कविवरस्यानुपमेन यशसा धवलयतितराम् ।

**प्राकृतिक-सौन्दर्य-वर्णनम्.**

कविवरेण्यस्तत्रभवान् कालिदासः साहित्यसौन्दर्यनिर्माणे रसधाराप्रस्रविणीप्रवाहसुमधुर-नाटकीयकृतिचातुर्ये च निरुपमो बभूवेति सर्वसम्मतम् । किन्तु किमधिकृत्यैतादृशो बहुमान इति त्ववश्यं विवेचनीयम् । प्राकृतसौन्दर्यवर्णने सूक्ष्मदर्शित्वे च कविकुलगुरोः स्वाभाविकोऽतिशयः । स च तत्र तत्र काव्येषु नाटकीयवस्तुषु च बहुशः परिदृश्यते । विक्रमोर्वशीयेऽपि—

“अग्रे यान्ति रथस्य” (१-५ पृष्ठ १३) तिपद्ये सवेगं गच्छतो रथस्य, तदुद्धूतधूलिपटलस्य अरावलिचक्रयोः चामरस्य, ध्वजपटस्य च प्रत्येकं जवातिशयमहिम्ना कीदृशी स्थितिः बभूवेति वर्णना कालिदासस्य सूक्ष्मदर्शित्वं, प्रकृतिभावसौष्ठवप्रदर्शनपटुत्वं च सम्यङ् निदर्शयति । द्वितीयेऽङ्केऽपि— ‘अग्रे स्त्री नखपाटलं कुरबकं (७ पृष्ठ ५५), “उष्णार्तः शिशिरे” (२२ पृ. ९८) इति पद्ये मध्याह्नवर्णनम्; तृतीयेऽङ्के—— ‘उत्कीर्णा इव वासयष्टिषु’ (२ पृ. १०६) “उदयगूढशशाङ्कमरीचिभिः” (६ पृ. ११०); चतुर्थेऽङ्के “विद्युल्लेखाकनकरुचिरं” (१३ पृष्ठ १६८); “तरङ्गभ्रूभङ्गा” (५२ पृ. २००); पञ्चमेऽङ्के च—— नारदस्य जङ्गमकल्पवृक्षत्वेन वर्णनम् (१९ पृ. २५१) सर्वमप्येतत् कालिदासान्तःकरणे प्राकृतिकसौन्दर्यविषये आदरातिशयः प्रेमातिशयश्चासीदिति विशदीकरोति ।

सङ्गीते नाट्यशास्त्रे च प्रभूतं पाटवं कालिदासस्यासीत् । वाद्येषु— तूर्य-मुरज-पुष्कर-वल्लकी-मृदङ्ग-मर्दलादीनां वर्णनं स्थाने स्थाने समुपलभ्यते । तत्रापि वीणायाः प्राधान्यं कविवरकृतिषु दरीदृश्यते । मयूर-नृत्यस्य सौन्दर्यं, केकायाश्च माधुर्यं कालिदासस्य मनोऽरञ्जयत् । सर्वेष्वपि नाटकेषु नाट्यकलायाः प्राधान्येन प्रदर्शनं तु कृतमेव । मालविकाग्निमित्रे—— 'नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्' इति कथयता कविवरेण नूनं नाट्ये निरतिशयं हार्दिकं प्रेम प्रकाशितम् । नाट्यभावयोरन्योन्यसंवलितः सम्बन्ध एकत्र मिलितयोश्च तयोश्चमत्कारातिशयः "अङ्गैरन्तर्निहितवचनैः" (२-८) इति पद्ये मालविकाया नृत्यवर्णनावसरे निपुणमुपवर्णितः । विक्रमोर्वशीयेऽपि—

**सङ्गीतनाट्ययो-नैपुण्यम्.**

"मुनिना भरतेन यः प्रयोगो भवतीष्वष्टरसाश्रयो निबद्धः" (२-१७ पृ० ८२) इति पद्ये भरतप्रणीतनाट्यशास्त्रविषयक आत्मन आदरातिशयः प्रदर्शितः । दिव्यसङ्गीतनाट्यनिपुणाया उर्वश्या मानुषसङ्गीतनाट्यनिपुणायाश्च मालविकायाः कलाचातुर्यस्य वर्णनं सम्यग् विदधतः कालिदासस्य परमवैदग्ध्यं सन्देहानास्पदमेव ।

नृत्यशास्त्रे परमप्रवीणो महाकविः अतिमात्रमलंकृताया नट्या रङ्गप्रवेशं; नृत्यकलायाः, अभिनयस्य, सर्वाङ्गसौष्ठवाभिव्यक्तेश्च कृते साधु नामन्यत । तामेव स्वसम्मतिं परिव्राजिकामुखेन मालविकाग्निमित्रे प्रतिपादयामास—"सर्वाङ्ग—सौष्ठवाभिव्यक्तये विरलनेपथ्ययोः प्रवेशोऽस्तु" । आधुनिकभारतीयनृत्यकलाचतुराणां पाश्चात्यनाट्यशास्त्रकुशलानां चाद्यापि नास्मिन् विषये कोऽपि विशय इत्यहो महानुभावस्य कालिदासस्य प्रावीण्यम् यत्, परःसहस्रावधिवर्षेष्वतीतेष्वपि न तन्मतमसामञ्जस्यं भजते ।

भावहावैः सुसन्दानितस्य नृत्यस्य वाद्यगायनाभ्यां संमिश्रणं सामाजिकानां रसचर्वणाभिमुखं परमाल्हादजनकं भवतीति, कविवरेण कुमारसंभवाख्ये महाकाव्ये सूचितम्—

"सुसन्धिबन्धं ननृतुः सुवृत्तगीतानुगं भावरसानुविद्धमि"ति । (७-३६)

कालिदासीयेषु काव्येषु नाटकेषु च, तत्र तत्राकाशे नक्षत्राणीव नृत्यसङ्गीतकलावर्णनपरिप्लुताः सन्दर्भा बहुशो दृश्यन्ते । तत्राप्ययं विशेषो यत्, कविवररचनासु अतिसूक्ष्मा अपि, विद्वद्रसिकचर्वणामात्रगोचरा अपि कलाश्चित्रार्पिता इवोद्बोध्यन्ते । यथा हि विक्रमोर्वशीये—

"गन्धुम्माइअ महुअर गीएहिं" (४-१२ पृ. १६७) इति पद्ये,

'नृत्यति कल्पतरु'रिति यदुक्तं तच्छान्दमहिम्ना रसिकानां पुरतो दृग्गोचरमिव जायते । तथा च—

अयमासारोच्छलितशैलतटस्थलीपाषाणमधिरूढः—

'आलोकयति पयोदान् प्रबलपुरोवातनर्तितशिखण्डः ।
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन ॥' (४-१८ पृ. १७३)

इत्यत्र धारासम्पातसमुच्छलितशैलतटे शोभमानायां स्थल्यां पाषाणमधिरूढः प्रबलवेगेनोच्चलितबर्हो मयूरः केकागर्भेण सोत्सुकेन कण्ठेन मेघानालोकयतीति सहृदयानां मनसि चित्रितमिव। एवमेव मालविकाग्निमित्रे—

'वामं सन्धिस्तिमितवलय' (२-६) मिति पद्येऽपि।

पुनश्च कविवरस्य सङ्गीतनाट्यशास्त्रयोरैदंपर्येण प्रावीण्यमासीदिति तत्र तत्र शास्त्रीय-पारिभाषिकशब्दानां अर्धचर्चरी-चर्चरी-द्विपदिका-कुटिलिका-कुलिका-मन्द-घटीत्यादि सङ्गीतशास्त्रीयाणां; खण्डिक-गलतिका-चतुरस्रकार्धचतुरस्रक-ककुभ-खुर-कादिनाट्यशास्त्रीयाणां च शब्दानां प्रयोगेण विज्ञायते।

एवं शास्त्रनिपुणोऽपि कविः कालिदासः नाट्यस्य प्रधानत्वममन्यत। उक्तं च मालविकाग्निमित्रे— 'प्रयोगप्रधानं नाट्यशास्त्र"मिति।

**सौन्दर्य-वर्णनम्.**

प्राकृतिकसौन्दर्यवर्णननिपुणः प्राधान्येन शृङ्गाररसपरिपूर्णान्तःकरणो महाकविः कालिदासो नाटकीयपात्राणां, तत्रापि विशेषतो नायिकानां सौन्दर्यवर्णनेऽतीव मार्मिकः सूक्ष्मदृक् चासीत्, यद्यपि सौन्दर्यदर्शनजन्माऽऽह्लादस्तु समेषामेव जनानां निर्विशेषस्तथापि; किं सौन्दर्यम्? केऽस्य स्वरूपघटका अवयवाः? कीदृशः कस्यावलोकयितॄणां मनसि प्रभावः? इति सर्वं विविच्य सम्यक् सौन्दर्यचित्रणं न सुकरम्। प्रतिभाशालिनां महाकवीनामेव कृतिष्वेतदुपलभ्यते।

**किं सौन्दर्यम्?**

नायिकानामङ्गेषु यल्लावण्यं माधुर्यं च साक्षात्क्रियते तत् प्राकृतिकसौन्दर्यस्यैवावयवभूतमिति पश्यता कालिदासेन तत्र तत्र लता-पल्लवकुसुमादिसाम्यं नायिकावयवानां प्रदर्शितम्। तथा हि कुमारसम्भवे—

"आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्।
पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव॥" (३-५४)

इति पद्येन पार्वत्याः सौन्दर्यमुपवर्णयन् तस्या लतासाम्यं पूर्णोपमया दर्शयति। एवमेव शाकुन्तलेऽपि—

"अधरः किसलयरागः कोमलविटपानुसारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥"

इति पद्ये संप्राप्तयौवनाया नायिकाया वसन्ते कुसुमितलतासाम्येनोपवर्णनम्। विक्रमोर्वशीयेऽपि—

"यावत्पुनरियं सुभ्रूरुत्सुकाऽपि समुत्सुका।
सखीभिर्याति संपर्कं लताभिः श्रीरिवार्तवी॥"

इति पद्ये सखीभिः सहोर्वश्याः सम्मेलनाय रथमुपश्लेषयितुमाज्ञापयन् राजा लतासु माधव्याः श्रियमिव सखीष्वप्सरःसु उर्वश्या अतिशयिततां द्योतयति साम्यमुखेन।

मालविकाग्निमित्रेऽपि च—

"स्मयमानमायताक्ष्या" इति (२-१०) पद्येऽपि तथैव।

एवमेव स्वाभाविकसौन्दर्योपम्येन नायिकासौन्दर्यं वर्णयन् कालिदासो रमणीनां रामणीयकमपि भगवत्याः प्रकृत्या एकं विभागं मन्यमानः,

"क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः" इति क्षणे क्षणे विपरिणमन्तं नावीन्यं भजमानं चामन्यत।

कालिदासस्य सौन्दर्यविषयिण्यः कल्पना न केवलं शरीरसम्बद्धाः किन्तु, आत्मसम्बद्धाः। ता न केवलं लौकिक्योऽपि तु दिव्या आध्यात्मिक्यश्च। यत्किमपि वस्तु सुन्दरं तत् कालिदासीयकल्पनानुकूलं सर्वथाऽनवद्यं, अमानुषं, पुण्यसंभवं, सात्विकगुणसन्दानितं च। नायिकागतं सौन्दर्यं, माधुर्यं, लावण्यं च परमानन्दसब्रह्मचारि दिव्यानन्दघनतोद्बोधकं च सत् "शान्तं शिवं सुन्दर"मित्यादिरूपेणोपवर्ण्यमानस्य परमेष्ठिनः सौन्दर्यसहोदरं सर्वास्ववस्थासु कमनीयं नायकानां मनसां परमायतनं; तेषां मनोवृत्तेर्निवृतावेकमात्रं साधनं भवति। सर्वथा नायकानां तादृशविचित्राह्लादजनकं सौन्दर्यं कालिदासीयेषु रूपकेषु परमपुरुषार्थतया सर्वदा आप्यं; तदभावेऽनन्यान्तःकरणवृत्तिसमुन्मादजनकं परमभक्तानां स्वेष्टदेवतास्मृतिधाराप्रवाहकल्पं सर्वथाऽलौकिकप्रेमसन्तानसमुद्बोधकं वर्तते। तथाहि

शाकुन्तले—

"चित्ते निवेश्य परिकल्पितसत्वयोगा रूपोच्चयेन मनसा विधिना कृता नु।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः॥" (२-९)

इति पद्येऽनुपमरूपवतीं शकुन्तलां धातुरन्यां स्त्रीरत्नसृष्टिमिवामन्यत कविः। एवमेव विक्रमोर्वशीये—

'अस्याः सर्गविधा'विति (१-१०) पद्ये दिव्याप्सरस उर्वश्या निर्माणे तदनुरूपमेव निर्मातारं सम्भावयतः कवेरयमाशयः सुस्पष्ट एव यत्, तादृशीं सुन्दरीं निर्मातुं विलक्षणैव सामग्री कमनीयसृष्टिविचक्षणश्च वेधा आवश्यकः। एवं बहुषु स्थलेषु कालिदासीयं सौन्दर्यविषयकं कविमात्रासाधारणं दिव्यभावनासम्मिश्रं मतं सहृदयानां मनः संमोदयति।

**सौन्दर्यस्य स्वरूपघटका अवयवाः.**

कालिदासीयवर्णनानुकूलमिदं परिस्फुरति यत् सर्वथाऽनवद्यत्वं, सर्वास्ववस्थासु चारुता, मण्डनसम्भाराभावेऽपि मञ्जुत्वं, लावण्यं, रेखा, कान्तिः, भूषणानामप्यभूषकत्वं, सौजन्यं, तादृशसुन्दरीकामुकस्याहोभाग्यता चेत्यादयो धर्माः सौन्दर्यस्वरूपघटका इति। तथा हि मालविकाग्निमित्रेऽनुपमसौन्दर्यशालिन्या मालविकाया वर्णनं विदधता कविना सर्वथाऽनवद्यत्वं सर्वावस्थासु रमणीयता चास्याः प्रदर्शिता—

"अहो सर्वास्ववस्थासु अनवद्यता रूपस्य—
दीर्घाक्षं शरदिन्दुकान्तिवदन"मिति (२-३) पद्ये।

एवं नृत्यकलानुरूपं मालविकायाः सौन्दर्यमुपवर्णयन् तस्या इतरावस्थास्वपि माधुर्यं रामणीयकं च वर्णयति—

"अहो सर्वास्ववस्थासु चारुता शोभां पुष्णाति"। तथाहि
"वामं सन्धिस्तिमितवलय"मिति (२-६) पद्ये।

अस्या नृत्यमपि "यथाशास्त्रं सर्वमनवद्यम्"।

शाकुन्तलेऽपि निरुपमसुन्दरीं शकुन्तलां,
"मानुषीषु कथं वा स्यादस्य रूपस्य संभवः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात्॥"

इति पद्ये प्रथमत एव राजाऽमानुषरूपवतीं मेने। सा हि दिव्यमानुषसम्भवा तादृशलावण्यकान्तिरूपरेखादिसम्पन्ना यत्तत्परित्यागानुशयदग्धहृदयो दुष्यन्तश्चित्रगतां तामवलोकयन् तानेव गुणान् स्मरति

"दीर्घापाङ्गविसारिनेत्रयुगलं लीलांचितभ्रूलतं
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम्।
कर्कन्धुद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखम्
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम्॥" (६-१४)
"तथापि तस्या लावण्यं लेखया किञ्चिदन्वितम्" (६-१५)

प्रकृतिमधुरायाः स्वरूपानुरूपवेषभूषायनलङ्कृतायाः सहजं सौन्दर्यं परिस्फुरतीति कालिदाससंमतं— तथाहि शाकुन्तले—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनाऽपि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥

कुमारसंभवेऽपि— "अन्योन्यशोभाजननाद्बभूव
साधारणो भूषणभूष्यभावः॥" (१-४२)

विक्रमोर्वशीयेऽपि— "आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः॥"

कालिदासीयेषु रूपकेषु सौन्दर्यं सर्वथा सौजन्यकौलीन्यादिसहकृतमेव तथाहि मालविकाग्निमित्रे—

"आकृतिप्रत्ययादेनामनूनवस्तुकां सम्भावयामि"

शाकुन्तलेऽपि— "न तादृशा आकृतिविशेषाः गुणविरोधिनो भवन्ति"

एवं आकृतिविशेषं गुणविशेषाव्यभिचारिणं उच्चवंशसहकृतं च मन्वानः कविः बाह्यं रूपमान्तरगुणविशेषप्रतिफलकं आभ्यन्तरगुणविशेषाणां च उच्चवंशमात्रसंभवत्वं साधारणतः उपलभ्यते इति मानसशास्त्रीये (Psychological) अभ्युपगमे विश्वसति स्म । तदेवोक्तं कुमारसम्भवे—

"यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथाहि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥"

इदमेव मानसशास्त्रीयं तत्त्वं आंग्लमहाकविः शेक्सपीयरः स्वनिबद्धे 'टेम्पेस्ट' नामनि रूपके प्रथमेऽङ्के द्वितीये दृश्ये प्रादर्शयत्

"तादृशि सौन्दर्यमन्दिरे दोषावहं किमपि न सम्भाव्यते"*

निरुपमसुन्दरीं कामयमानस्य अन्ततश्च तां भोक्तृत्वेन लभमानस्य चाहोभाग्यत्वं महापुण्यशालित्वं च महाकविरमन्यत–तदेव शाकुन्तले स्पष्टमुक्तम्—

"अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥"

एवं असामान्यगुणसहकृतं सौन्दर्यं महतः सुकृतस्य फलं अपुण्यभाजनमल्पपुण्यवन्तं वा नोपस्थातुमर्हति । तथा च तादृशसुन्दरीप्रेमभाजनस्य कृतार्थत्वं अहोभाग्यत्वं चाप्युक्तं यथा विक्रमोर्वशीये—

"इदं तस्या रथक्षोभादंसेनांसं निपीडितम् ।
एकं कृति शरीरेऽस्मिन्, शेषमङ्गं भुवोभरः ॥ (३-११)

पुनश्च—

"सामन्तमौलिमणिरञ्जितपादपीठ-
मेकातपत्रमवनेर्न तथा प्रभुत्वम् ।
अस्याः सखे! चरणयोरहमद्य कान्तं
आज्ञाकरत्वमधिगम्य यथा कृतार्थः" ॥ (३-११)

एवं असाधारणसुन्दरीं दिव्यां नायिकां उर्वशीं कामयमानः पुरूरवाः आत्मनः एकातपत्रप्रभुत्वापेक्षयाऽपि तस्याश्चरणयोराज्ञाकरत्वं जन्मसाफल्यहेतुं मन्वानः तद्दास्येन आत्मानं कृतार्थयामास

"अनन्यनारीसामान्यो दासस्त्वस्याः पुरूरवाः" (३-१८) इति,

---

* "There's nothing ill can dwell in such a temple:
If the ill spirit have so fair a house,
Good things will strive to dwell with't." (Temp. I-ii)

शाकुन्तलेऽपि—

"मनोरथाय नाशंसे किं बाहो! स्पन्दसे मुधा?
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥"

इति शकुन्तलालाभं दुष्यन्तः आत्मनः श्रेयः अमन्यतेति स्पष्टं ध्वनितम्। मालविकाग्निमित्रेऽपि—

"भाग्यास्तमयमिवाक्ष्णोः हृदयस्य महोत्सवावसानमिव।
द्वारपिधानमिव धृते मन्ये तस्यास्तिरस्करिणीम् ॥ (२-११)

महाकविः कालिदासः न केवलं मानुषसौन्दर्यवर्णनपटुरेव किन्तु मानुषीं दिव्यमानुषसंभवां शकुन्तलां, दिव्यां चोर्वशीं वर्णयन् स्वं निरुपमं सौन्दर्यवर्णन-प्रावीण्यं प्रागल्भ्यं चादर्शयत्। न केवलं युवतीनामेव किन्तु बालानामपि सौन्दर्य-वर्णने परं निष्णातः सः जगन्मातरं पार्वतीं बाल्यादारभ्यावर्णयत्—

"दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा।
पुपोष लावण्यमयान्विशेषान् ज्योत्स्नान्तराणीव कलान्तराणि" ॥

एवं बाल्यात् परं वयः प्रतिपद्यमानायाः पार्वत्याः सर्वाङ्गीणं परिणामं सूक्ष्मदृशा वर्णयतः कालिदासस्य नैपुण्यं सहृदयानां सुस्पष्टम्।

तथा हि उमामुखं चन्द्रकमलयोः लक्ष्मीं भजमानं वर्णयन् सः सहृदयानां प्रमोद-मावहति।

"चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखं तु प्रतिपद्यलोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः" ॥ (१-४३)

अस्याश्च सर्वाङ्गीणं सौन्दर्यं वर्णितं कविना—

"सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन"।
सा निर्मिता विश्वसृजा प्रयत्नात् एकस्थसौन्दर्यदिदृक्षयेव" ॥ (१-४९)

एवमेव मेघदूते यक्षसुन्दरीवर्णनं हृदयग्राहि—

"तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः ॥" (उ० २१)

एवं कालिदासीयसौन्दर्यवर्णनं जनसामान्यहृदयंगमम्। एतादृशं सौन्दर्यं प्रत्यक्षी-कुर्वतः सर्वस्यापि मनः प्रमोदभरपूरितं भवत् सर्वथा सुन्दरवस्तुनः तदवलोकयितुश्च अतिदुष्करसुकृतफलतामस्यावगमयति।

सामान्यतः सकलशास्त्रावगाहनपरिपूतान्तःकरणः सर्वतन्त्रापरतन्त्रोऽपि महा-कविः स्वकीयासाधारणकविप्रतिभया सर्वानतिशेते।

"शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥" (का. प्र. ३)

इति मम्मटभट्टोक्तदिशा कवित्वबीजरूपसंस्कारविशेषरूपायाः प्रतिभापरनामधेयायाः शक्तेरेव काव्यनिर्माणे कारणत्वं लोकशास्त्रनिपुणतायास्तु सहकारित्वम् । उत्तमकार्यनिर्माणे प्रधानकारणस्योत्तमता एव प्रयोजिका नतु तादृशी उत्तमता सहकारिकारणानामपेक्षिता । अत एव सत्स्वपि बहुषु कविपण्डितेषु संस्कृतसाहित्ये सुतरां मान्यः कविः कालिदास एव । पण्डितवरेण दण्डिना कालिदासं प्रशंसता उक्तम्—

"लिप्ता मधुद्रवेणासन् यस्य निर्विषया गिरः ।
तेनेदं वर्त्म वैदर्भ कालिदासेन शोभितम् ॥"

एवं स्वप्रतिभामहिम्ना यत्किञ्चिदपि कालिदासो लिलेख तत्सर्वमेव कविकुलमान्यं, माधुरीपरिप्लुतं, भावगभीरं, वाग्वैदग्ध्यसम्मानितं, उत्तमकाव्यतामभजत् । किम्बहुना अलौकिक्या प्रतिभया असौ कविवरेण्यः पूतः विभूषितश्च ।

**महाकवेर्वाक्सरणिः**—महाकवेः कालिदासस्य गीर्वाणवाणी नैसर्गिकी रसस्रोतोवहाऽप्रतिहतगतिर्माधुर्येण परिपाकेन चाश्वघोषादीनां तत्पूर्वतनानां कवीनां लेखिनीं परिहसन्त्यपि बन्धस्य गाढत्वेन रहितैव प्रसादगुणोपपन्ना प्रसन्नतरा प्रवहतीति समेषां चर्वणाजुषां विदुषामनुभवो विश्वजनीनः खलु । कविवरेण दण्डिना कालिदासस्य प्रबन्धेषु सर्वत्र वैदर्भी रीतिरेव प्राचुर्येण वरीवर्तत इति यथोचितमेवोक्तम् । कालिदासीयकृतिषु सर्वत्र शब्दानां सौष्ठवं, वर्णानां रसानुगुण्यं, श्रुतिकटुवर्णसंयोगहीनत्वं, पदानामनिहितार्थत्वं, वृत्तानां भावाभिव्यञ्जकत्वमनल्पं सर्वत्र शोभतेतराम् । विशेषतश्च महाकवेर्विविधानामलङ्काराणां प्रयोगो नितरामुत्कर्षशाल्येव, ततोऽपि कालिदासस्योपमालङ्कारप्रयोगस्तु अद्वितीय एव । यद्यपि परेषामलङ्काराणामुपयोगो महाकविना स्थाने प्राचुर्येण विहितः, परैश्च कविवरैरप्युपमालङ्कृतेर्बहुशो बहुधा प्रयोगोऽङ्गीकृतस्तथापि कालिदासस्य उपमानान्वेषणे यादृशी कला समुपलभ्यते तादृशी तु इतरेषु दुर्लभैव । यथा हि महाकविर्वर्ण्यस्य वस्तुनः सम्यक् चित्रचित्रणायैवोपलङ्करणं प्रयुनक्ति येन सहृदयानां हृदि वस्तुनः स्फुरणं तथाङ्कितं भवति यथाऽदृष्टमपि वस्तु प्रत्यक्षमिव भायात् प्रतीतं च तत्स्यादतीव चमत्कारि भूरि च मनोहारि; अत एवायमाभाणको विचाचणानां सुतरां परिचित एव "यदुपमा कालिदासस्येति ।"

सकलशास्त्राकूपारपारीणत्वेनास्य कविकुलगुरोः कृतिषु यथाप्रस्तावं तत्तच्छास्त्रविषयिणः सन्दर्भास्तस्य वाचि प्रसादगुणस्य वैदर्भीरीतेः प्रथिताया वाक्सरणेश्च पूर्वोक्तानां समेषामेव गुणानां निदर्शनानि सर्वत्रैव दृश्यन्ते । ते च सुधीभिरालोचकैस्तत्र तत्र द्रष्टव्याः इति विस्तरभिया असौ विषयो नात्र प्रतन्यते ।

---

## English Introduction.

---

## CONTENTS.



---

# INTRODUCTION.

## "The Sanskrit Drama"

At the outset, it is advisable to give a brief outline of the general structure of the classical drama which would enable an average reader to have a clear comprehension of the particular style and technicalities of the Indian dramatic art.

"Poetry", as defined by Pandit Jagannath in his famous work entitled Rasgangadhara, "is a word or the combination of words which gives out a charming sense." The word 'charming' is further explained by him as 'a substratum of the quality' of evincing or rather creating an uncommon delight. According to another learned writer on Sanskrit poetics, sentiment is the vital self of Poetry.

Such poetry, irrespective of its intrinsic merit, is divided into two classes: (1) दृश्य that which can be seen or exhibited and (2) श्रव्य that which can be heard. The drama, as it can be enacted on the stage, falls under the first class. Rupaka is a general term given to all dramatic compositions which have *rasa* or sentiment for their substratum. It is divided into ten classes which, according to धनञ्जय, are as follows: (1) नाटक (2) प्रकरण (3) भाण (4) प्रहसन (5) डिम (6) व्यायोग (7) समवकार (8) वीथी (9) अङ्क and (10) ईहामृग। It has a subordinate class, viz. of उपरूपकs of which नाटिका like Ratnavali, सट्टक like Karpurmanjari and त्रोटक like Vicramorvashiyam are prominent.

वस्तु or Res-business, नायक or the hero, and रस or sentiment are the three main features of every Rupaka or Uprupaka, and they, constituting the very self of every dramatic composition, are dealt with in detail:—

## "वस्तु or the Res-business"

वस्तु or the plot of a play is of two kinds: आधिकारिक or the principal which relates to the chief characters and prevails right upto the end of the composition and प्रासङ्गिक or the accessory which is only meant to further the plot or the main topic of the play. It is further divided into two kinds, viz. पताका and प्रकरी। The first is an episode which evinces the progress of the plot and sometimes it is of such a considerable length as prevails throughout the whole play. The second is

an episode of minor importance because in this no principal characters take any part. In addition to the aforesaid, there are three more elements which are essential to the development of the plot, viz. बीज which is like a foundation stone upon which the whole superstructure of the play is gradually built, or it is the very seed of the plot bearing diverse aspects and leading to multifarious results; बिन्दु is that which connects the broken plot, the link of which has become disconnected on account of any subsidiary incident; कार्य is the final aim of the plot, the achievement of which closes the drama.

The plot of a drama may be of three types: one derived from history, the other entirely springing from the poet's fancy and the third, though historical in origin, considerably modified by the poet so as to suit his immediate purpose and sense of poetical justice in his composition.

Then again, there are five stages of the development of the dramatic plot: आरम्भ, i. e. beginning of the enterprise, यत्न, possible efforts for its attainment, प्राप्त्याशा, expectation of its achievement, नियताप्ति, certainty of success by means of the removal of impediments cropping up over there, and finally फलागम the success. In the course of the gradual development of these five stages, there should be connecting links between the principal and the accessory incidents, which are known as Sandhis. These are also five: मुखसन्धि which combines the बीज and the आरम्भ, that is, during this, the seed is sown. प्रतिमुखसन्धि contains the efforts undertaken to sprout up the seed as exhibited in the first सन्धि। गर्भसन्धि consists in the partial attainment of the principal end. Here various obstacles creep in, and yet the plot attains its root. विमर्शसन्धि results in an exuberant growth of the plot, greater than that in the former, of course, the final attainment being beset by fresh difficulties. Lastly, the निर्वहणसन्धि which concludes in the harmonious combination of all the discordant elements in a drama closes finally with the air of success.

The plot of the play, be it historical, or fictitious is either सूच्य which means implied and requires suggestion or दृश्य श्रव्य which is capable of both representation and hearing and its character is highly sentimental and charming. In the case of the former which is more common, the suggestions can be amplified in five ways: (i) विष्कम्भ is that which connects the episode of the previous act with that of

the following one, (ii) प्रवेशक when put up in between the two acts suggests some past or future incident to connect the main topic of the play, through the lower characters alone. (iii) चूलिका the suggestion of some event from behind the curtain. (iv) अङ्कावतार hints the subject-matter of the following act, and forms the final scene of the previous act. (v) अङ्कमुख which suggests the substance of all the rest of the acts in one.

The subject-matter of the play presents itself in three ways: प्रकाशम्, that which is to be heard by all, स्वगतम्, that which is spoken to one's self and नियतश्राव्य that which is to be listened to by particular persons only. The last is of two kinds, viz. जनान्तिक which is a talk between two persons only, and अपवारित which consists in giving out some secret in a way concealed from others. To add to these, there is one, known as आकाशभाषित or speech from the void or a place above or unknown.

## "The Hero and the Heroine"

The qualifications of a hero are modesty, decorum and courtesy, munificence and civility, aristocracy and high birth, zeal and brilliance, bravery and learning, steadfastness of mind, skill and art, with speech, both eloquent and sweet.

A dramatic hero can be one of these four types:—He may be a धीरोदात्त, or a hero having sublimity of thought, magnanimity of nature, patience of mind, firmness of resolution, want of self-assertion, self-restraint and strict adherence to his engagements; धीरोद्धत is that type of a hero who is crafty and capricious, egoist and self-panegyric; धीरललित who is careless and meek, pleasure-seeking and happy; धीरप्रशान्त who is lively and peaceful and endowed with practically all the best qualities as such.

Among erotic heroes, each of these may again be of four kinds: दक्षिण = showing equal devotion to many women, though principally attached to one: i. e. gallant; शठ = who remains attached to one even at the cost of the displeasure of the other; i. e. sly; धृष्ट = professing his love to one, and even facing reproaches without being least ashamed; and अनुकूल having unflinching devotion to one lady. The hero the first kind has eight qualities, viz. शोभा, विलास, माधुर्य, गाम्भीर्य, धैर्य, तेजस्, लालित्य and औदार्य, which are explained in the comment wherever they occur.

The **hero** of this play is a historical personage, the king Pururavas of the lunar race, the ruler of Pratisthan and son of Budha and Ila. He is, by nature, of a gallant type of hero and by conduct sly in his dealings, as he keeps himself attached to Urvashi even at the cost of the displeasure of his queen Aushinari. As a gallant type of hero he is always found lacking in self-assertion (cf. ननु वज्रिण 1-19). He is unmindful of the failings of his people (cf. Vidushaka's breaking the news and loss of भूर्जपत्र later on). He is magnanimous throughout the play. He is full of valour (Cf....क्रस्मा परित्रातव्या etc.) and is always resolute in his undertakings.

Turning to the **assistants of the hero,** we find, पीठमर्द the first, who is the hero of the पताका, a devout assistant to his master and smart in discourse. Next is विदूषक who is his constant companion, administrator in his love-affairs, a man of ready wit and plays a part which helps the general denouement of the play. There are others, like विट, नट, शकार and similar ones who are proficient in one art only. Besides this, the hero may be aided by his political or ecclesiastical ministers, ascetics and friends and eunuchs, mutes and others as well. At times there is a Rival Hero, or प्रतिनायक who is just the contrapositive to the main hero, being rapacious, bold and of evil conduct.

As the assistant of the hero of this play, there is only one, by name Maṇavak, who plays the part of the clown in the drama. He is always jocund in his spirit and cracks jokes even at the expense of the hero. He is very shrewd (Obs. his replies when he lost the भूर्जपत्र), and he always takes delight in setting the two balls against each other (Ref: श्रान्तोऽस्मि प्रियवयस्यमस्या मृगतृष्णिकाया निवर्तयितुम्).

The **heroine** whose qualifications are more or less similar to those of a hero is classed under three types: स्वीया = the married wife of the hero; अन्या or परकीया, one belonging to some one else; सामान्या or a common woman. The first is of three kinds: मुग्धा, मध्या and प्रगल्भा; the second of two kinds: परोढा and कन्यका; and the last is of its own kind. They are again of various kinds: e. g. अभिसारिका, she who herself condescends to go to her lover or invites him to her residence, and कलहान्तरिता = wrathful, and so-on. For her assistants, she may have सखी, दासी, धात्रेयी (nurse), प्रतिवेशिका (neighbourly woman), and the like, who have similar qualities to those of

the friends of the hero. दूत and दूती that is male and female messengers are the common assistants and may be निसृष्टार्थ who act according to the sentiments of both, or मितार्थ= speaking little, or lastly सन्देशहारक, who run simply on errand.

The heroine of this play is Urvashi, a celestial damsel. She owes a fast attachment to her lover Pururavas (Ref.: she invites malediction by misquoting the name of her lover for Purushottam). As a heroine, she belongs to the *Abhisarika* type of the latter kind, viz. one who of her own accord moves towards her lover. But then, there is a rival to the heroine, the *Pratinayika*, Aushinari, the daughter of the king of Kashi and the crowned queen of the hero. She is jealous by nature, viz. *Kalahantarita* and in her behaviour self-conscious and assertive. The assistant of the heroine is *Chitralekha*, a निसृष्टार्थ type of a दूती, very closely attached to her friend Urvashi. The assistant of the rival heroine is her maid-of-honour, Nipunika, who is very clever and reliable.

## "Rasa or Sentiment"

"Rasa is that lasting impression or feeling produced to his overwhelming delight in a man of poetic sensibility by the proper action of the विभाव and अनुभाव, सात्त्विक and सञ्चारी भाव।"

भाव or feeling is a strong emotion which arises from the object under sight, creating such pleasure or pain as completely perverts the heart of every average human being. विभाव is that the perception of which leavens the main sentiment. It is of two kinds: आलम्बन that is the substratum of the main sentiment, be it a person or a thing with respect to which a sentiment arises; e. g. नायक is the आलम्बन for नायिका and vice versa. उद्दीपन is that which awakens or promotes the development of the sentiment. अनुभाव is a beaming manifestation of the sentiment by means of gesticulations. सञ्चारीभाव or the accessory emotions are those which occasionally appear and disappear and strengthen the main sentiment. Besides, there is the स्थायीभाव or the permanent sentiment upon which no sentiment whether foreign or akin to its nature has any bearing; it is permanent like salt diluted in water. It never changes with a temperory contrary sentiment but seems to say with Tennyson's Brook

"Men may come and men may go, But I go on for ever." A sentiment would become subsidiary to the other if the आश्रय of the both happen to be the same. Even two different रस one being अङ्गी or the principal and the other अङ्ग or auxiliary, may be inter-woven in one and the same play.

There are eight permanent sentiments that give birth to the principal eight रस। रति is the स्थायीभाव of the sentiment of श्रृङ्गार or the erotic; हास for the हास्य or the comic, शोक for the करुण or the pathetic, क्रोध for रौद्र or the furious; उत्साह for वीर or the heroic, भय for भयानक or the terrible, जुगुप्सा for the बीभत्स or loathsome and विस्मय for अद्भुत or the marvellous. According to the maxim "शान्तोऽपि नवमो रसः" the sentiment of शान्त the quietistic, having शम for its स्थायीभाव, is the ninth.

The sentiment of श्रृङ्गार is the foremost and commonest of all. It may be either विप्रलम्भ or love in separation and सम्भोग or love in union. विप्रलम्भ may be due to अयोग without the original contact which results in ten stages of Cupid, known as अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसंप्रलापाश्च । उन्मादोऽथ व्याधिर्जडता मृतिरिति दशात्र कामदशाः। or due to विप्रयोग = the separation after once having enjoyed a hearty union. विप्रयोग may be caused by मान the jealousy arising from the violation of the duties by a lover, or प्रवास, length of journey or शाप the malediction arising from the displeasure of a deity or a sage, which may be rectified later on. सम्भोग श्रृङ्गार is that in which the lover and the beloved enjoy the intimate contact with each other.

The ruling sentiment in this play is सम्भोग श्रृङ्गार or the love in union. The substrata of the sentiment are inter alia Pururavas and Urvashi. The first contact between the two in the chariot while returning to the Hemkuta is the basis of the *purva raga*, which is of a माञ्जिष्ठ or of bright, unflinching type. Then subsequent exchange of glances, coaxing speech and expression of smiles and bashfulness are the ensuant feelings. The lonely situation, cool and fragrant breeze and the pluvial charms are the excitants which awaken the erotic emotions. Eagerness, mental reverie, pensive mood and uneasiness of heart are occasional feelings that remain auxiliary to the emotion of love.

The subsidiary sentiment in this play is a rare comic and a predominating *Vipralambha*. The *Vipralambha* here is due to मान of the heroine who contracted jealousy at the sight of the hero's appreciative glances towards Udayavati.

## "The Structure of a Drama"

Every dramatic composition of Sanscrit opens with a prologue or प्रस्तावना commencing with an Invocation which is technically known as नान्दी । Nandi invokes some deity and contains either benedictions or solicitations for favour. In one way or the other, it suggests the general theme of the plot whether in part or the whole. The *Sutradhara* or the Stage-manager, having finished with Nandi, continues to allude to the birth, race and time of the poet and his literary accomplishments and the occassion which has led him to undertake the enactment of the play. Thus ends the whole prelude containing sweet songs or the description of a season which excites the sentiment and the drama then begins, the introduction of which is generally made by the सूत्रधार either by the suggestion of the बीज or an introduction of a character. The प्रस्तावना is of five kinds: उद्घातक, कथोद्घात, प्रयोगातिशया, प्रवर्त्तक and अवलगित.

The play under investigation opens with the usual नान्दी or invocation of the god Shiva for benedictions, which is suggestive of the main incidents of the story. The prologue of the play is of प्रयोगातिशया type, where the entrance of the actors is exhibited through the first *prayoga*, viz. the introduction of the occasion of the enactment of the play by the chief actor.

The whole subject matter which is represented further on, is well classified and arranged into acts. A drama may consist of any number of acts between five and ten. The principal sentiment should be either शृङ्गार or वीर or even करुण and others may be subordinate to support the principal one.

Besides these, there are certain conventions which are strictly followed: For example, nothing should creep in the play which denounces the character of the hero or is not harmonious with the prevailing sentiment. An act should neither be lengthy nor be wearisome. विष्कम्भ, and other interludes should be introduced wherever they are expedient and an act should end with the exit of all the characters. Any event like journeys, and wars should not be staged and the expiry of the hero should never be displayed. The conduct of the classical drama should be exemplary and dignified. There is a complete absence of tragedy or a calamitious conclusion. The unity of pleasure

and interest should be carefully attended to. In Sanskrit dramas, the unity of action is generally observed and not neccessarily those of time and place. In accordance with the saying "मङ्गलादीनि मङ्गलान्तानि", the play, as it opens with a prayer or blessings, should also end with a भरतवाक्य expressing the wishes of some magnanimous personality for universal prosperity and happiness. There is one more convention, though last but not the least: i. e. the hero and the higher characters speak in Sanskrit, while female and other lower characters use a language of different प्राकृत dialects, save those who are educated.

The Trotaka kind of Rupaka, as the play in hand is, may, in accordance with the definition given in the Introduction in Sanskrit, consist of 5, 7, 8 or 9 acts. The characters therein, should be celestial as well as human. Vidushaka must play a prominent part and be present almost in every act. It has no विष्कम्भक but the gap is bridged only by प्रवेशक. In other respects it does not differ from a नाटक ।

## The Poet:

## "His life, works and poetry"

Like the life of Shakespeare, the life of our poet, the brightest jewel of the mine of the Indian poets, remains unrevealed and blank. In his works, he has kept a dismal silence about himself. Unlike later Sanskrit poets who are often confident and self-puffers, Kalidasa expresses modestly and speaks little of himself. "The personal history" says a learned critic, "is thus involved in an impenetrable mist of obscurity." And this has made an ample room for a diversity of inferences which are open to a great controversy. The late Dr. Bhau Daji remarks that he was a Sarasvat Gauda Brahmin. It is further said that he and Matṛigupta, the king of Kashmir were identical. Some say that he was patronised by Pravarsena, the king of Kashmir. But a time-honoured tradition associates his name with the king Vikramaditya of Ujjain, the founder of Samvat Era. It is reported that Kalidas constituted one of the nine jewels of his Court, Thus runs a saying, that he was appointed the Governor of Kashmir by Vikramaditya. His description of Ujjaini and its surroundings, the Mahakala and the Kshipra firmly leads to the conclusion that he must have been the native of that part. If the king Vikramaditya be not taken as the poet's patron, various references to the name of the king in highly panegyric terms should be set aside without any plausible explanation.

He seems, however, to have pleased both the Jains and Vaishnavas by favouring their tenets in his works. It is evident, that he was a staunch devotee of Shiva and Parvati, though by no means a sectarian. He appears to have been an admirer of field sports and outings, and describes their beneficial effects with a spirit of a true sportsman. He was a great observer and delineator of Nature. His exact description of the Himalayas, Alaka and other places proves the above statement and clearly shows that he had travelled far and wide. He is the only poet, who describes a living saffron flower which grows nowhere but in Kashmir. Kalidas in his writings shows a thorough acquaintance with the court life. These circumstances coupled with the fact that there is no allussion in his works to the Goddess of Wealth having ever frowned upon him, have led some critics to remark that he was in affluent circumstances and had not the misfortune ever to taste the bitter fruits of poverty. But from the devout prayer, at the end of Vikramorvashiyam for the union of the goddesses of wealth and learning it is sufficiently evident that he must have been subjected to the pangs of poverty and neglect. Though he was pleasure-seeking yet he cannot be said to be voluptuous. The critical study of his works, however, clearly tells us that he was very well acquainted with the Vedas, Upanishads, the Puranas, and several systems of Indian philosophy, geography astronomy and other fine arts.

As "he was the least of an egoist that it was possible to be", it has become doubtful expressly to ascertain of which compositions he had been the author. But the following are the works which are generally attributed to him: ऋतुसंहार, कुमारसंभव, रघुवंश, मेघदूत, शाकुन्तल, विक्रमोर्वशीय, मालविकाग्निमित्र, श्रुतबोध, श्रृङ्गारतिलक, श्रृङ्गाररसाष्टक, सेतुकाव्य कर्पूरमञ्जरी, पुष्पबाणविलास, श्यामलादण्डक, प्रश्नोत्तरमाला and ज्योतिर्विदाभरण। It is, however, a disputed question, which of these are really his and which are of the subsequent poets namesake to him. At any rate we do not hesitate in accepting the first nine and the thirteenth to be his. Although, the perceptible difference between रघुवंश and other kavyas in respect of their style and the poetical merits supplies a sufficient ground for doubt, still it can be removed, if a sufficient margin is allowed for the age of the poet and the corresponding development of his genius.

The style of Kalidas is pure and chaste. "It has not

P. 222 Act IV). The next is the beautiful description of the mother Ganges, the King's capital and the landscape about it. The dignified demeanour of Urvashi even in self approach to the lover is very striking. Then this is the only drama which contains the *Unmādānk* in the Sanskrit literature, which so beautifully puts the king to ask of every animate or inanimate object in regard to the whereabouts of his beloved. It strikingly reminds of the poet and his hero of the Cloud Messenger with a step ahead in the sense that this demeanour of the hero in this drama is attended with the spell of music and dance and impressive delusions. This art of the poet throws the reader in entire sympathy with the hero and is a device which makes the readers in unison with the hero, an element necessary to the perfect relish of the *rasa* (Vide "विगलितवेद्यान्तरो रसास्वादः" etc), which is painfully absent in Shākuntal. Though the fourth act of this drama if admitted to be free from interpolation is at a couple of places incongruous as pointed out in the commentary, it only goes to establish that the poet did not feel interested in this play in observing closely the unities of time and place (Cf. "पूर्वदिक्पवनाहतकल्लोलोद्धतबाहुः p. 202......अन्यथा कथं पुरूरवसमपहाय समुद्राभिसारिणी भवेत् p. 208 Act IV.) Even this incongruity has a charm in the case of a bewildered hero and every independent critic will feel the charms of this Act in no way less than that of the corresponding act of the poet's other dramas. The poet displays in this drama also the same concinnity of style, and his close acquaintance with the human feelings, his delineation of characters and picturesque description of natural phenomena appear as appreciable and bewitching as in the case of Shākuntal.

This is, however, a succinct survey into the merits of the play and it is felt that on the lines indicated above the reader will take pains to study this drama of Kalidas and will feel its worth in its own way.

---

॥ श्रीः ॥

# क्रमप्रविष्टाभिनवपात्राणि ॥

## पुरुषाः ।

| | | |
|---|---|---|
| प्रथमाङ्के:— | सूत्रधारः | प्रधाननटः । |
| | पारिपार्श्वकः | नटः । |
| ( विक्रमापरनामा ) | राजा पुरूरवाः | प्रतिष्ठानस्य राजा । ( नायकः ) |
| | सूतः | अस्य सारथिः । |
| | चित्ररथः | गन्धर्वराजः । |
| द्वितीयाङ्के:— | माणवकः | राज्ञो नर्मसचिवः । |
| तृतीयाङ्के:— | पेलवः, गालवः | भरतशिष्यौ । |
| | लातव्यः | कञ्चुकी । |
| | परिजनः | भृत्यः । |
| पञ्चमाङ्के:— | वेधकः | किरातः । |
| | कुमार आयुः | उर्वशीगर्भजातो युवराजः । |
| | नारदः | महर्षिः । |
| | वैतालिकौ | समयसूचकौ । |

## स्त्रियः ।

| | | |
|---|---|---|
| प्रथमाङ्के:— | अप्सरसः | देवाङ्गनाः । |
| | रम्भा, सहजन्या, मेनका | अप्सरसः । |
| | चित्रलेखा | उर्वश्याः प्रियसखी देवाङ्गना। |
| | उर्वशी | देवाङ्गना । ( नायिका ) |
| द्वितीयाङ्के:— | चेटी | दासी । |
| | औशीनरी | काशिराजदुहिता राज्ञो महिषी। |
| | निपुणिका | तस्याः दासी । |
| पञ्चमाङ्के:— | यवनी | राज्ञश्चेटी । |
| | सत्यवती | तापसी । ( कुमारस्य धात्री ) |

रङ्गभूम्यामप्रविष्टाणि पात्राणि { इन्द्रः—देवराजः । केशी—राक्षसः । } { भरतः—महर्षिर्नाट्याचार्यः । देवदूतः । }

उदयवती—विद्याधरकन्यका ।

---

॥ श्रीः ॥

# विक्रमोर्वशीयम् ।

## ॥ प्रथमोऽङ्कः ॥

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स: स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायाऽस्तु वः ॥ १ ॥

---

॥ श्रीः ॥

### कल्पलता टीका

रम्यां कान्तिं समीक्ष्य प्रभुरपि मनसो योगिनां चक्रवर्ती
भ्रान्तः सन् यां स ईशो व्यपहृतनिजधीः क्लान्त एवान्वधावत् ।
तस्या एवोज्ज्वलाया रसमयवपुषो विश्वसंमोहकर्त्र्याः
मोहिन्याः कापि शक्तिः परिलसतु मम स्वान्तपद्मे सदैव ॥ १ ॥

अमन्दानन्दसंदोहं गोविन्दं गोपनन्दनम् ।
वन्दे राकेन्दुवदनं सुन्दरं सुन्दनाशिनम् ॥ २ ॥

अथ भगवच्चरणनीरजकृपाकटाक्षप्रसृतदिगन्तकीर्तिर्विद्वद्वृन्दवन्दितपदद्वन्द्वारविन्दः समस्तशास्त्रकाननसंचारपञ्चाननः कविकुलमुकुटमणिस्तत्रभवान् महाकविः कालिदासः स्वकीयोज्ज्वलज्ञानपावकपावनीकृतचारुचामीकरप्रतिभनवत्रोटकनिर्माणजातकौतूहलः नवीननवरसधाराभिः भुवि समानयन् सुन्दरीमपरां सुरसरितं स्वाभिलषितदेवताप्रसादनमुखीं निखिलप्रत्यूहसमूहव्यपोहनपूर्वकं प्रारिप्सितस्य ग्रन्थस्य परिसमाप्तिमूलां स्वीयमाधुरीपरिहसितात्यन्तपाकद्रवीभूतमृद्वीकामधुरतां समस्तजनसंघमङ्गलवाक्सन्दानितां नान्दीमवतारयति—

**वेदान्तेष्विति**—सः स्थाणुः शिवो वो युष्माकं सामाजिकानां निःश्रेयसाय मोक्षाय कल्याणाय चास्तु । प्रेक्षकाणां मङ्गलं कुर्यादित्यर्थः । यं शिवम् भगवत्स्वरूपविवेचनपरकवेदान्तशास्त्रेषु एकपुरुषं अनन्यगुणगणैकभाजनं रोदसी द्यावापृथिव्यौ भूमिगगने वा व्याप्य परिवृत्य विद्यमानमाहुर्वर्णितवन्तो मीमांसकाः । यं शिवं अद्वितीयं सर्वव्यापिनं उक्तवन्तो वेदान्तिन इत्यर्थः । चराचरपालके यस्मिन् शिवे ईश्वर इति शब्दः शिवातिरिक्तार्थप्रतिपादको न भवति । अन्यो विषयः प्रतिपाद्यः यस्य सः अन्यविषयः, न अन्यविषयः अनन्यविषयः ईश्वरेति शब्दः तस्य महेश्वरस्य सर्वशक्तिमत्वात् अर्थमनतिक्रम्य विद्यन्ते अक्षराणि यस्मिन्सः

यथार्थाक्षरः सत्यमेव वर्तते । स सत्यमेव सर्वेषां रक्षकः त्रिभुवनं स्वेच्छानुसारं चालयितुं प्रभवन्नीश्वरो विद्यत इत्यर्थः । यश्च नियमिताः रुद्धाः प्राणादिवायवः यैस्तैर्नियमितप्राणादिभिर्मुमुक्षुभिः संसारादसारान्मोक्षाकांक्षिभिः योगिभिः अन्तःकरणे एकाग्रेण मनसा मृग्यते अन्विष्यते । यं योगिनः प्राणादीन् आयम्य स्थिरेण चेतसा ध्यायन्तः अन्तर्हृदयगुहायामन्वेषयन्तीत्यर्थः । यश्च महादेवः स्थिरा अव्यभिचारिणी भक्तिः स्थिरः निश्चलो योगश्चित्तैकाग्र्यं ताभ्यामेव सुखपूर्वकं लब्धुं शक्यो वर्तते । यः शिवः चित्तं सम्यक्तया निरुद्धय ध्यानावस्थितेनैव मनसा केवलमहर्निशं श्रद्धया स्मरणेनैव यतिभिः सौकर्येण लभ्यो विद्यत इत्यर्थः । एतादृशः परेशः स शिवः वः शं करोतु इति सूत्रधारनटीनटादिविविधपात्राणां सामाजिकानां च मङ्गलमनुसंदधती नान्दी समाप्तिं प्राप्ता ।

**सरलार्थः**—यं महेश्वरं वेदान्तिनः शास्त्रेषु भूमिगगने आवृत्य विद्यमानं सर्वव्यापिनमद्वितीयं प्राहुः । अस्य जगतः उत्पत्तिस्थेमभङ्गैककारणे यस्मिन् महादेवे शिवातिरिक्तदेवतासु अप्रयोज्यः ईश्वरेति शब्दः यथार्थ एव विद्यते, स एव सत्यं स्वीयैर्गुणैरीश्वरपदयोग्यो वर्तते इति भावः । यश्च शङ्करः अन्तर्मनसि अन्यविषयव्यावृत्तेन चेतसा प्राणादीन्निरुद्धय यतिभिरन्विष्यते स योगिनामप्यगम्यः इति तात्पर्यम् । नितान्तमव्यभिचारिण्या भक्त्या योगेन च मुनिभिर्यथाकथमपि प्राप्यः स शिवः जनानां भद्रं विदधातु—इति सरलार्थः ॥ वेदान्तो हि नामोपनिषत्पर्यायभूतं जीवेश्वरजगत्स्वरूपविवेचनात्मकं शास्त्रम् । जगतोऽस्य कः कर्ता, किंस्वरूपकः, तस्य च जीवस्य कः सम्बन्धः, कथं स लभ्यः, कस्तस्योत्पादयितेति विविधाः प्रश्नाः यस्मिन् शास्त्रे मीमांस्यन्ते तच्छास्त्रं वेदान्तशास्त्रमित्यभिधीयते । उपनिषदामनेकत्वेन वेदान्तेषु इति बहुवचनम् । **एकपुरुष इति**—स शिवः एक एवास्ति । एकस्तावत्स्वसजातीयविजातीयस्वगतभेदशून्यः इत्यर्थः । भेदः स्वसजातीयस्तावत्तस्माद् घटाद् घटोऽयं भिन्नः इति; विजातीयभेदस्तावद् घटात् पटो भिन्न इति; स्वगतस्तावद्भेदः पूर्वम् योऽहं बालः आसम् स एव युवा साम्प्रतम् इति त्रिविधभेदशून्यः एकः अद्वितीयश्चोच्यते—इति रामानुजाचार्याणां वेदान्ततत्त्वसारे । यदुक्तं शास्त्रेषु "एक एव रुद्रः स द्वितीयाय न तस्थे" (तैत्तिरीये); "स एको य एकः स रुद्रो यो रुद्रः स ईशानो य ईशानः स भगवान् महेश्वरः" इत्यथर्वशिरउपनिषदि । पुरुषत्वं च तस्य—"पुरुषो वै सन्महो नमः"; यथा वा कौर्मे, "पश्यन्ति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराणम्"; तथा च शङ्करगीतायां "पुरुषो नाम सम्पूर्णः शिवः सत्यादिलक्षणः" इत्यादौ शिवस्य भक्तानां सकलकामनापूरणसामर्थ्येनैकपुरुषत्वमसाधारण्यं च सूचितम् । रोदसी तु सान्तस्य रोदःशब्दस्य द्विवचनम्—"भूद्यावौ रोदस्यौ रोदसी च ते" इत्यमरः । महेश्वरस्य सर्वव्यापित्वमपि प्रसिद्धम्—यथाथर्वशिरउपनिषदि, "स ओङ्कारो य ओङ्कारः स प्रणवो यः प्रणवः, स सर्वव्यापी यः सर्वव्यापी;" "व्यापको हि भगवान् रुद्रः" । श्वेताश्वतरे च "सर्वाननशिरोग्रीवः

सर्वभूतगुहाशयः । सर्वव्यापी स भगवान् तस्मात्सर्वगतः शिवः" इत्यादि श्रुतिवाक्यैः प्रमाणितं महेश्वरस्य सर्वगतत्वम् । ईश्वरत्वं नाम यथाह भगवान् पतञ्जलिः "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः, तत्र निरतिशयं सर्वज्ञबीजम् स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात् ।" अनेनेश्वरपदेन शिवस्य सत्ता कर्मविपाकादिनिरपेक्षा वर्तत इति सूचितम् । ईश्वरस्तु "ईष्टे इतीश्वरः" "स्थेशभास" (३।२।१७५) इति सूत्रेण वरच्प्रत्ययः । अथवा अश्नुते इतीश्वरः, अश्नोतेः औणादिको वरट्, उपधाया ईत्वं च, अश्नुते सर्वत्र व्यापकतया तिष्ठतीति ईश्वरः । अन्तरिति यथा दहरोपासनायाम्—"अथ यदिदं अस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तर आकाशः तस्मिन्यदन्तम् तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इत्थमुपनिषत्सु ईश्वरस्य अन्तःस्थत्वं प्रसिद्धम् । मोक्षमिच्छा मुमुक्षा । "अविद्यानिवृत्तिरेव मोक्षः" इति श्रीमच्छङ्कराचार्यभगवत्पादाः, स चात्यन्तिकदुःखनिवृत्तिसहकृतपरमानन्दप्राप्तिरूपः । अस्माकं ज्ञानावरणकर्त्री इयमविद्या नश्यतादिति उत्कटाकाङ्क्षिणो जनाः उच्चकोटिस्थाः मुमुक्षवस्तैरीश्वरो ध्यायत इत्यर्थः । प्राणोऽपानः समानश्चोदानव्यानाविति पञ्च शरीरान्तःसञ्चारिणो वायवः । तान् निरुद्ध्य यतयो ध्यायन्ते इति । स्थाणुरिति "व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः" इत्यमरः । स्थाणुपदस्य शिवे प्रवृत्तिनिमित्तत्वं यथा पुराणेषु "स्थाणुवन्निश्चलो यस्मात् स्थितः स्थाणुरतः स्मृतः" । "सर्ववैकारिकलये स्थाणुस्तिष्ठति येन सः" इति निरुक्ताच्च । स्थिरभक्तियोगेनेति स्थिरा अव्यभिचारिणी विषयादिभिरनुच्छेद्या । भक्तिर्नाम यथाहुः भगवन्तो रामानुजाचार्यचरणाः "तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा भक्तिः"; अथवा "आराध्यत्वेन ज्ञानं भक्तिः" इति उदयनाचार्याः, "सा त्वस्मिन् परमप्रेमरूपाऽमृतस्वरूपा चेति" देवर्षिर्नारदः । "योगश्चित्तवृत्तिनिरोधः" इति भगवान् पतञ्जलिः । शिवस्य भक्तियोगलभ्यत्वं श्वेताश्वतरे "भावग्राह्यमनीडाख्यं भावाभावकरं शिवम्" इति । निःश्रेयसायेति, "मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृत"मित्यमरः । अत्र "तुमर्थाच्चेति" (२।३।१५) चतुर्थी—मोक्षं ददातु इत्यर्थः । अत्र चतुर्थ्या निमित्तत्वमर्थः मोक्षनिमित्तं भवतु इत्यर्थः ॥ इति विवेचनम् ।

कविकुलतिलकेन तत्रभवता कालिदासेनानेन मङ्गलगानेन चिकीर्षितस्य काव्यस्य वस्तु अपि व्यक्तीकृतम् । प्रथमचरणे भगवतः वेदान्तेषु एकपुरुषत्वप्रतिपादनेन अस्य त्रोटकस्य नायकोऽपि इतिहासादिषु पुरुषेषु एक एव असाधारणोऽस्तीति गम्यते । तथा च यथा भगवतः सर्वव्यापित्वमुक्तं तथैव तस्य पुरूरवसः दयादाक्षिण्यादिगुणवत्त्वेन अलौकिकेन च पराक्रमेण धवलितदिगन्तकीर्त्या च सर्वव्यापकत्वं प्रदर्शितम् । भगवतः ऐश्वर्यप्रदर्शनेन नायकस्यापि विलक्षणैश्वर्यशालित्वेन राजपदभाजनत्वं यथार्थमेवेति सूचितम् । यथा शिवः संसारान्मुमुक्षुभिः मृग्यते तथैव विक्रमः सुरारीणामाक्रमणान्मुमुक्षुभिरप्सरसां वृन्दैः प्राणादिवायुसंचारस्याप्यपेक्षामकुर्वद्भिर्बहिरन्वेषितः, तथाच नायिकयान्त-

( नान्द्यन्ते । )

**सूत्रधारः**—अलमतिविस्तरेण ।

---

श्चेतसि वारंवारमन्वेषित इति व्यज्यते । स्थाणुपदप्रदानेन नायिकायाः विरहे नायकस्य नितान्तं स्थाणुसदृशी निश्चला परिस्थितिर्बभूवेति ध्वन्यते । स्थिरया भक्त्या राजनि उर्वश्याः प्रेम्णा, योगेन च सङ्गमनीयाख्यमणिसंबन्धेन सुलभः प्राप्यः इति प्रकटीक्रियते । एतेन राज्ञः उर्वशीकामुकत्वं, तस्याश्चापि कामिनीत्वं, उभयोः प्रीतिः इत्यादि वस्तु व्यज्यते । तथा च एवं विशेषणगणविशिष्टः स प्रथितप्रभवः सामाजिकानां योगक्षेमात्मकं कल्याणपूर्वकरक्षणं कुर्यादिति सर्वमसूचि कविना नान्दीमुखेनेति ईश्वरविषयिणी कविगतरतिरनेन रत्याख्यो भावो ध्वन्यते । तथा च निबद्धोऽयं श्लोकः शार्दूलविक्रीडितेन छन्दसा—यदुक्तं वृत्तरत्नाकरे, "सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्" यस्याः पादे मकारसकारौ जकारसकारौ तकारौ गकारश्च भवन्ति तद्वृत्तं शार्दूलविक्रीडितम् नाम । अत्र च द्वादशभिः सप्तभिश्च यतिः ॥ १ ॥

**नान्द्यन्त इति**—विघ्नोपशान्तये आदौ क्रियमाणा आशीर्वचनसंयुक्ता देवद्विजनृपादीनां स्तुतिर्नान्दी । तथा च नन्दयति आनन्दयति स्तवेन देवादीन् आशिषा वा सभ्यान् इति इदन्तनन्दधातोः "पचाद्यच्" (३।१।११४) तेन नन्द इति रूपम्, ततः प्रज्ञादित्वात् अण्प्रत्ययः स्वार्थे; तेन नन्द एव नान्दः पश्चात्स्त्रियां ङीप् तेन नान्दी—तथाह भरतः "यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्तव्या नान्दी विघ्नप्रशान्तये" । नान्दीलक्षणं च "देवद्विजनृपादीनामाशीर्वचनपूर्विका । नान्दी कार्या बुधैर्यत्नान्नमस्कारेण संयुता । सूत्रधारः पठेदेनां मध्यमं स्वरमाश्रितः । नान्दीं पदैर्द्वादशभिरष्टाभिर्वा पदैर्युताम् । पदैरथ समैः•••" इति । पदगणननियमोऽपि तत्रैव प्रोक्तः "श्लोकपादपदं केचित् सुप्तिङन्तमथापरे । परेऽवान्तरवाक्यं च पदमाहुर्विशारदाः"—इति ॥ नान्दी हि मङ्गलगानं नाटकादौ प्रयोज्यम् । अत्र समासोक्त्या अभिधेयस्य वस्तुनः प्रकाशनान्नान्दीयं पत्रावली नामधेया, यदुक्तं नाट्यदर्पणकारिणा "यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः । श्लेषेण समासोक्त्या वा नाम्ना पत्रावली तु सा ॥" इयं च समपदा नान्दी । नान्दीपाठानन्तरं सूत्रधारः प्रविशति ।

**सूत्रधार इति**—सूत्रं नाटकीयमुख्यकथासूत्रं धारयति प्रकाशयति इति सूत्रधारः नाटकीयकथासूचको नटप्रधानः पुमान् । सूत्रधारलक्षणं यथा सङ्गीतसर्वस्वे "वर्णनीयतया सूत्रं प्रथमं येन सूच्यते । रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ।" धृधातोः "कर्मण्यण्" ( ३।२।१ ) इत्यण्प्रत्ययः । सूत्रधारो नाटकव्यवस्थापकः प्रधाननट इत्यर्थः ॥

**अलमिति**—अतिविस्तरेण सुबहुलेन नान्दीप्रयोगेण अलं पर्याप्तमिति । एतेनैव मङ्गलकार्यनिर्वहणात् । "अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इत्यमरः ।

( नेपथ्याभिमुखमवलोक्य, )

मारिष ! इतस्तावत् ।

**पारिपार्श्वकः**—भाव ! अयमस्मि ।

**सूत्रधारः**—मारिष ! परिषदेषा पूर्वेषां कवीनां दृष्टरसप्रबन्धा अहमस्यां कालिदासग्रथितवस्तुना नवेन त्रोटकेन उपस्थास्ये । तदुच्यतां पात्रवर्गः स्वेषु स्वेषु पाठेषु अवहितं भवितव्यमिति ॥

---

अतिविस्तरेणेति वारणार्थे तृतीया । विस्तरेणेति "प्रथने वावशब्दे ( ३।३।३३ पाणिनीये ) इति शब्दप्रथने घञ्निषेधस्तदभावे च अप्प्रत्ययः, तेन विस्तरः, अन्यत्र विस्तारः ।

**नेपथ्येति**—नेपथ्यं नाम रङ्गस्थलस्य पश्चात् यवनिकान्तरितो वर्णग्रहणादियोग्यकुशीलवकुटुम्बावस्थानदेशः । "कुशीलवकुटुम्बस्य स्थली नेपथ्य इष्यते" इति वचनात्त्रिपुरारेः । "नेपथ्यं स्याद्यवनिका रङ्गभूमिः प्रसाधनम्" इत्यजयः । नेपथ्याभिमुखं यवनिकासंमुखमवलोक्य दृष्ट्वा सूत्रधारो वदति । नेपथ्याभिमुखमवलोक्येति कविवाक्यम् ।

**मारिषेति**—मा रेषति न हिनस्ति दुष्टाभिनयादिना सामाजिकानां शान्तिं मनोविनोदं चेति मारिषः । पारिपार्श्वको नटविशेषः । माशब्दोपपदात् रिष हिंसायाम् ( भ्वा. प. से. ) इति रिष्धातोः नाम्युपधत्वात् "इगुपध" ( ३।१।१३५ ) इति कः प्रत्ययः । नटः सूत्रधारेण मारिष इति वाच्यः "सूत्री नटेन भावेति तेनासौ मारिषेति च—" इति वचनात् । अथवा मर्षणात् सहनात् मारिषः "पृषोदरादिः" ( ६।३।१०९ ) "मारिषः शाकभिदि आर्ये, नाट्योक्त्या पुंसि योषिति" इति दक्षाम्बायाम् । इत अस्मिन् स्थाने इति सप्तम्यां सार्वविभक्तिकस्तसिल् । तावत्तु वाक्यालंकारे । आगम्यतामिति शेषः ॥ प्रविश्य रङ्गभूमिमेत्येति ।

**पारिपार्श्वकः**—परि पार्श्वे यथा भवति तथैव वर्तते इति पारिपार्श्वकः सूत्रधारादीषन्न्यूनको नटः । "सूत्रधारस्य पार्श्वे यः प्रवदन् कुरुतेऽर्थनाम् । काव्यार्थसूचनालापं स भवेत् पारिपार्श्वकः ।" भाव इति सूत्रधारस्य बहुमानकमिदं संबोधनम् । सूत्रधारं वदेद् भावः इति वै पारिपार्श्वकः । अयमस्मीति अयमहं भवदाज्ञां अनुपालयितुमुपस्थितोऽस्मीति भावः ।

**सूत्रधारः**—मारिषेति-एषा परिषद् विदुषां सभा पूर्वेषां प्राचीनानां कवीनां दृष्टा अवलोकिता रसमयाः प्रबन्धाः काव्यानि यया सा एतादृशी वर्तते । अनया सभया प्राक्तनानाम् कवीनां रसपरिपूर्तानि काव्यान्यवलोकितानीत्यर्थः । रसप्रबन्धः इत्यत्र रसमयाः प्रबन्धाः इति मध्यमपदलोपी समासः । अहमिदानीमस्यां परिषदि कालिदासेन कविना ग्रथितं निबद्धं वस्तु इतिवृत्तं यस्मिन् तेन

**पारिपार्श्वकः**—यथाज्ञापयति भावः । (इति निष्क्रान्तः।)

**सूत्रधारः**—(प्रणिपत्य,) यावदिदानीमार्यविदग्धमिश्रान् विज्ञापयामि ।

प्रणयिषु वा दाक्षिण्यादथवा सद्वस्तुपुरुषबहुमानात् ।
शृणुत जना अवधानात् क्रियामिमां कालिदासस्य ॥ २ ॥

---

कालिदासग्रथितवस्तुना कालिदासरचितेन नवेनादृष्टपूर्वेण त्रोटकेन त्रोटकाख्यकाव्येनोपस्थास्ये सज्जीभूय उपस्थितो भविष्यामीति सारम् । त्रोटकम् नाम "सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् । त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम् ।" इति दर्पणोक्तेः ।

**तदिति**—तदनेन कारणेनोच्यतामाज्ञाप्यतां पात्रवर्गः नटीनटादिनर्तकसमूहः स्वेषु स्वेषु पाठेषु वेषरचनानुसारमुक्तिप्रत्युक्तिप्रभृतिव्यवहारेषु अवहितैः सावधानैः भवितव्यम् । पात्रैस्तदर्थं सर्वथा सज्जीभवितव्यमिति तात्पर्यम् ॥

**पारिपार्श्वकः**—यथाज्ञापयति भावः । भावस्य वचनमेव प्रमाणम् । यथा भावेनोच्यते तथैव करोमीत्यर्थः । इत्युक्त्वा निष्क्रान्तो रङ्गभूमितः अपक्रान्तो गत इत्यर्थः ।

**प्रणिपत्य**—आदरार्थमभिवादनं विधायेत्यर्थः ।

**यावदिति**—यावता कालेन पात्रवर्गः सज्जीभवति तावता समयेनेदानीमधुना आर्याः सज्जनाः विदग्धाः सकलकलाकुशलाः तन्मिश्रान् युक्तान् सभ्यान् अथवा आर्याश्च ते विदग्धाश्च आर्यविदग्धाः तेषु मिश्रान् पण्डितान् श्रेष्ठान् विज्ञापयामि निवेदयामि । "आराद् याता इत्यार्याः" "आराद्दूरसमीपयोः" अनेन आरादसभ्यतादुराचारादिदोषेभ्यो दूरंगताश्च शिक्षासभ्यताविद्यादिभिः देवतास्पदत्वं प्राप्ता इत्यार्याः । पृषोदरादित्वात् साधुत्वम् । ते च वेदान्तर्गतविधिनिषेधाधीनाचारवन्तो भवन्ति । अथवा अर्तुं योग्यः आर्यः "ऋ गतौ" (भ्वा. प. अ.) "ऋहलोर्ण्यत्" (३।१।१२४) "कर्तव्यमाचरन् काममकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स तु आर्य इति स्मृतः" इति वसिष्ठः ।

"आर्यौ सज्जनसौविदौ" इत्यनेकार्थकैरवाकारकौमुदी । "कलाप्रवीणो विदग्धः स्यात्" मिश्रपदं पूज्ये श्रेष्ठे च नित्यबहुवचनम् यथा "मरीचिमिश्रैर्दक्षेणेति" विष्णुपुराणे प्रयोगात् ।

**प्रणयिष्विति**—प्रणयः प्रीतिर्येषामस्तीति प्रणयिनः तेषु प्रीतिपात्रेषु दाक्षिण्याद् आनुकूल्यात्, अथवा सत् सुन्दरं यद्वस्तु वर्णनीयेतिवृत्तं, सत् कुलीनः पुरुषः नायकः तयोः वस्तुपुरुषयोः बहुमानात् आदरातिशयात् कालिदासस्य कवेरिमामभिनीयमानां क्रियमाणां वा क्रियां त्रोटकाख्यां कृतिं अवधानात् स्थिरेण चेतसा जनाः सामाजिकाः शृणुत कर्णपथमानीय मनोविनोदं कुरुत ।

( नेपथ्ये )

अज्जा, परित्ताअध परित्ताअध । जो सुरपक्खवादी, जस्स वा अम्बरअले गईअत्थि । [ आर्याः परित्रायध्वम् परित्रायध्वम् । यः सुरपक्षपाती यस्य वाऽम्बरतले गतिरस्ति ].

---

प्रीतिपात्राणि यानि नाटकीयपात्राणि तेषामिच्छानुसारं वर्तनेन, अथवा प्रतिपाद्ये वस्तुनि च नायकस्येतिवृत्ते चोत्कण्ठया सन्मानेन वा यूयं सर्वे सामाजिकाः सावधानतया कालिदासकृतां पुरोऽभिनीयमानां कृतिं प्रेक्षध्वमिति तात्पर्यम् । इत्यहं सादरं निवेदयामि ।

**प्रणयः**—णीञ् धातोः "एरच्" ( ३।३।५६ ) तेन प्रणयः प्रणय अस्यास्तीति प्रणयिन्—इनिः । "प्रणयः प्रसरे प्रेम्णि" इति मेदिनी । "अयं मम अहमस्येत्याकारकः पक्षपातविशेषः प्रेम, तथा च तदेव प्रेमावलोकनादिना प्रकर्षं नीतं अपराधसहस्रेणापि अविचालितं प्रणयः" इति काव्यप्रकाशटीकाकृतः । दाक्षिण्यं हि नाम परच्छन्दानुवर्तित्वम्–परस्येच्छानुसरणमेव दाक्षिण्यम् । सावधाना भवन्तु भवन्त इति प्रार्थयते सूत्रधारः सामाजिकान् । इयं चार्या जातिः । तल्लक्षणं यथा श्रुतबोधे—"यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या" ॥ २ ॥

**नेपथ्य इति**—वक्ष्यमाणेयमुक्तिर्यवनिकान्तरितात् वेषग्रहणस्थलादुच्यते ।

आर्याः सज्जनाः ! परित्रायध्वम् परित्रायध्वम् रक्षत रक्षत ।

ये केचन सुरपक्षपातिनः देवताभिवाञ्छितं सम्पादयितुं कामयमानास्ते रक्षां कुर्वन्तु । येषां च अम्बरतले आकाशमार्गे गतिरस्ति । अस्माकमुपरि आक्रमणं आकाशे क्रियते वयं च सुरेन्द्रानुचराः, अतः ये केचन जनाः देवेन्द्रमुपकर्तुं अभिवाञ्छन्ति ये च गगनेऽपि अप्रतिहतगतयः सन्ति ते अस्माकं साहाय्यं कुर्वन्तु इत्यर्थः ।

क्वचिद् क्वचिद् गाथासु लिङ्गवचनविपर्यासः क्षम्यः । यथेह "यः सुरपक्षपाती"ति विशेषणम् सम्बोध्यमानानां आर्याणां वर्तते, अतः विशेष्यानुसारं विशेषणस्यापि बहुवचनत्वं प्रशस्यम् किन्तु इह प्राकृते क्वचन लिङ्गवचनविलोमता क्षम्यते "प्राकृते लिङ्गवचनमतन्त्रं पूर्वनिपातनियमश्चेति"वचनात् ।

अवधेयमिदमत्र यदभिधेयं वस्तु व्यक्तीक्रियते । यतः "अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् । विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः" इति वचनानुकूलं प्रकृते नेपथ्ये यद्यदस्ति प्रोक्तं, तत्तत्सर्वं चूलिका "अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचनम्' इति लक्षणात् । यतः नेपथ्य इत्यारभ्य–'अम्बरअले गईअत्थि' पर्यन्तं सर्वं महादेवस्य वरिवस्यां विधाय प्रत्यागच्छन्त्याः चित्रलेखाद्वितीयायाः उर्वश्याः दानवापहरणं सूचयति ।

**सूत्रधारः**—( कर्णं दत्त्वा। ) अये ! किं नु खलु मद्विज्ञापनान्तरमार्तानां कुररीणामिवाकाशे शब्दः । मार्या

मत्तानां कुसुमरसेन षट्पदानां
शब्दोऽयं परभृतनाद एष धीरः ।
आकाशे सुरगणसेविते समन्तात्
किं नार्यः कलमधुराक्षरं प्रगीताः ॥ ३ ॥

---

**सूत्रधारः**—कर्णं दत्त्वा–सावहितं निशम्येत्यर्थः । अयेति सम्बोधनमाश्चर्यसूचकम् । मद्विज्ञापनानन्तरं सभ्येभ्यः मदीयप्रार्थनान्तरमेव आर्तानां पीडितानां कुररीणां अबलानां पतत्रिणां स्वर इव यस्य कस्यापि पीडितस्य आर्तनादः आकाशे श्रूयते–इति विस्मयः । कुररी तु उत्क्रोशापरनामा पक्षिविशेषः "उत्क्रोशकुररौ समौ" इत्यमरः । कुररीणामिवेति–उपमालंकारः । यदुक्तं कुवलयानन्दे–"उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः" अत्र कुररीणां च तासामप्सरसां सादृश्यम् । आर्तनादे च साधर्म्यम् यतः "साधर्म्यमुपमाभेदे" इति मम्मटाचार्याः । अनेनोपमालङ्कारेणाप्सरसां कुररीसदृशमबलत्वम्, स्वरतीक्ष्णतामाधुर्यादिकं वस्तु व्यज्यते–इति वस्तुव्यङ्ग्यम् ।

**मत्तानामिति**—कुसुमरसेन पुष्पाणां मकरन्देन मत्तानां मदोन्मत्तानां षट्पदानां भ्रमराणां शब्दोऽयं गुञ्जारवोऽयं किम्? अथवा आकाशे श्रूयमाणोऽयं निनादः किम् परभृतानां कोकिलानां धीरः स्वरः एव? अथवा सुराणां देवानां गणैः वृन्दैः सेविते समेते आकाशे समन्तात् सर्वतः नार्यः देवाङ्गनाः किन्नर्यो वा कलानि मनोहारीणि मधुराणि च अक्षराणि यस्मिन् यथा स्यात्तथा प्रगीता गातुमुपक्रान्ताः किमु? इति सन्देहः ।

भ्रमराणां गुञ्जनमिदं, उत कोकिलानां स्वरोऽयमथवा किन्नरीणामेव मधुरं गानमिदमाकाशे श्रूयते—इति सन्देहः । षट् पादा येषां ते षट्पदाः भ्रमराः "द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः" इत्यमरः । परैः काकादिभिः भ्रियते पोष्यते यः सः परभृतः कोकिलः । "वनप्रियः परभृतः कोकिलः" इत्यमरः । कलानि अव्यक्तानि अक्षराणि अस्मिन्, अथवा कं द्युतिं लान्तीति तानि–अनुप्रासादिभिः शोभमानानि । यद्वा कं शुद्धार्थं लान्तीति प्रसिद्धार्थपदयुक्तानि । अथवा कं स्वरं लान्तीति श्रवणमात्रेण मदनोद्भावीनि अक्षराणि इति कलपदस्यानेकार्थकत्वम् । यतः "को ब्रह्मानिलसूर्याग्निचित्रारियमकेतुषु । विष्णुवाहनशर्वेऽङ्घ्रौ सितकर्णे वसौ द्युतौ । स्वर्गे चक्रे तथा मित्रे शुद्धेऽर्थे स्वरकालयोः ॥" इति । प्रगीता गातुमुपक्रान्ता इति कर्तरि क्तप्रत्ययः ।

अत्र च एकस्वरावयवलक्षणस्य शब्दस्य साम्यात् त्रिगतं नाम वीथ्यङ्गम् । यदुक्तं धनञ्जयेन–"श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं मतम् ।" तथाच दर्पणेऽपि "त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः" यतः षट्पदपिकादीनामेकस्मिन्नेव शब्दे

(विचिन्त्य,) भवतु । ज्ञातम् ।

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री
कैलासनाथमनुसृत्य निवर्तमाना ।
बन्दीकृता विबुधशत्रुभिरर्धमार्गे
क्रन्दत्यतः करुणमप्सरसां गणोऽयम् ॥ ४ ॥

---

श्रुतिसाम्यात् सन्देहमूलकं परिकल्पनमस्ति । अत्र च ससन्देहालङ्कार –"ससन्देहस्तु भेदोक्तौ" इति काव्यप्रकाशकृतः । अथवा "सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः" इति विश्वनाथकविवराः । अत्र किमिदं गानं, अथवा कोकिलस्वरः, षट्पदगुञ्जनं वा इति सन्देहात् ससन्देहालङ्कारः । अनेन ससन्देहालङ्कारेण पीडितानामप्यप्सरसामार्तनादः पिकस्वर इव अथवा गानमिव नितान्तं कलमधुराक्षरं मदनोत्पादकमभवत् इति अप्सरसां कलकण्ठीत्वं मनोहारित्वं च वस्तु ध्वन्यते । यद्वा पिक इव तासां रवः आसीदिति उपमालङ्कारः ससन्देहालङ्करणाद् व्यज्यते ।

प्रहर्षिणीवृत्तम् । तल्लक्षणं तु—"प्रहर्षिणी म्नौ ज्रौग् त्रिकदशकौ"—यस्य पादे मकारनकारजकाररेफगकारा भवन्ति तद्वृत्तं प्रहर्षिणी नाम—यत्र च त्रिभिर्दशभिश्च यतिः । इति पिङ्गलछन्दःसूत्रे ॥ ३ ॥

**विचिन्त्येति**–किमेतदिति विचार्य कथयति ।

**भवतु**–साधु इत्यर्थः । **ज्ञातम्** किमेतदिति ।

**ऊरूद्भवेति**—नरसखस्य नरनारायणयोर्नरावतारस्य अर्जुनस्य सखा मित्रं नारायणस्तस्य मुनेः नारायणाख्यमुनेः ऊरूद्भवा ऊरोदेशतः समुत्पन्ना सुरस्त्री उर्वशीनामधेया देवाङ्गना कैलासनाथं शम्भुमनुसृत्य सेवित्वा निवर्तमाना गृहं प्रत्यागच्छन्ती विबुधानां सुराणां शत्रुभिः दैत्यैरर्धमार्गे मार्गान्तराले एव बन्दीकृता हठान्निगृहीता । अतः अप्सरसां अयं गणः करुणं यथा स्यात्तथा क्रन्दति रोदिति ।

अप्सरस्सु श्रेष्ठा साक्षाद्विष्णोरूरुतः समुत्पन्ना दिव्यस्त्रीरत्नं उर्वशी दानवैरपहृता । अत एव अप्सरोभिराकाशे परमकरुणतया रुद्यते—इति भावः ।

इयमुर्वशी नारायणस्योरुदेशतः समुद्भूतेति पौराणिकी श्रुतिः । कैलासनाथमनुसृत्येति "कर्मप्रवचनीययुक्ते द्वितीयेति" (२।३।८) द्वितीया । बन्दीकृता इति च्विः । विबुधा देवाः "अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः" इत्यमरः । मार्गस्यार्धमिति अर्धमार्गः इत्यत्र पिप्पल्या अर्धमिति अर्धपिप्पली–तद्वत् समासः ।

अत्र च भयानकाख्यो रसः–भयः स्थायी क्रन्दनकम्पादिकमनुभावः, संत्रासादयो व्यभिचारिणः ।

श्लोकोऽयं वसन्ततिलकावृत्तेन निबद्धः । उक्तं हि "उक्ता वसन्ततिलका तभजा जगौ गः" इति वृत्तरत्नाकरे । यस्मिन् वृत्ते तगणभगणजगणजगणाः गकारौ च भवन्ति तद्वृत्तं वसन्ततिलकाख्यमिति ॥ ४ ॥

(इति निष्क्रान्तः।)

**प्रस्तावना।**

ततः प्रविशन्त्यप्सरसः।

**अप्सरसः**—अज्जा परित्ताअध परित्ताअध। जो सुरपक्खपादि जस्स अम्बरअले गईअत्थि। [आर्याः! परित्रायध्वम् परित्रायध्वम्। यः सुरपक्षपाती यस्याम्बरतले गतिरस्ति।]

(ततः प्रविशति अपटीक्षेपेण राजा रथेन सूतश्च।)

**राजा**—अलमाक्रन्दितेन। सूर्योपस्थाननिवृत्तं पुरूरवसं मामेत्य कथ्यतां कुतो भवत्यः परित्रातव्या इति।

---

इति निष्क्रान्तः रङ्गभूमितोऽपक्रान्तः।

**प्रस्तावना**—तल्लक्षणं तु "नटी विदूषको वापि पारिपार्श्वक एव च। सूत्रधारेणसहिताः संल्लापं यत्र कुर्वते॥ चित्रैः वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा"—यत्र सूत्रधारेण सह पात्राणां संल्लापेन प्रस्तुतविषयः समाक्षिप्यते सा प्रस्तावना इति दर्पणकारः। अत्र च एकस्मिन् प्रयोगस्याक्षेपाद् "नेपथ्ये—अज्जा परित्ताअध" इत्यारभ्य "क्रन्दत्यतः करुणमप्सरसां गणोऽयं" इतिपर्यन्तेन अप्सरसां प्रवेशात् प्रयोगातिशयः यदुक्तं च—"यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते। तेन पात्रप्रवेशः स्यात्प्रयोगातिशयस्तदा।" इति विश्वनाथः।

इत्थमामुखं समाप्य प्रारभ्यते प्रधानवस्तुवर्णनम्।

**"इति प्रस्तावना"**

तत—इति अप्सरसः रङ्गभूमिं प्रविशन्ति।

अप्सरसः-अज्जा इति-पूर्वं व्याख्यातम्।

तत इति—राजा रथमारुह्य ससूतः अपटीक्षेपेण जवनिकापातानन्तरं प्रविशति रङ्गस्थल्यां समायाति।

यदा कश्चन पात्रः प्रविशति तदा क्वचित् पूर्वं जवनिकापातः क्रियते तदनन्तरं च तस्य प्रवेशः। अपटी जवनिका। यदुक्तम्—"अपटी काण्डपटः स्यात् प्रतिसीरा जवनिका तिरस्करणी" इति हलायुधः। केचन न पटीक्षेपः अपटीक्षेपः इति विग्रहं कुर्वन्ति मन्यन्ते च यत् जवनिकायाः अधःपातं विनैव प्रवेशः इति। किन्तु अत्र पुरूरवसः प्रथमप्रवेशादसूचितत्वाच्च प्रवेशपूर्वं जवनिकापातस्तु युक्त एव।

**अलमिति**—आर्तनादेन पर्याप्तम्। अत्र वारणार्थे तृतीया-आर्तनादं मा कुरुतेत्यर्थः। सूर्यस्य भगवतः उपस्थानं सेवा तस्मात् निवृत्तं प्रत्यागच्छन्तं

**रम्भा**—असुरावलेपादो । [असुरावलेपतः ।]

**राजा**—किं पुनरसुरावलेपेन भवतीनामपराद्धम् ।

**रम्भा**—सुणादु महाराओ । जा तवोविसेससङ्किदस्स सुउमारं पहरणं महेन्दस्स, पच्चादेसो रूवगव्विदाए सिरिगोरिए, अलंकारो सग्गस्स, सा णो पिअसही उव्वसी कुवेरभवणादो णिवत्तमाणा केणावि दाणवेण चित्तलेहादुदीआ अद्धपथं ज्जेव वन्दिग्गाहं गिहिदा [श्रृणोतु महाराजः । या तपोविशेषशङ्कितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्विताया: श्रीगौर्याः, अलङ्कारः सर्गस्य, सा नः प्रियसखी उर्वशी कुबेरभवनान्निवर्तमाना केनापि दानवेन चित्रलेखाद्वितीया अर्धपथ एव वन्दिग्राहं गृहीता ।]

---

पुरूरवसं तदाख्यं माम् एत्य कथ्यताम् उच्यतां कुतः कस्माद् भयाद् भवत्यः परित्रातव्याः रक्षणीयाः । भगवतः सवितुः सेवां विधायागच्छते मह्यं भवद्भय-कारणं निवेद्यतामित्यर्थः । सूर्योपस्थाननिवृत्तमिति विशेषणप्रदानेनोजस्विता सूचिता, चाहमाह्निकान्निवृत्तो भवत्कार्यकरणे सज्जोऽस्मि इत्यपि प्रदर्शितम् ।

**रम्भेति**—तदाख्या अप्सरा । असुराणां दैत्यानां अवलेपतः गर्वात् परित्रा-तव्याः रक्षणीया वयमिति शेषः । अवलेपस्तु गर्वः "अवलेपस्तु दोषे स्याद्गर्वे लेने च संगमे" इति विश्वः । अवलेपादो इत्यत्र "आदो दुश्च" इति सूत्रेण प्राकृते पञ्चम्याः-मादो इत्यादेशो भवतीति वररुचिः । "भीत्रार्थानां भयहेतुः" (१।४।२५) इति पञ्चमी ।

**राजा**—भवतीनां युष्माकं असुरावलेपेन दानवानां गर्वेण किं अपराद्धम् किं प्रतिकूलं कृतम् ?

**रम्भा—श्रृणोतु इति**—दानवैरस्माकं किं प्रतिकूलमाचरितम् इति महाराजः श्रृणोतु । **जा इति**—या तपोविशेषशङ्कितस्य उत्कटे तपसि वर्तमाने जने ममायमिन्द्रत्वं गृहीतुं कामयते इति शङ्कां कुर्वतो महेन्द्रस्य सुकुमारं कोमलं प्रहरणमा-युधम् अस्ति—या उर्वशी तपोविभवानां तपोभङ्गाय महेन्द्रस्य कोमलमायुधमस्ती-त्यर्थः । या च रूपगर्विताया: अहं सर्वाभ्यः सुरूपास्मीति साभिमानायाः श्रीगौर्याः शोभाप्रचुरायाः पार्वत्याः प्रत्यादेशः निरसनमेव । पार्वत्या अभिमाननाशिनी इयं उर्वशी अस्तीत्यर्थः । 'प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ।' इत्यमरः । या च उर्वशी सर्गस्याखिलसृष्टेः संसारस्य वा अलङ्कारः रत्नमेवास्ति । एतादृशी नः अस्माकं प्रियसखी उर्वशी कुबेरभवनात् शिवमुपस्थाय निवर्तमाना प्रत्यागच्छन्ती केनापि दानवेनासुरेण चित्रलेखाद्वितीया चित्रलेखानाम्या सख्या सहिता अर्धपथे मार्गमध्ये एव बन्दिग्राहं हठाद् गृहीता निगड्य अपहृता । पथः अर्धम् इति अर्धपथः । चित्रलेखया एव द्वितीया इति चित्रलेखाद्वितीया । बन्दीव गृहीता

**राजा**—अपि ज्ञायते कतमेन दिग्विभागेन गतः स जाल्मः ?

**अप्सरसः**—इसाणीए दिसाए । [ऐशान्या दिशा ।]

**राजा**—तेन हि मुच्यतां विषादः । यतिष्ये वः सखीप्रत्यानयनाय ।

**अप्सरसः**—सरिसं एदं सोमवंससंभवस्स । [सदृशमेतत्सोमवंशसम्भवस्य ।]

**राजा**—क्व पुनर्मां भवत्यः प्रतिपालयिष्यन्ति ।

---

इति बन्दिग्राहम्—उपमाने कर्मणि णमुल् । अत्र रूपकालङ्कारः अत्र प्रहरणस्य च तस्यास्तादात्म्याद्रूपकम् । तथा तस्याश्च प्रत्यादेशस्यामेदेन, सर्गालङ्कारस्य च ताद्रूप्याद्रूपकालङ्कारः—यदुक्तं कुवलयानन्दे—"विषय्यमेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपकं तत्"—एकस्यैव विषयिणः उर्वश्याः नैकविषयतादात्म्यसम्बन्धात् मालारूपकमिदम् ।

**राजा**—अपि प्रश्नार्थे । अपि ज्ञायते, ज्ञायते किं भवतीभिः कतमेन केन दिग्विभागेन दिशः देशेन गतः पलायितः स जाल्मः कपटी दुष्टः । कस्यां दिशि गतः स दुष्टः उर्वशीं गृहीत्वा इति ज्ञायते किमित्यर्थः । कतमेनेति, किंशब्दात् डतमप्रत्ययः "जाल्मस्तु पामरे असमीक्ष्यकारिणि" इति हैमः । जालं करोतीति बाहुलकान्मः । "नेड् वशि कृति" (७।२।८) सूत्रेण । अपि शब्दश्चात्र प्रश्नकारी—यदुक्तम् "अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये । तथा युक्तपदार्थे च कामचारक्रियासु च" इति विश्वः ।

**अप्सरसः**—ऐशान्या उदीचीप्राचीदिशोरन्तरगतेन कोणेन गतः पलायितः स दुष्ट इति ।

**राजा**—तेनेति—तेन हि अधुना विषादः शोकः मुच्यतां परित्यज्यताम् शोकमपकुर्वताम् इत्यर्थः । वः युष्माकं सख्याः प्रत्यानयनाय तस्माद्दुष्टात् पुनरानयनाय यतिष्ये यथासम्भवं प्रयत्नं करिष्यामि ।

**अप्सरसः**—सरिसेति—एतत् अस्माकं प्रार्थनायां विचारं विधाय सखीप्रत्यानयनाङ्गीकाररूपमिदं कार्यम्, सोमवंशे चन्द्रवंशे संभवः उत्पत्तिर्यस्य यद्वा संभवति अस्मादिति सम्भवः सोमवंशः सम्भवः यस्य एतादृशः भवतः सदृशं योग्यमेव । कार्यमेतत्स्वकुलानुरूपमेवेति तात्पर्यम् ।

**राजा**—क्वेति—क्व कस्मिन् स्थाने भवत्यः यूयम् माम् प्रतिपालयिष्यन्ति सम्भावयिष्यन्ति । मदागमनवेलायाः प्रतीक्षणं कुत्र करिष्यन्ति भवत्यः इति पृच्छति । कुत्र भवत्यो मिलिष्यन्ति यत्राहं तां गृहीत्वा आगच्छेयमिति प्रश्नः ।

**अप्सरसः**—एदस्सिं हेमकूडसिहरे। [एतस्मिन् हेमकूटशिखरे।]

**राजा**—सूत! ऐशानीं दिशं चोदयाश्वानाशुगमनाय ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । (इति यथोक्तं करोति ।)

**राजा**—(रथवेगं रूपयित्वा) साधु साधु । अनेन रथवेगेन पूर्वप्रस्थितं वैनतेयमपि आसादयेयम्, किंपुनस्तमपकारिणं मघोनः । मम—

अग्रे यान्ति रथस्य रेणुपदवीं चूर्णीभवन्तो घना-
श्चक्रभ्रान्तिररान्तरेषु वितनोत्यन्यामिवारावलीम् ।
चित्रारम्भविनिश्चलं हरिशिरस्यायामवच्चामरं
यन्मध्ये समवस्थितो ध्वजपटः प्रान्ते च वेगानिलात् ॥५॥

---

**अप्सरसः**—एतस्मिन्हेमकूटशिखरे-अस्य गिरेरुपरीत्यर्थः ।

**राजा**—सूतेति-सारथे! ऐशानीं दिशं प्रति अश्वान् आशुगमनाय तत्र शीघ्रप्राप्त्यै चोदय प्रवर्तय ।

**सूतः**—यदिति-यदाज्ञापयति-साधु,यदुच्यते तदेव करोमीत्यर्थः । सूतस्योच्चपात्रत्वात् शुद्धकुलोत्पन्नत्वात् वृद्धत्वाच्च राज्ञि आयुष्मन्निति सम्बोधनं साम्प्रतमेव । इति उक्त्वा यथोक्तं यथानिर्दिष्टं करोति अश्वान् ऐशानीं दिशं प्रति प्रेरयति ।

**राजा**—[ रथस्य वेगं गतिं रूपयित्वा दृष्ट्वा ] साधु साधु सन्तोषसूचकं पदमिदम् । प्रशंसात्मकं वा । अनेन रथवेगेन अनया धावनगत्या पूर्वप्रस्थितं मत्तः पूर्वमग्रे प्रस्थितं प्रचलितं वैनतेयमपि खगेश्वरं गरुडमपि आसादयेयम् ग्रहीतुं शक्नुयामित्यर्थः । किं पुनः तम् मघोनः इन्द्रस्य अपकारिणं अनिष्टकारिणं दानवम् । अनया गत्या पूर्वमेव पलायमानं वैनतेयमपि प्राप्तुं पारयामि ततः किं तस्य वराकस्य दुष्टदैत्यस्य इत्यर्थः । अनेन नायकस्य बलवत्त्वं, धीरत्वं, दृढात्मत्वं दानवस्य तुच्छत्वं च सूचितम् । ममेतिचूर्णकगतं पदं रथस्य विशेषणम् । **अग्र इति**—रथः आकाशे प्रस्थितः अतएव घनैः सह रथस्य सङ्घर्षः । मम रथस्य अग्रे पुरतः चूर्णीभवन्तः चूर्णत्वं प्राप्नुवानाः पिष्यमाणाः घनाः मेघाः रेणुपदवीं रेणुमार्गं यान्ति अनुसरन्ति । यथा पांसवः रथचूर्णिताः रथजवान् पश्चादेव भवन्ति तथैव चूर्णत्वमाप्ता मेघा अपि रथस्य पश्चादेव रेणुमनुगच्छन्तीति भावः । अरः चक्रस्यावयवीभूतं मध्यकाष्ठम् "अरमङ्गं रथाङ्गस्य" इति शाश्वतः । १



१–चक्रमिदम् ।

२–गतिसौकर्यार्थं स्नेहपूरणस्थानमिदं नाभिनामधेयम् ।

३–अरा एते चक्रस्यैकतानगत्यर्थं चिरस्थायित्वार्थं चान्तरा निक्षिप्यन्ते । एतत्त्ववधेयं यत् चक्रं यदा अत्यन्तजवेन भ्रमति, तदावान्तरकाष्ठानि वेगातिश-

( निष्क्रान्तो रथेन राजा सूतश्च )

**सहजन्या**—हला ! गदो राएसी । ता अम्हे वि जधासंदिट्टं पदेसं गच्छम्ह । [ हला ! गतो राजर्षिः, तद्वयमपि यथासन्दिष्टं प्रदेशं गच्छामः । ]

**मेनका**—सहि ! एव्वं करेम्ह । [ सखि ! एवं कुर्मः । ]

( इति हेमकूटशिखरे नाट्येनाधिरोहन्ति । )

---

याद् न पृथक्तया दृश्यन्ते । तेन चेत्थमवभासते यदिदं सर्वं दारुमयमेव । तदेवोच्यते चक्रस्य भ्रान्तिः वेगेन परिभ्रमणं अरान्तरेषु चक्रमध्यकाष्ठान्तरालेषु अन्यामिव अरावलीं काष्ठपङ्क्तिं वितनोति अवभासयति । यदा चक्रं वेगेन परिभ्रमति तदा इत्थं दृश्यते यत् अरान्तरेषु काचन नवीना अन्या एव अरावली निर्मिता इव विद्यते, सर्वं काष्ठमयमवभासते इत्यर्थः । चक्रे एकस्मादराद् अरान्तरपर्यन्तं रिक्तं स्थलं अन्तरिक्षं वा वर्तते । यदा चक्रं वेगेन परिभ्रमति तदा रिक्तमपीदं स्थलं अरैः संयुतं दृश्यते, अवभासते च निखिलचक्रं काष्ठमयमिति— अतः कविरुत्प्रेक्षते यद् वेगवती चक्रभ्रान्तिः अरान्तरेषु अरान्तरालेऽपि अन्यामिव अरावलीं वितनोति करोति अवभासयतीति तात्पर्यम् । हरीणां अश्वानां शिरसि शोभार्थं बद्धं, आयामः दैर्घ्यमस्यास्तीति आयामवद् दीर्घं चामरं चित्रे आलेख्ये आरम्भो न्यासस्तद्वत् विशेषेण नितान्तं निश्चलं स्थगितं दृश्यते । रथस्य जवातिशयात् दीर्घमपि चामरं चित्रितमिवासीत् । प्रान्ते एकस्मिन् पार्श्वे विद्यमानो ध्वजपटः रथवेगजन्यः यः अनिलः वायुवेगः तस्मात् वेगानिलात् यन्मध्ये रथमध्यभागे समवस्थितः । रथवेगजन्यवायुवेगात् एकत्र स्थितः अपि ध्वजपटः रथमध्ये समायातः इत्यर्थः । अत्र रथस्य वेगातिशयत्वं वस्तु ध्वन्यते । चक्रभ्रान्तिः अन्यामिवारावलीं वितनोतीत्यत्र कविगतसम्भावनामात्रचमत्कारात् उत्प्रेक्षालङ्कृतिः । यदुक्तं 'संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना' । चित्रारम्भविनिश्चलमित्यत्र चित्रारम्भवद्विनिश्चलत्वप्रदर्शनेन उपमालङ्कारः । चतुर्थपादे च पटस्य वायुवेगेन मध्यागमनस्वभाववत्त्वाच्च तस्य वर्णनाच्च स्वभावोक्तिः–यदुक्तम् "स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ।" पुनश्च सर्वासामेवालङ्कृतीनां मिथो निरपेक्षतया चमत्कारकारित्वात् संसृष्टिरलङ्कारः । वृत्तं चात्र शार्दूलविक्रीडितम् । लक्षणं तु 'सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्' ॥ ५ ॥

**निष्क्रान्त इति**—रथेन रथमारुह्य राजा सूतश्च निष्क्रान्तः गतः, दृष्टिपथादप्सरसां बहिर्भूत इत्यर्थः ।

**सहजन्या**—हलेति प्रीतिप्रदर्शकं सखीसम्बोधनात्मकमव्ययम् । राजर्षिः राजसु ऋषिभूतः एव स विक्रमः गतः प्रस्थितः । तत् वयमपि यथासन्दिष्टं यथाप्रदर्शितं प्रदेशं स्थलं गच्छामः । सन्दिष्टमनतिक्रम्य यथास्यात्तथा यथासन्दिष्टमिति अव्ययीभावः ।

**मेनका**—सखि ! एवं कुर्मः यथाप्रदर्शितं स्थलं गच्छामः इति उक्त्वा हेम-

**रम्भा**—अवि णाम सो राएसी उद्धरदि णो हिअअसल्लम् ? [ अपि नाम स राजर्षिः उद्धरिष्यति नो हृदयशल्यम् ? ]

**मेनका**—सहि, मा दे संसओ भोदु । [ सखि ! मा ते संशयो भवतु । ]

**रम्भा**—णं दुज्जआ दाणवा । [ ननु दुर्जया दानवाः । ]

**मेनका**—उवट्ठिदसम्पराओ महिन्दो वि मज्झमलोआदो सबहुमाणं आणाविअ तं एव्व विबुधविजआअ सेणामुहे णिओजेदि । [ उपस्थितसम्परायो महेन्द्रोऽपि मध्यमलोकनः सबहुमानमानाय्य तमेव विबुधविजयाय सेनामुखे नियुङ्क्ते । ]

**रम्भा**—सव्वहा विअई भोदु । [ सर्वथा विजयी भवतु । ]

**मेनका**—( क्षणमात्रं स्थित्वा ) हला ! समस्सस समस्सस [ हला ! समाश्वसिहि समाश्वसिहि । ] एस उल्लसिदहरिणकेदणो तस्स राएसिणो सोमदत्तो रहो दीसदी; ण एसो अकिदत्थो पडिणिउत्तिस्सदि त्ति तक्केमि । [ एष उल्लसितहरिणकेतनस्तस्य राजर्षेः सोमदत्तो रथो दृश्यते; नैषोऽकृतार्थः प्रतिनिवर्तिष्यत इति तर्कयामि । ]

( निमित्तं सूचयित्वा अवलोकयन्त्यः स्थिताः । )

---

कूटशिखरे नाट्येन विलासेन अधिरोहन्ति उपरि गच्छन्ति सर्वा अप्सरसः ।

**रम्भा**—अपि नाम इति प्रश्ने–किं स राजर्षिः नः अस्माकं हृदयशल्यं हृदयकण्टकं सखीहरणजं दुःखमुद्धरिष्यति परिहरिष्यति ? हृदये शल्यमिव हृदयशल्यं दुःखमित्युपमा ।

**मेनका**—सखि ! अस्मिन् ते संशयः शङ्का मा भवतु–मा शङ्कस्वेत्यर्थः । अवश्यमेव उद्धरिष्यतीत्यर्थः ।

**रम्भा**—स्वसंशयकारणं कथयति–दानवाः दुःखेन क्लेशेन जेतुं योग्या भवन्तीति दुर्जयाः खलु ।

**मेनका**—उपस्थितः आगतः सम्परायो युद्धं यं स महेन्द्रोऽपि तमेव राजर्षिं मध्यमलोकात् सबहुमानं आदरपूर्वकमानाय्य समाहूय विबुधानां सुराणां विजयाय सेनामुखे सेनापतिकार्ये नियुङ्क्ते नियोजयति । अनेन राज्ञः इन्द्रस्यापि विदितपराक्रमत्वं सख्यं च व्यज्यते ।

**रम्भा**—सर्वथेति–अस्य महाराजस्य विजयः शत्रुदमनं सर्वथा साकल्येन भवतु ।

**मेनका**—क्षणमात्रं किञ्चित्कालं स्थित्वा तूष्णींभूत्वा अवदत् । हला प्रियसखि ! समाश्वसिहि विश्वस्ता भव । श्वसतेः लोटि मध्यमपुरुषैकवचनान्तं क्रिया-

( ततः प्रविशति रथारूढो राजा सूतश्च । भयनिमीलिताक्षी चित्रलेखा दक्षिणहस्तावलम्बिता उर्वशी च । )

**चित्रलेखा**—सहि! समस्सस समस्सस । [ सखि! समाश्वसिहि समाश्वसिहि । ]

**राजा**—सुन्दरि! समाश्वसिहि—

गतं भयं भीरु सुरारिसम्भवं
त्रिलोकरक्षी महिमा हि वज्रिणः ।

---

पदम् । एष इति—तस्य राजर्षेः पुरूरवसः एष पुरो दृश्यमानः उल्लसितः वायुचालितः सुन्दरः हरिणो मृगाङ्कः केतने ध्वजपटे यस्य सः एतादृशः सोमेन चन्द्रेण दत्तो रथो दृश्यते । यस्य रथस्य ध्वजपटे हरिणस्य चिह्नं विद्यते ईदृशश्चन्द्रेण भगवता विक्रमायोपहारीकृतो रथः पुरः समागच्छन् विलसतीति भावः । अहं तर्कयामि अनुमिनोमि विचारयामि वा यत् स राजर्षिः अकृतार्थः असम्पादितकार्यः अकृतकृत्यो निष्फलो वा न प्रतिनिवर्तिष्यते प्रत्यागमिष्यति इति । स अर्थसाधनमन्तरा न कदापि प्रत्येष्यतीति सारः । रथस्योल्लसितहरिणकेतनत्वविशेषणप्रदानेन तस्य विजयित्वं सूचितम् । स राजा चन्द्रवंशप्रदीप एवाभूत्, तेन रथस्य चन्द्रदत्तत्वं युक्तमेव । तस्य रथस्य सोमीयत्वात् हरिणकेतनत्वमपि साधु एव, सोमस्य हरिणाङ्कत्वात् । अत्र राजर्षिपदप्रदानेन राजसु ऋषित्वं श्रेष्ठत्वं च ख्यापितम्, तेन च तस्यात्र राजर्षिपदग्रहणमतीव साभिप्रायम् ततस्तु परिकरालङ्कारः, तल्लक्षणं तु "अलङ्कारः परिकरः साभिप्राये विशेषणे" । नैष अकृतार्थः प्रतिनिवर्तिष्यत इत्यनेन तस्य सन्देहातीतपराक्रमवत्त्वमनुपमौजस्विता च व्यज्यते । निमित्तमिति—निमित्तमनुकूलं शकुनं अङ्गस्फुरणादि सूचयित्वा ज्ञात्वा अवलोकयन्त्यः रथमन्योन्यं दर्शयन्त्यः अप्सरसः स्थिताः ॥ **तत इति**—ततः रथारूढः रथमारुह्य प्रतिनिवर्तमानः ससूतो राजा रङ्गभूमिं प्रविशति । तथा च भयेन निमीलिते आकुञ्चिते अक्षिणी नयने यस्याः सा एतादृशी, परं च चित्रलेखायाः दक्षिणेन हस्तेन अवलम्बिता धृता उर्वशी च प्रविशति । चित्रलेखा रथस्थामुर्वशीं बोधयति **सखीति**—उर्वशि! समाश्वसिहि समाश्वसिहि संज्ञां लभस्व, सचेतना भवेति ।

**राजा**—सुन्दरि! समाश्वसिहि चेतनां प्राप्नुहि । **गतमिति**—हे भीरु भयशीले! सुरारेः दैत्यात् सम्भवः उत्पत्तिः यस्य तत् ( अथवा सुरारिः सम्भवः उत्पत्तिस्थानं जनको वा यस्य तत् ) ईदृशं भयं गतमपास्तम् । कुतः वज्रिणः इन्द्रस्य महिमा माहात्म्यम् त्रिलोकरक्षी लोकत्रयरक्षणसमर्थः अस्ति । तदेतत् अस्मात् कारणात् आयतं दीर्घं चक्षुर्नेत्रं उन्मीलय उद्घाटय, यथा निशावसाने निशाया रजन्या अवसाने समाप्तौ नलिनी पद्मिनी पङ्कजं कमलमुद्घाटयति । भीरुस्त्वार्ता "भीरुरार्ते त्रिलिङ्गे स्यात्" इति विश्वः । "भियः क्रुक्लुकनौ" ( ३।२।१७४ ) इति क्रुः । वज्रमस्यास्तीति वज्री तस्य वज्रिणः । यद्यपि वज्रम्

तदेतदुन्मीलय चक्षुरायतं
निशावसाने नलिनीव पङ्कजम् ॥ ६ ॥

**चित्रलेखा**—अम्महे ! कहं उस्ससिदमेत्तसंभाविदजीविदा अज्ज वि एसा सण्णं ण पडिवज्जदि ? [ कथमुच्छ्वसितमात्रसम्भावितजीविता अद्यापि एषा संज्ञां न प्रतिपद्यते ? ]

**राजा**—बलवदत्र ते सखी त्रस्ता । तथाहि—

मन्दारकुसुमदाम्ना गुरुरस्याः सूच्यते हृदयकम्पः ।
मुहुरुच्छ्वसता मध्ये परिणाहवतोः पयोधरयोः ॥ ७ ॥

---

येन केनापि भार्यं भवति किन्तु प्रशस्तं दर्भं यस्य स इति दर्भी इन्द्रः यथा प्रशस्तो हनुरस्यास्तीति हनुमान् इत्यत्र प्राशस्त्यमत्वर्थीयः प्रत्ययः । अत्रोपमालङ्कारः । यथा रात्रिसमाप्तौ नलिनी पङ्कजमुद्घाटयति एवमेव त्वं भये गते सति चक्षुरुद्घाटयेति सादृश्यगतचमत्कृतिसद्भावादुपमा । भयस्य निशयोपमाप्रदानेन कृष्णपक्षीयघोरान्धकारतुल्योग्रता सूचिता । नायिकायाः नलिन्या सह सादृश्यप्रदर्शनेन अत्यन्तसौकुमार्यं कमनीयता च व्यज्यते । चक्षुषः पङ्कजोपमया सौन्दर्यातिशयावहत्वं गम्यते । चक्षुषः आयतत्वविशेषणप्रदानेन भाग्यवत्ता अमानुषीत्वमलौकिकलावण्यं च ध्वनितम् । अत्र द्वितीयचरणपदार्थस्य भयनिवृत्तौ हेतुत्वात् काव्यलिङ्गं च अलङ्कारः "हेतोर्वाक्यपदार्थते"ति लक्षणात् । पङ्कजपदे योगरूढवृत्तिः । महिमेति पुंल्लिङ्गं पदम् । पद्यमिदं वंशस्थावृत्तेन निबद्धम्, तल्लक्षणं तु "वंशस्था जतौ ज्रौ" ( पिङ्गल० ६।२९ ); यस्य पादे जकारतकारजकाररेफाः भवन्ति तद्वृत्तं वंशस्थाभिधम् ॥ ६ ॥

**चित्रलेखा-अम्महे इति** । आश्चर्यव्यञ्जकमिदमव्ययम् । कथमुच्छ्वसितमात्रेण केवलश्वासोच्छ्वासमात्रेणैव संभावितं निश्चितं जीवितं प्राणाः यस्याः सा एषा प्रियसखी उर्वशी अद्यापि अधुनापि संज्ञां चेतनतां न प्रतिपद्यते प्राप्नोति । इयं जीवतीति केवलप्राणवायुसंचारेण अनुमीयते-एतादृशीमवस्थां प्राप्तेयमधुनापि पुनर्लब्धसंज्ञा न भवतीति व्यग्रता-इति सारः । कथमिति तर्कः व्याकुलत्वं गमयति ।

**राजा**—हे चित्रलेखे ! अत्र इयं ते सखी उर्वशी बलवत् त्रस्ता भृशं भीतेत्यर्थः । बलवदिति क्रियाविशेषणं त्रस्तेतिपदेनान्वेति । तथाहि कुतः—कारणमाह **मन्दारेति**—परिणाहवतोः विशालयोः पयोधरयोः स्तनयोर्मध्ये मुहुर्वारंवारं उच्छ्वसता उत्पतता मन्दारकुसुमदाम्ना मन्दारपुष्पमालया अस्या उर्वश्या गुरुरधिको हृदयकम्पः सूच्यते परिज्ञाप्यते । तया मन्दारपुष्पाणामेका रमणीया माला धृता आसीत् । सा च यदा श्वासवेगो उपरि चलति, बहिर्वा निर्गच्छति यदा वायुस्तदा उच्छ्वसति पश्चाच्चाधःपतति श्वासग्रहणवेलायाम्, अनेन कियानस्याः हृदयकम्पोऽस्तीति परिज्ञायते । अत्रानुमानालङ्कारः । मन्दारस्तु पञ्चविधकल्प-

**चित्रलेखा**—( सकरुणम् ) हला उव्वसि ! पज्जवत्थावेहि अत्ताणम् अणच्छरा विअ पडिभासि । [ हला उर्वशि ! पर्यवस्थापयात्मानम्, अनप्सरेव प्रतिभासि । ]

**राजा**—

मुञ्चति न तावदस्या भयकम्पः कुसुमकोमलं हृदयम् ।
सिचयान्तेन कथञ्चित्स्तनमध्योच्छ्वासिना कथितः ॥ ८ ॥

( उर्वशी प्रत्यागच्छति । )

**राजा**—( सहर्षम् ) चित्रलेखे ! दिष्ट्या वर्धसे । प्रकृतिमापन्ना ते प्रियसखी । पश्य—

---

तरुष्वन्यतमः "मन्दारः स्यात्सुरद्रुमे" इति मेदिनी । "परिणाहो विशालते"त्यमरः । अस्याः हृदयकम्पः प्रसूनमालया अवगम्यः आसीत्, अनेन नायिकायाः नितान्तं कोमलत्वं सूचितम् सानुकम्पत्वं च राज्ञः दयापरिप्लुतेन वचसा । इयमार्याजातिः— "यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या" इति लक्षणात् ॥ ७ ॥

**चित्रलेखा**—सकरुणं दैन्येनाह—हला प्रियसखि उर्वशि ! आत्मानं पर्यवस्थापय आत्मानं स्वीयां प्रकृतिं प्रापय—चैतन्यं लभस्वेत्यर्थः । यस्माचेतना न भवसि तस्मात्त्वं अनप्सरेव प्रतिभासि दृश्यसे, अप्सरसां प्राकृतानपि गुणान् जहासि । अधैर्यं तावत् देवयोनिमापन्नानामप्सरसामसाम्प्रतम्–अधैर्यं तु मनुष्येषूचितं न देवतासु इति धैर्यं धारयेत्यर्थः । युज्यते हि सहचर्याश्चित्रलेखाया उर्वशीं प्रति सोपालम्भं वचः ॥

**राजा—मुञ्चतीति**—स्तनयोः कुचयोर्मध्यभागे उच्छ्वासिना श्वासवेगानुसारं पततोत्पतता सिचयान्तेन वस्त्रान्तेन कथञ्चित् कथितः सूचितः भयकम्पः भयजन्यो वेपथुः कुसुमवत्कोमलं हृदयं न मुञ्चति परित्यजति । हृदयस्य कुसुमसदृशी कोमलतेति कुसुमकोमलपदे वाचकलुप्तोपमालङ्कारः । परार्धे चानुमानम् । पुनश्च बलवान् मृदुं न त्यजति इति सांसारिकः स्वभावश्च द्योत्यते ॥ अत्र स्तनमध्योच्छ्वासित्वात् पटान्तेन च सामान्यतः संगमनात् कम्पपदस्य पुंलिङ्गत्वाच्च नायकव्यवहारारोपो व्यज्यते । ध्वन्यते च तयोः परस्परं पूर्वरागः । कथञ्चिदिति पदेन दुरूहत्वं च गम्यते । "वस्त्रं सिचयः पटः पोतः" इति हलायुधः । इयमप्यार्या जातिः ॥ ८ ॥

उर्वशी प्रत्यागच्छति–संज्ञां लभते इत्यर्थः ।

**राजा**—सहर्षम्–आनन्दपूर्वकं कथयतीति शेषः । चित्रलेखे ! दिष्ट्या वर्धसे–त्वमतीव भाग्यवती असि, उत्सववती वा । यतः 'दिष्ट्या पूर्वो वर्धतिरुत्सवे' इति सागरः । ते महोत्सवस्येयं वेला प्राप्तेति मोदस्व, आनन्दातिशयहेतुश्च–ते

आविर्भूते शशिनि तमसा रिच्यमानेव रात्रिः
नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुच्यमाना
गङ्गा रोधःपतनकलुषा गच्छतीव प्रसादम् ॥ ९ ॥

**चित्रलेखा**—सहि उव्वसि! वीसद्धा भव। आवण्णाणुकम्पिणा महाराएण पडिहदा क्खु दे तिदसपरिवन्थिणो हदासा दाणवा। [सखि उर्वशि! विश्रब्धा भव । आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदशपरिपन्थिनो हताशा दानवाः ।]

**उर्वशी**—(चक्षुषी उन्मील्य) किं पहावदंसिणा महिन्देण अब्भुववण्णह्मि। [किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि ?]

---

प्रियसखी उर्वशी प्रकृतिं आपन्ना स्वाभाविकीं परिस्थितिं प्राप्ता, सचेतना अभवदिति तात्पर्यम् । पश्येति चूर्णकस्थपदस्य "आविर्भूते शशिनीति" पद्यं कर्मत्वेनान्वेति । **आविर्भूत इति**—इयं वरतनुः मनोहारिशरीरा उर्वशी अन्तर्मोहेन चेतसो मूर्च्छया मुच्यमाना परित्यक्ता एतादृशी लक्ष्यते यथा आकाशे शशिनि चन्द्रे आविर्भूते उदयं प्राप्ते सति तमसा अन्धकारेण रिच्यमाना रहिता रात्रिः कमनीयतामावहति—तादृशी एवेयमुर्वशी मूर्च्छया परिहीणा लब्धसंज्ञा दृश्यते । किंच इयं तथा भाति यथा नैशस्य निशायां विशेषतो देदीप्यमानस्य हुतभुजः अग्नेः च्छिन्नभूयिष्ठधूमा धूमरहिता अर्चिः ज्वाला सुन्दरमवभासते । च्छिन्नो नष्टः भूयिष्ठः बहुलो धूमः यस्याः सा च्छिन्नभूयिष्ठधूमा अर्चिः । निशायां भवो नैशः तस्य । हुतं भुनक्तीति हुतभुक् तस्याग्नेः । किंच इयं सुतनुरुक्तादर्शीं रमणीयतां वहति यथा गङ्गा रोधसस्तटस्य पतनेन ध्वंसेन कलुषा आविला मलिना वा पुनः प्रसादं नैर्मल्यं प्राप्नोति । अत्रैकस्यैवोर्वशीरूपोपमेयस्यानेकोपमानप्रदानेन मालोपमालङ्कृतिः । सा हि–'मालोपमा यदेकस्योपमानं बहु दृश्यते' । अत्र पूर्वार्धे उपमानद्वयं समाप्य तृतीयचरणे उपमेयमुपन्यस्य चरमचरणे चोपमानस्य पुनरुपादानात् समाप्तपुनरात्तताख्यो दोषः ॥ वृत्तं च मन्दाक्रान्ता "मन्दाक्रान्ता जलधिषडगौ म्भौ नतौ ताद्गुरू चेत्" यस्य पादे मकारभकारनकारतकारतकाराः गकारौ च तद्वृत्तं मन्दाक्रान्ता । अत्र चतुर्षु षट्सु सप्तसु च यतिः ॥ ९ ॥

**चित्रलेखा**—सखि उर्वशि! विश्रब्धा विश्वस्ता भव । आपन्नेषु दुःखितेषु अनुकम्पिना दयालुना महाराजेन विक्रमेण प्रतिहता नाशिताः त्रिदशानां देवानां परिपन्थिनो विरोधिनो दानवाः असुराः । हताशा धिक्कृता नीचा इत्यर्थः ।

**उर्वशी**—(चक्षुषी नेत्रे उन्मील्य उद्घाट्य) किं प्रभावदर्शिणा पराक्रमिणा महेन्द्रेण अभ्युपपन्ना अनुगृहीतास्मि ।

**चित्रलेखा**—ण महिन्देण, महिन्दसरिसाणुभावेण राएसिणा पुरूरवसेण । [ न महेन्द्रेण, महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसा । ]

**उर्वशी**—( राजानमवलोक्यात्मगतम् ) उवकिदं क्खु दाणवेन्दसंरम्भेण । [ उपकृतं खलु दानवेन्द्रसंरम्भेण । ]

**राजा**—( उर्वशीमवलोक्यात्मगतम् ) स्थाने खलु नारायणमृषिं विलोभयन्त्यस्तदूरुसम्भवामिमां विलोक्य व्रीडिताः सर्वा अप्सरस इति । अथवा नेयं तपस्विनः सृष्टिरित्यवैमि । कुतः—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।

---

**चित्रलेखा**—महेन्द्रेण तु नोद्धृतासि किन्तु महेन्द्रसदृशानुभावेन इन्द्रतुल्यप्रभावेण राजर्षिणा पुरूरवसा अभ्युपपन्नासि, "अनुभावः प्रभावे स्यात् निश्चये भावसूचके" इति विश्वः ।

**उर्वशी**—राजानमवलोक्य-( पश्चादुच्यमानं राजविषयकमस्तीति तात्पर्यम् ) आत्मगतम् परैरश्रुततया मनस्येव केवलं चिन्त्यते-यथा साहित्यदर्पणे-"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्" स्वगतम् आत्मगतं च पर्यायौ । उपकृतं उचितमेव कृतं दानवेन्द्रेण केशिना प्रदत्तेन संरम्भेण त्रासेन-यतः एतादृशस्य राजर्षेः दर्शनमहोत्सवः प्राप्तः । यदि केशी इत्थं नाचरिष्यत्तदा राजर्षिदर्शनमपि नाभविष्यत् अतस्तेन दैवेनानुगृहीतास्मि । इयं प्रेम्णः प्रथमावस्था-"श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयो"रितिवचनात् पारस्परिकप्रेक्षणस्यापि पूर्वरागेऽङ्गीकारात् प्रेम्णः आदिमेयं दशा । "आदौ वाच्यः स्त्रिया रागः" इत्युक्तेरुवर्श्याः पूर्वरागवर्णनम् ॥ अतःपरं तयोर्मञ्जिष्ठारागः प्रवर्तते ।

**राजा**—उर्वशीं प्रेक्ष्य स्वगतमेवाह-स्थाने खलु युक्तमेवैतत् यत् नारायणं तपस्यन्तं ऋषिं महामुनिं विलोभयन्त्यः कामवासनाभिः प्रलोभयन्त्यः अप्सरसः सर्वा एव दिव्याङ्गनाः इमां पुरो दृश्यमानां विलक्षणां उर्वशीं तदूरुसम्भवां तस्य महामुनेः जङ्घातः समुत्पन्नां विलोक्य निरूप्य व्रीडिताः लज्जां प्राप्ता इति । तपस्यतः नारायणस्य महामुनेः तपश्चर्याभङ्गार्थं कान्ताभिनयैः प्रलोभयितुमिच्छन्त्यः सर्वाः अप्सरसः तदीयोरुप्रदेशात् तदैव समुत्पन्नामिमामुर्वशीं प्रेक्ष्य 'यस्योरुतः एतादृशी रमणीया रमणी समुद्भूता तस्य ततः किमस्माकं प्रलोभनैरिति' विचार्य लज्जिता बभूवुरिति नानुचितम्, अस्याः तादृक्सौन्दर्यविशेषशालित्वात् । स्थाने इति युज्यते "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । इति सरलार्थः । अथवा ईदृशीमलौकिकरूपवतीं सृष्टिं समुत्पादयितुं कथमर्हो भवेत् कोऽपि अविज्ञातकाममीमांसस्तपस्वी-इत्येवाह-अथवा इति वितर्के । इयमुर्वशी तपस्विनः कस्यापि संयतचेतसो मुनेः सृष्टिः समुत्पन्ना नास्तीत्यवैमि जानामि तर्कयामि वा ।

वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ १० ॥

कुतः-अस्याः शङ्कायाः कारणमाह—**अस्या इति**-अस्या उर्वश्याः सर्गविधौ उत्पादनकर्मणि प्रजापतिर्वेधाः साक्षात्कान्तिप्रदः चन्द्र एवाभूत् किम्, यदेतादृशो रूपस्य संभवः । नु इति सन्देहे । अथवा यदि चन्द्रो न स्यात्प्रजापतिर्न तदा स्वयं मदनः कामः एव स्रष्टाऽभूत् यः शृङ्गारैकरसः शृङ्गारे नितान्तं निमग्न एवास्ते । अथवा यद्यनपि नाभवत्तदा मासः पुष्पाकरः वसन्तः स्यात् । स ऋषिः कथं नेमां निर्मितवानित्याह—स पुराणो वृद्धो मुनिः मनोहरमिदमीदृशं रूपं निर्मातुं कथं नु प्रभवेत् कथं समर्थः स्यात् यतः न तु रसिकैरिन्द्रियैः वेदानां नीरसानामभ्यासेन वारं वारं परिशीलनेनावलोकनेन वा जडतां सहृदयतायां मन्दतां प्राप्तः, परं च विषयेभ्यः भोग्यपदार्थेभ्यः व्यावृत्तं क्षीणं कौतूहलं इच्छा उत्साहो वा यस्य सः एतादृशोऽयं नीरसः पुरुषः कथं विलक्षणसौन्दर्यसन्दानितामिमां निर्मातुं पारयेत्, न कदापीत्यर्थः । तस्मान्नेयं मुनिसम्भवा भवितुमर्हतीति भावः ॥

पद्येऽस्मिन् प्रतिपदं वैलक्षण्यमस्तीत्यवधेयम्-यथा-अत्र शशीन्दुप्रभृतिविविधचन्द्रत्वप्रतिपादकशब्दान् विवर्ज्य कथं वा कवेश्चन्द्रपदे एव बहुमानः इति विचारणायां चन्द्रेणात्यन्ताल्हादजनकत्वमिष्यते । 'चदि आल्हादने' तस्मात् रक् प्रत्ययान्ते चन्द्रपदे एव तादृशार्थबोधनसामर्थ्यात् । पुनश्च चन्द्रस्यानन्ददेवतात्वं प्रसिद्धं उपनिषत्स्वपि, काव्येष्वपि "ल्हादनात् चन्द्रमित्याहू राजा प्रकृतिरञ्जनात्" इति । तथा च न केवलं चन्द्रोऽयं आह्लादक एव किन्तु कान्तिप्रदोऽपि—अत्रापि शोभासुषमादिपदानपेक्षं कान्तिपदप्रदानम्—'काम्यते इति क्तिन्' तेन कान्तिः अत्यन्तमभीप्सितः कमनीयगतो धर्मविशेषः यद्विभूषितविरहे हृदयं ताम्यतीति । तां कान्तिं नाल्पतया ददातीति कान्तिप्रदः । पुनरपि कामकन्दर्पादिपदानि विहाय कवेर्मतिर्मदनपदचुम्बिनी "मदयतीति मदनः" इति व्युत्पत्त्या विशेषतया लोकान् विमोहयितुं समर्थः इति विशेषार्थप्रतिपिपादयिषयाऽभवत् । सोऽपि मदनः शृङ्गारैकरसः 'शृङ्गं प्राधान्यं प्राथम्यमियर्त्ति' इत्यण्णन्तव्युत्पत्त्या सर्वेषु रसेषु रम्यतमत्वं प्राधान्यञ्च व्यञ्जयन् मदनस्य रसराज एव एकः अन्यनिवृत्तिपरकः रसः रागः यस्येति आत्यन्तिकरसिकत्वं सहृदयत्वं च सूचितम् । सोऽपि स्वयं स्वहस्तकलाकौशलेन निर्मितवानिमां न स्वसहायकैरिति । अथवा मधुवसन्तादिपदव्यावर्तनपूर्वकं पुष्पाकरपदग्रहणेन 'पुष्पाणामाकरः' पुष्पाकरः इत्यनेन तस्य परममार्दवं, विविधरङ्गापूर्वसौरभादिज्ञानवत्त्वं वसन्ते द्योतितम्, तथा चास्याः कुसुमसुकुमारत्वं पद्मिनीसदृशमदयदमन्दामोदवत्त्वं च व्यक्तीकृतम् । वेदाभ्यासजडपदस्वीकारेण विधातुस्तस्यात्यन्तिकवैमुख्यं प्रदर्शितं रसिकतायाम् । यतः 'विन्दति धर्ममात्मज्ञानं येन स वेदः' । आत्मज्ञानाधिकारिणां साधनचतुष्टयेषु पूर्वमिहामुत्रफलभोगविरागः इष्यते तथा चोपदिश्यते गीतायां यत् 'ये हि संस्पर्शजा

भोगा दुःखयोनय एव ते' इति हेतोः वेदविद्भिः ऐहिकेषु इन्द्रियसन्निकर्षजन्येषु भोगेषु नितान्तं तिरस्कारः क्रियते । तेन चाज्ञातविषयतत्त्वा वैदिकाः अरसिका सहृदयतावञ्चिता भवन्ति । एतादृक्संस्पर्शजन्यसुखपराङ्मुखानां वेदानां 'अभ्यासः' । अत्रापि च पुनः विहाय पठनादिशब्दोपयोगमभ्यासपदाङ्गीकारेण 'अभिपूर्वकास् धातोः'' घञन्तव्युत्पत्त्या, आस्धातोश्च उपवेशनरूपार्थकत्वात् उपवेशनस्य च अन्यस्थलगमननिवृत्तिपूर्वकं स्वीकृतस्थले एव निश्चलतया स्थान-रूपार्थकत्वात् ज्ञानमार्गातिरिक्तविषयेषु चित्तवृत्तिं नितान्तं निरुध्य अवधूतवनिताद्य-नेकविलक्षणैहिकसुखत्वेन तेषु वेदेषु निश्चलतया अभ्यासः स्थितिः तेन चाभ्यासेन 'जडः' जडपदस्य च घातनार्थकजलधातोः अच्करणेन संभवः तेन घातितस-हृदयत्वं रसिकताविषयकात्यन्तिकमान्द्यं च द्योत्यते तस्मिन् प्रजापतौ । न चात्र विषयव्यावृत्तकौतूहलेतिपदप्रदानेन शब्दमर्यादयैवैतत्सर्वमेवागच्छतीति वाच्य-वृत्त्यालिङ्गितत्वात्तस्य व्यङ्ग्यत्वं नेति वाच्यम् । यतः विषयव्यावृत्तकौतूहलपदाङ्गी-कारेण विषयेषु उत्साहोऽपि नष्ट इति सूच्यते । तत्र च वेदाभ्यासजडपदेन विषयेभ्यश्चित्तवृत्तिनिरोधजन्यरसिकतागतमान्द्यमेवादर्शि कविना न तावत् विषय-विषयकोत्साहहीनत्वं विषयव्यावृत्तकौतूहलपदवाच्यम् । यतः सर्वोपनिषत्सारभू-तायां भगवन्मुखपङ्कजनिःसृतायां गीतायां प्रतिपादितम् ''विषया विनिवर्तन्ते निराहारस्य देहिनः-( किन्तु ) रसवर्जम्—'' विषयेभ्यो वृत्तिनिरोधेन विषया विनिवर्तन्ते किन्तु विषयार्थरसवर्जम् । रसो रागोत्साहश्च योगबलेन यथाक-थञ्चित् निरुद्धायामपि चित्तवृत्तौ 'यदीदं भवेत्तदा सम्यक् स्यादिति' विषयानुरागस्तु वर्तते एव; तन्निरासार्थं कविना पृथक्तया विषयव्यावृत्तकौतूहलेतिपदग्रहणं कृतम् । वेदाभ्यासजडपदव्यङ्ग्यार्थमेव विशिनष्टि विषयव्यावृत्तकौतूहलपदं न तमेवार्थं सूचयति, उभाभ्यां रससहितविषयार्थनिवृत्तिपूर्वकं मान्द्यं व्यज्यते । अतः विषयव्यावृत्तकौतूहलपदे सत्यपि वेदाभ्यासजडपदस्य व्यंजकत्वे न कापि क्षतिः । चारुरुचिरपदानि तिरस्कृत्य मनोहरपददानेन 'तद्दर्शनान्तरं तदति-रिक्तपदार्थेषु मनो न लगति सर्वत्र तदेव दृश्यते' इत्यसूचि, तेन च तदीया-द्वितीयसौन्दर्यशालित्वं व्यक्तीकृतम् । इदम्पदप्रदानेन च परमवैलक्षण्यं गम्यते । अपि च रूपपदन्यासेन रूप्यते लक्ष्यते अन्यान् विहाय दृश्यते सदैव चिन्त्यते ध्यायते इति रूपम् इति विलक्षणार्थावबोधः । वेदाभ्यासजडविषयव्यावृत्तकौ-तूहलेतिपदद्वन्द्वग्रहणेनाप्यसंतुष्टः कविर्मन्दमतीनां कृते स्पष्टतया विवक्षितार्थ-बोधनार्थं तमेव विधातारं अहृदयत्वेन विशेषयति पुराणपदेन । पुराणस्तावत्पुरा-भवः । पुराभवानां नवनवोन्मेषशालिशक्त्यभावश्च । सहृदयैः साहित्याकूपार-पारीणैः कविभिः एक एव पदार्थः विलक्षणत्वेन प्रतिक्षणं नवो नवो दृश्यते रसास्वादेनात्मा चानुगृह्यते । एतादृक्शक्तिमत्त्वं न कदाप्याश्रयितुमर्हति पुराणे । एतद्विशेषार्थविज्ञापनाय पुराणपदनिवेशः । पुनरप्यसन्तुष्टः कविशेखरः मुनिपदं ददत् तस्य मौनव्रतधारित्वं क्रियाहीनत्वं ईदृशरूपविशेषनिर्माणकलाकौशलवञ्चि-तत्वं निर्माणे चामार्मिकत्वमबोधयत्–इति दिक् ।

पद्येऽस्मिन् ससन्देहालङ्कारः । तल्लक्षणं यथा रसगङ्गाधरे 'सादृश्यमूला भास-मानविरोधका समबला नानाकोट्यवगाहिनी धी रमणीया ससन्देहालङ्कृतिः' । अत्र हि अप्पदीक्षितैरित्थं प्रतिपादितम्—यदिह चन्द्रादीनां संशयधर्मिणामेवानेकत्वम् तथा च वर्णनीयकामिनीविधातृत्वं त्वेकमेव, ततः क्वास्ति नैककोट्यवगाहिनी धीरतः सन्देहलक्षणस्येहाव्याप्तिः । तन्न युक्तम् । अत्र अस्याः कामिन्याः सर्गविधौ यः प्रजापतिरभूत् स किं चन्द्रः, उत मदनः, उत वसन्तो नु इति संशयः प्रजापतिधर्मिकः सन् चन्द्रत्वादिनानाकोटिक एवास्ति इति कुत्राव्याप्तिः । न चात्र चन्द्रादिधर्मिकः संशयो वक्तुमुचितम् । एवं कृते विधातुरत्र प्रथमोद्देश्यत्व-हानिः । अतः अत्र ससन्देहालङ्कारोऽस्त्येव । पुनश्च यत्र यत्र विलक्षणरूपत्वं तत्र तत्र तपस्विसंभवत्वं न, यथा शकुन्तलादावित्यादि व्याप्तेः नेयमुर्वशी तपस्विसम्भवा विलक्षणरूपत्वादित्यनुमानसद्भावात् इहानुमानालङ्कारः, तल्लक्षणं तु काव्यप्रकाशे—"अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः ।" अपि च यतः श्लोकस्यास्योत्तरार्ध-मनुमितौ हेतुः, यथा—कथं नेयं तपस्विसंभवा, तपस्विनः ईदृश-रूपनिर्माण-सामर्थ्याभावात्, तेनात्र काव्यलिङ्गमलङ्कारः; यदुक्तं 'काव्यलिङ्गं हेतोर्वाक्य-पदार्थता' । काव्यलिङ्गानुमानयोः परस्परमङ्गाङ्गिभावत्वेनेह सङ्करालङ्कारः । तल्लक्षणं यथा दर्पणे 'यद्येत एवालङ्काराः परस्परविमिश्रिताः । तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा । अङ्गाङ्गित्वेऽलंकृतीनां तद्वदेकाश्रयस्थितौ । सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः' । इत्थं काव्यलिङ्गमलङ्कारोऽनुमानमुत्थापयतीत्यङ्गाङ्गिभावसम-ङ्करः । पुनश्च ससन्देहस्य च काव्यलिङ्गानुमानयोश्च परस्परं निरपेक्षतया चमत्कारकारित्वात् संसृष्टिः 'मिथोऽनपेक्ष्यैतेषां स्थितिः संसृष्टिरुच्यते' इति दर्पणोक्तेः । तथा चात्रातिशयोक्तिरलङ्कारः । यदुक्तं चित्रमीमांसायाम्—'विषय-स्यानुपादानाद्विषय्युपनिबध्यते । यत्र सातिशयोक्तिः स्यात्कविप्रौढोक्तिजीविता ॥' तत्र चेह रूपविशेषस्यापि पुराणप्रजापतिसृष्टिसम्बन्धेऽप्यसंबन्धख्यापनादसम्ब-न्धातिशयोक्तिः । न च शृङ्गारैकरसः इत्यत्र साक्षात् शृङ्गारपदेन शृङ्गारावबोधेन ईदृगुपयोगस्य कविभिरनादृतत्वाद्दोषोऽयमिति वाच्यम् । यतः शृङ्गारपदेनात्र नायक-गतभाव्यरसस्यायोगः, अत्र तत्पदेन रसराजनामावबोध एव केवलम् इति नायं दोषः । अत्रैतत्त्ववधेयं यत्कार्यकारणभावे यस्य कस्यापि कार्यस्य सद्भावे कारणत्रैविध्यं भवति समवाय्यसमवायिनिमित्तभेदात् । 'यत्समवेतं कार्यमुत्पद्यते तत्समवायि-कारणम्—यथा तन्तवः पटस्य'; 'कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायिकारणम्—यथा तन्तुरूपं पटरूपस्य; तदुभयभिन्नं कारणं निमित्त-कारणम्—यथा तुरीवेमादिकं तन्तुवायश्च पटस्य' इति तर्कसङ्ग्रहे । अयन्तु साधारण एव नियमः यदसमवायिसमवायिकारणयोर्गुणाः कार्ये समायान्ति न तावन्निमित्त-कारणस्य । यथा यदि स्युस्तन्तवः श्यामाः पीता वा तदा पटोऽपि श्यामः पीतो वा भवितुमर्हति, किन्तु यदि स्यात्पटकारः गौरः श्यामो वा न कदापि भविष्यति पटो गौरः श्यामो वा । अतो निमित्तकारणगुणा न समायान्ति कार्ये । इति साधारणो नियमः । इह उर्वशीरूपं कार्यम् । अलौकिकसौन्दर्यादिकं समवाय्यसमवायि-

**उर्वशी**—हला चित्तलेहे ! सहीअणो कहिं क्खु भवे ? [ हला चित्रलेखे ! सखीजनः कुत्र खलु भवेत् ? ]

**चित्रलेखा**—सहि ! अभअप्पदाई महाराओ जाणादि । [ सखि ! अभयप्रदायी महाराजो जानाति । ]

**राजा**—( उर्वशीं विलोक्य ) महति विषादे वर्तते सखीजनः ।

पश्यतु भवती—

यदृच्छया त्वं सकृदप्यवन्ध्ययोः
पथि स्थिता सुन्दरि ! यस्य नेत्रयोः ।
त्वया विना सोऽपि समुत्सुको भवे-
त्सखीजनस्ते किमुतार्द्रसौहृदः ॥ ११ ॥

---

कारणे । स्रष्टा च निमित्तकारणम् । तदा सामान्यतस्तु स्रष्टरि वेदाभ्यासजडेऽपि कार्यरूपायामुर्वश्यां तद्गुणायोगः । किंत्वत्र कविगतप्रजापतिविषयकसन्देहेन चन्द्रत्वादौ च प्रजापतित्वारोपेणेदमेव द्योत्यते यदस्याः असाधारणी एव सृष्टिर्यस्यां निमित्तकारणगुणा अपि कार्ये प्रभवन्ति, अनेन तस्या रूपस्यालौकिकवैलक्षण्यं व्यक्तम् । एतादृगुपयोगस्तु कविभिः सम्मानितः, यथोक्तं कविकुलमुकुटालङ्कारहीरैः श्रीहर्षकवीन्द्रैः स्वीये निसर्गोज्ज्वले नैषधीयचरिते द्वितीयसर्गे दमयन्तीकुचवर्णने द्वात्रिंशत्तमे पद्ये "कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः । स तदुच्चकुचौ भवन् प्रभाझरचक्रभ्रममातनोति यत् ।" इति—अत्र च नायिकां प्रेक्ष्य नायकगतः पूर्वरागो ध्वन्यते । वृत्तं च शार्दूलविक्रीडितम् । लक्षणं तूक्तं प्रागेव ॥ १० ॥

**उर्वशी**—हला चित्रलेखे—अस्माकं सखीजनः सहचर्यः कुत्र कस्मिन् स्थाने भवेत् । खलु इति प्रश्ने ।

**चित्रलेखा**—अभयप्रदायी अभयं ददातीति भयाद्रक्षको महाराजो विक्रमो जानाति काऽस्तेऽस्माकं सखीसमूह इति ।

**राजा**—उर्वशीं विलोक्य तामुद्दिश्याहेत्यर्थः । सखीजनः महति विषादे शोके वर्तते । पश्यतु भवती जानात्वेतत्—पश्यतेः कर्मत्वेन आगामी श्लोकोऽन्वेतव्यः । **यदृच्छयेति**—हे सुन्दरि हृदयद्राविरूपे मनोहारिणि ! यदृच्छया अनायासेनाकस्मिकतया सकृदपि एकमेववारं यस्यावन्ध्ययोः सफलयोर्नेत्रयोः पथि त्वं स्थिता समायाता सोऽपि जनः त्वया विना तव विरहे समुत्सुकः उत्कण्ठितः व्याकुलो वा भवेत् किमुत किं तदा आर्द्रसौहृदः रात्रिन्दिवं सहवासेन रसार्द्रं सौहृदं मैत्री यस्यैतादृशः सखीजनः । यः कोऽपि पुरुषस्त्वामेकवारमेवाकस्मात् पश्यति सोऽपि त्वद्विरहेण सशोकः स्यात् तदा किमाश्चर्यं यदत्यन्तप्रियतमस्ते सखीवृन्दः शोकाविष्टचेताः भवेत् । अज्ञातत्वत्सहवासस्यापि

**उर्वशी**—(आत्मगतम्) अमिअं क्खु दे वअणम् [अमृतं खलु ते वचनम्] अहवा चन्दादो अमिअं त्ति किं अच्चरिअम् [अथवा चन्द्रादमृतमिति किमाश्चर्यम्] (प्रकाशम्) अदो एव्व मे पेक्खिदुं तुवरदि हिअअम् । [अतएव मे प्रेक्षितुं त्वरते हृदयम् ।]

**राजा**—(हस्तेन दर्शयन्)

एताः सुतनु मुखं ते सख्यः पश्यन्ति हेमकूटगताः ।
उत्सुकनयना लोकाश्चन्द्रमिवोपप्लवान्मुक्तम् ॥ १२ ॥

---

शोकातिरेको भवति यदा कियान् खेदस्तदा तासां सखीनां चेतसि भविष्यति, अत्यन्तमेव भवेदित्यर्थः । "यदृच्छा स्वैरिता" इत्यमरः । 'सकृत्सहैकवारयो'रित्यजयः । "स्यादवन्ध्यः फलेग्रहिः" सफल इत्यर्थः । सौहृदम्—शोभनं सहानुभूतिसमेतं हृदयं यस्य सः सुहृद् मित्रं तस्य भावः सौहृदम् । अत्र हि प्रथमद्वितीयपादान्ताक्षरयोः साम्यादन्त्यानुप्रासालङ्कारः 'व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु । आवर्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत्' इति दर्पणकारः । तथा च नेत्राणामवन्ध्यत्वसिद्धौ उर्वश्या नयनपथगामित्वस्य हेतुत्वम् तस्माच्च काव्यलिङ्गमलङ्कारः । तयोश्च निरपेक्षतया चमत्काराधायित्वात् संसृष्टिः । अपि च यतः यः कोऽपि पान्थस्तव दर्शनान्तरं विरहव्याकुलो भवेत्तदा का कथा आर्द्रसौहृदस्य सखीसमूहस्येति अर्थापत्तिरलङ्कारः, अर्थात्तस्यापि परमव्याकुलत्वम् । यदुक्तम् 'दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते' इति द्वितीया संसृष्टिः, पुनश्च संसृष्टिद्वयस्य संसृष्टिः । अनेनोर्वश्याः रमणीयत्वं प्रियप्रकृतित्वं हृद्यत्वं च व्यज्यते । प्रसादो गुणः । वंशस्थं वृत्तम् । लक्षणं तु 'जतौ तु वंशस्थमुदीरितं जरौ ॥ ११ ॥

**उर्वशी**—आत्मगतम् मनस्येवं चिन्तयामास । ते वचनमुक्तिः अमृतमेव । अत्र रूपकालङ्कृतिस्तया च तस्य वचनमाधुर्यं ध्वन्यते । अथवेति विकल्पः । अथवा चन्द्रादमृतं निःसरेदिति किं नाम आश्चर्यम् यतः चन्द्रस्तु सुधानिधिरेव । अनेन वचनं मुखान्निःसृतम्, वचनं चामृतं, तेन तस्य मुखं चन्द्र इति सूच्यते तेनाह्लादकत्वं च व्यज्यते । अत्र रूपकातिशयोक्तिरलङ्कारः । अपि चायं महाराजः चन्द्रवंशसमुद्भवः अस्तीति द्योतितम् । सत्कुलीनत्वादमृतं वाहयितुं समर्थ इति गम्यते । प्रकाशम् 'सर्वश्राव्यं प्रकाशं स्या'दिति दर्पणे । पूर्वोक्तं मनस्येव कल्पयित्वेदानीं राजानं प्रत्युत्तरयत्युर्वशी प्रकाशम्–अतएव यतः सखीजनः समुत्सुको भवेदित्यनेनैव हेतुना मे हृदयम् प्रेक्षितुं तम् द्रष्टुं त्वरते उत्सुकम् वर्तते ।

**राजा**—(हस्तेन अङ्गुल्या सखीजनं दर्शयन्) प्राहेति शेषः ।

**एता इति**—हे सुतनु सुन्दरि ! एताः पुरोदृश्यमानाः त्वां द्रष्टुं उत्कण्ठितानि नयनानि यासां ताः हेमकूटगता हेमशिखरमधिरूढास्ते सख्यः ते मुखं

( उर्वशी साभिलाषं पश्यति । )

**चित्रलेखा**—हला ! किं पेक्खसि ? [ हला ! किं प्रेक्षसे ? ]

**उर्वशी**—णं समदुक्खगदो पीवीअदि लोअणेहिं । [ ननु समदुःखगतः पीयते लोचनाभ्याम् । ]

**चित्रलेखा**—( सस्मितम् ) अई को ? [ अयि कः ? ]

**उर्वशी**—णं पणईअणो । [ ननु प्रणयिजनः । ]

**रम्भा**—( सहर्षमवलोक्य ) हला ! चित्तलेहादुदीअं पिअसहीं उव्वसीं गेण्हिअ विसाहासहिदो विअ भअवं सोमो समुवट्ठिदो राएसी दीसदी । [ हला ! चित्रलेखाद्वितीयां प्रियसखीमुर्वशीं गृहीत्वा विशाखासहित इव भगवान् सोमः समुपस्थितो राजर्षिर्दृश्यते । ]

---

पश्यन्ति ( यथा ) उत्सुकनयना लोकाः उपप्लवात् उपरागान्मुक्तं चन्द्रमिव । यथा चन्द्रग्रहणे राहुणा ग्रस्तमुक्तं चन्द्रं लोकाः औत्सुक्येन प्रेक्षन्ते तथैवैतास्ते सख्यस्ते मुखं हेमकूटे स्थिताः सत्यः पश्यन्तीति भावः । अत्रोपमालङ्कारः । तेन चन्द्रस्य मुखस्य च साधर्म्यं प्रदर्शितम् । उपप्लवपदप्रदानेन केशिनि राहुत्वारोपः सखीनाञ्च प्रेमातिशयवत्त्वं व्यक्तम् । इयमार्याजातिः "यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या" इति श्रुतबोधे लक्षणम् ॥ १२ ॥

( उर्वशी साभिलाषं सखीजनसमागमसमुत्सुका पश्यति । )

**चित्रलेखा**-हला इति स्निग्धसम्बोधनम्, किं प्रेक्षसे किं पश्यसि !

**उर्वशी**—ननु समदुःखगताः समानतया मया सार्धं दुःखभागिनः जनाः प्रेक्ष्यन्ते । पीयते लोचनाभ्याम्-प्रेक्ष्यते इत्यर्थः ।

**चित्रलेखा**—( सस्मितम् ईषद् हास्येन ) अयि कः ? कः समदुःखभागी ?

**उर्वशी**—ननु प्रणयिजनः प्रेमी जनः सखीजनः ।

**रम्भा**—( सहर्षं आनन्देनावलोक्य ) सखि ! चित्रलेखया द्वितीयां चित्रलेखाद्वितीयां चित्रलेखासहितां प्रियसखीमुर्वशीं गृहीत्वा समुपस्थितः राजर्षिर्विक्रमस्तथा भाति यथा विशाखानक्षत्रविशेषेण समलङ्कृतो भगवान् सोमः चन्द्र एव भवेत् । यथा विशाखानक्षत्रस्थश्चन्द्रः शोभते तथैव सचित्रलेखयोर्वश्या सह स राजा शोभते इति सम्भाव्यते । अत्रोर्वशीसमेते राज्ञि विशाखासहितस्य सोमस्य सम्भावनायाः चमत्कारकारित्वादुत्प्रेक्षालङ्कारः 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' । इति लक्षणात् ।

**मेनका**—( निर्वर्ण्य ) हला ! दुवे वि णो एत्थ पिआ उवगदा । इअं पच्चाणीदा पिअसही, अअं च अपरिक्खदसरीरो राएसी दीसदी । [ हला ! द्वे अपि नोऽत्र प्रिये उपनते, इयं प्रत्यानीता प्रियसखी, अयञ्चापरिक्षतशरीरो राजर्षिर्दृश्यते । ]

**सहजन्या**—सहि ! जुत्तं भणासि दुज्जओ दाणओ त्ति । [ सखि ! युक्तं भणसि दुर्जयो दानवः इति । ]

**राजा**—सूत, इदं तच्छैलशिखरम् । अवतारय रथम् ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । ( इति तथा करोति । )

( उर्वशी रथावतारक्षोभं नाटयन्ती सत्रासं राजानमवलम्बते । )

**राजा**—( स्वगतम् ) हन्त ! सफलो मे विषयावतारः—

यदिदं रथसंक्षोभादङ्गेनाङ्गं ममायतेक्षणया ।
स्पृष्टं सरोमकण्टकमङ्कुरितं मनसिजेनेव ॥ १३ ॥

---

**मेनका**—निर्वर्ण्य उर्वशीसहितं समुपस्थितं राजानं दृष्ट्वा । हला ! द्वे अपि नः अत्र प्रिये उपनते, इदं कार्यद्वयमेव नः अस्माकं प्रियमेवाभूत् । के ते कार्ये इत्याह—इयं प्रियसखी प्रत्यानीता यथापूर्वं अक्षता प्राप्ता, तथा च अयं राजर्षिरपि अपरिक्षतशरीरः सुरक्षितः अच्छिन्नगात्र एव प्रतिनिवृत्तः इत्युभयमेव नः प्रियं समुत्पन्नम् । अनेनाप्सरसां कृतज्ञत्वं गम्यते यदेनाः तासां रक्षितुरपि देहचिन्तां कुर्वन्तीति ।

**सहजन्या**—सखि ! युक्तं समीचीनं भणसि कथयसि यत् दुर्जयो दुःखेन जेतुं शक्यः दानव इति ।

**राजा**—सूत हे सारथे ! इदं पुरतः तच्छैलशिखरम् हेमकूटशिखरम्, अतः अवतारय रथम् ।

**सूतः**—यदाज्ञापयति आयुष्मान् चिरञ्जीवी देवः तथैवोचितम् । इत्युक्त्वा रथमवतारयति । सूतस्तु विप्रः सन् उत्तमपात्रम्, अतः संस्कृतेन वक्ति राजानं च सदा आयुष्मन्निति सम्बोधयति ।

( उर्वशी रथस्यावतारेण अधोगमनेन अकस्माद्दोलायिता क्षोभं रथोपघातं नाटयन्ती सविलासं प्रदर्शयन्ती सत्रासं सभयम् राजानमवलम्बते हस्तेन धारयति । )

**राजा**—( स्वगतम्-आत्मन्येव ब्रूते ) हन्त इति हर्षे । मे मम विषयावतारः विषयित्वेनेह जगति स्थितिर्नरजन्म वा सफल एवाभूत् । कुतः—**यदिति**—यत् रथसंक्षोभात् निम्नोन्नतभूप्रदेशेषु रथोपघातात् आयतेक्षणया दीर्घनयनया अनया स्वीयेन अङ्गेन गात्रैः मम अङ्गम् मनसिजेन कामेन सरोमकण्टकमङ्कुरितमिव

**उर्वशी**—हला ! किं वि परदो ओसर । [ हला ! किमपि परतः अपसर । ]

**चित्रलेखा**—णाहं सक्केमि । [ नाहं शक्नोमि । ]

**रम्भा**—एत्थ पिअआरिणं संभावेम्ह राएसिं । [ अत्र प्रियकारिणं सम्भावयामो राजर्षिम् । ] ( सर्वा उपसर्पन्ति । )

**राजा**—सूत ! उपश्लेषय रथम्—

यावत्पुनरियं सुभ्रूरुत्सुकाभिः समुत्सुका ।
सखीभिर्याति सम्पर्कं लताभिः श्रीरिवार्तवी ॥ १४ ॥

---

आनन्दातिशयात् पुलकायमानमिव स्पृष्टं हस्तेन धृतम् । यदनेन तदीयाङ्गेन ममाङ्गस्पर्शः सञ्जात इति कृतार्थं मे जन्मेत्यर्थः । इदं प्रेम्णः द्वितीयं चिह्नमपरा चावस्थाऽत्र । अत्र पुलकानि कामेनेवाङ्कुरितानीति सम्भावनादुत्प्रेक्षालङ्कारः । अनेन मनसि मनसिजेन स्वसत्ता स्थापितेति व्यज्यते । अत्र नायकगतः पूर्वरागः । नायिकागतः पूर्वरागः 'उपकृतमिति' स्थले ( पृ. २० ) पूर्वमेवाभिव्यक्तः । अत्र नाटकीयकार्यस्य आरम्भाख्या प्रथमावस्था, यदुक्तं "भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये ।" अपिचात्र 'अस्याः सर्गविधौ' विति पद्ये (१–१०) विक्रमोर्वश्योः समागमजन्यानुरागबीजस्योपक्षेपात् प्रवृत्तस्य मुखसन्धेः प्राप्तिर्नामाङ्गम् "प्राप्तिः सुखागमः" इति लक्षणात् । मुखसन्धिलक्षणन्तु—"यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा । प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम् ॥" मनसिजेत्यत्राळुक्समासः । इयं चार्याजातिः ॥ १३ ॥

**उर्वशी**—सखि ! चित्रलेखे । किमपि किञ्चित्स्वल्पमपि परतः अपसर दूरमपसर । किञ्चित्स्थलमधिकं रथेऽस्मिन् मह्यं देहीत्यर्थः । नायकाङ्गस्पर्शमुग्धा नायिका लज्जां गमयति । अत्र व्रीडा नाम भावो व्यज्यते, यल्लक्षणं तु—"चेतोनिमीलनं व्रीडा" ॥

**चित्रलेखा**—नाहं शक्नोमि दूरमपसर्तुं नास्त्यवकाशः । उपहासोऽयम् ।

**रम्भा**—अत्र प्रियकारिणं अस्माकमुपकर्तारं राजर्षिम् विक्रमं सम्भावयामः पश्यामो धन्यवादांश्च तस्मै समर्पयामः ।

( सर्वाः अप्सरसो देवाङ्गना रम्भादयः उपसर्पन्ति राज्ञः समीपं गच्छन्ति । )

**राजा**—सूत सारथे ! उपश्लेषय स्थापय रथम् । **यावदिति** । यावत् इत्यस्य चूर्णकस्थवाक्येनान्वयः । यावत् यावता कालेन समुत्सुका सखीजनं द्रष्टुमुत्कण्ठिता सुभ्रूः सुन्दरीयं उत्सुकाभिरेनां प्रेक्षितुं काङ्क्षमाणाभिः सखीभिः सम्पर्कं सम्बन्धं याति तावद्रथं स्थापयेति उपरिष्टेन वाक्येनान्वेति । यथा आर्तवी ऋतुसम्बन्धिनी श्रीः शोभा लताभिः सह सम्पर्कमुपैति तथैव । यथा ऋतुसम्ब-

( सूतो रथं स्थापयति । )

**अप्सरसः**—दिट्ठिआ महाराओ विजएण वड्ढदि । [ दिष्ट्या महाराजो विजयेन वर्धते । ]

**राजा**—भवत्यश्च सखीसमागमेन ।

**उर्वशी**—(चित्रलेखादत्तहस्तावलम्बा रथादवतीर्य) हला ! अधिअं परिस्सजह । ण क्खु मे आसी आसासो जहा पुणो वि सहीअणं पेक्खिस्सं त्ति । [ हला ! अधिकं परिष्वजथ, न खलु मे आसीदाश्वासो यथा पुनरपि सखीजनं प्रेक्षिष्ये इति । ]

( सख्यः परिष्वजन्ते । )

**मेनका**—( साशंसम् ) सव्वहा कप्पसदं महाराओ पुहविं पालअन्तो होदु । [ सर्वथा कल्पशतं महाराजः पृथ्वीं पालयन् भवतु । ]

---

न्धिनी शोभा लताभिः सह सम्बन्धं प्राप्नोति तथैव यावत्कालं सखीजनं प्रेक्षितुं उत्कण्ठितेयं सुन्दरी चिन्ताग्रस्ताभिः सखीभिः सह मिलति तावत्कालं रथं स्थापयेत्यर्थः । सुष्ठु भ्रुवौ यस्याः सा सुभ्रूः सुन्दरभ्रुकुटीवती इत्यर्थः । ऋतोरियमार्तवी । अत्र च उपमालङ्कृतिः । ततश्च तस्याः सखीजनस्य लतासदृशाङ्गयष्टित्वं तासु च तस्याः श्रिय इव श्रेष्ठत्वम् व्यक्तम् । अनुष्टुब् वृत्तम् ॥ १४ ॥

**सूतः**—रथं स्थापयति-यथास्थानं नीत्वा स्थगयति ।

**अप्सरसः**—दिष्ट्या इति आनन्दे । हेमकूटस्थिताः रम्भादयोऽप्सरसः प्रियसखीमुर्वशीं प्रत्यानीतां प्रेक्ष्य सानन्दमाहुः—महानयमुत्सवो यन्महाराजो विक्रमः विजयेन वर्धते विजयी अभवदिति । इति ताः स्वीयां कृतज्ञतां प्रकाशयन्ति तञ्च धन्यं वदन्ति ।

**राजा**—भवत्यो यूयं तु युष्माकं सखीसमागमेन सख्या सह पुनः सम्मेलनेन वर्धन्ते इति शेषः । इयमभिनन्दनस्य परिपाटी ।

**उर्वशी**—( चित्रलेखया दत्तः हस्तस्यावलम्बो धारणं यस्यै सा चित्रलेखोद्धृता उर्वशी रथादवतीर्य सखीजनमाह ) हला सख्यः ! अधिकं परिष्वजथ गाढमालिङ्ग्यताम् यतः मे ईदृशः आश्वासो विश्वासः निश्चयो नासीद् यत् पुनरपि सखीजनं प्रेक्षिष्ये मिलिष्यामि । अहं जीविष्यामीति नासीद् मम विश्रम्भः ।

( ततः सख्यः परिष्वजन्ते श्लिष्यन्ति प्रियसखीमुर्वशीमित्यर्थः । )

**मेनका**—( मङ्गलं शंसन्तीति साशंसम् ) कल्पानां शतम् कल्पशतं तावत्कालपर्यन्तं महाराजो भवान् पृथिवीमेवमेव न्यायेन पालयन् भवतु पालयतु चिरशासको भवान् भवत्वित्याशीः, चिरराजलक्ष्मीको भूयादित्यर्थः । कल्पस्तावद्ब्रह्मणः एकं दिनम् यतः "मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः । दैवे युगसहस्रे द्वे

**सूतः**—आयुष्मन्! पूर्वस्यां दिशि महता रथवेगेन उपदर्शितः शब्दः।

अयञ्च गगनात्कोऽपि तप्तचामीकराङ्गदः।
अधिरोहति शैलाग्रं तडित्वानिव तोयदः॥ १५॥

**अप्सरसः**—( पश्यन्त्यः ) अम्मो, चित्तरहो। [ अहो चित्ररथः।]

( ततः प्रविशति चित्ररथः।)

**चित्ररथः**—( राजानं दृष्ट्वा सबहुमानम् ) दिष्ट्या महेन्द्रोपकारपर्याप्तेन विक्रममहिम्ना वर्धते भवान्।

---

ब्राह्मः कल्पौ तु तौ नृणाम्" इति वचनात्। एतादृशां कल्पानामपि शतं त्वं राज्यं कुर्या इति मङ्गलाशासनम्। शतपदेनात्र केवलं बहुत्वविवक्षा।

**सूत**—आयुष्मन्! राज्ञः सम्बोधनमेतत्। पूर्वस्यां दिशि महता आत्यन्तिकेन रथवेगेन उपदर्शितो जनितः शब्दः श्रूयते इति शेषः। पूर्वस्यां दिशीति पदप्रदानेन कोऽपि ऐन्द्रोऽयमिति सूच्यते, कुतः तस्यां दिशि इन्द्रस्याधिपत्यात् 'प्राच्यै दिशि इन्द्राय नमः' इति वचनाच्च। **अयमिति**—अयं पुरोदृश्यमानः कोऽप्यविज्ञातः, तप्तं चामीकरं सुवर्णं तन्निर्मितमङ्गदं बाहुभूषणं यस्येति पूतसुवर्णतुल्यदीप्तिमद्बाहुभूषणधारी जनः शैलाग्रं हेमकूटशिखरमधिरोहति आरोहतीत्यर्थः। यथा तडित्वान् विद्युद्युतस्तोयदो मेघः शैलाग्रमधिरोहति। कोऽप्ययं तेजस्वीति बोध्यते। 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः। तप्तपदग्रहणेन शुद्धत्वं विशेषदीप्तिमत्त्वं च सूच्यते। उपमानभूतस्य तोयदस्य तडित्वानिति विशेषणदानम् उपमेये विद्यमानेन तप्तचामीकराङ्गदत्वेन उपमानेऽपि साम्यार्थमङ्गीकृतम्। अत्र मेघादिपदव्यावृत्तिपूर्वकं तोयदपदबहुमानेनास्य चित्ररथस्य विक्रमाय धन्यवादप्रदायित्वं इन्द्रसन्तोषप्रसन्नतादिसमाचारदातृत्वं च व्यज्यते यथा तोयदे तोयदातृत्वम्। अत्रोपमालङ्कारः। अनुष्टुब् वृत्तम्॥ १५॥

**अप्सरसः**—( पश्यन्त्यः तं निरीक्षमाणाः कथयन्ति। ) अहो चित्ररथोऽयमागच्छति। चित्ररथस्तु गन्धर्वाणां राजा।

( ततः प्रविशति चित्ररथस्तत्रायातीत्यर्थः। )

**चित्ररथः**—( राजानं पुरूरवसं सबहुमानं पूज्यदृष्ट्या सादरं दृष्ट्वा कथयति ) दिष्ट्या इति उत्सवे, आह्लादसूचकं पदम्। महेन्द्रोपकारपर्याप्तेन महेन्द्रोपरि अपि उपकारं कर्तुं पर्याप्तेन समर्थेन विक्रममहिम्ना पराक्रमातिशयेन भवान् वर्धते विजयतु इत्यर्थः। अत्र लोडर्थे लट्। अत्र महेन्द्रपदम् साकूतम्-यः सर्वेषामिन्द्रः, सोऽपि महेन्द्रस्तमपि उपकर्तुं पर्याप्तोऽसीति महेन्द्रपदग्रहणेन राज्ञः पराक्रमातिशयं व्यञ्जयन् परिकरालङ्कारो राजते "विशेषणैर्यः साकूतैरुक्तिः परिकरः स्मृतः" इति काव्यप्रकाशकृतः।

**राजा**—अये गन्धर्वराजः ! (रथादवतीर्य) स्वागतं प्रियसुहृदे ।

(परस्परं हस्तौ स्पृशतः ।)

**चित्ररथः**—वयस्य ! केशिना हृतामुर्वशीं नारदादुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गन्धर्वसेना समादिष्टा । ततो वयमन्तरा चारणेभ्यस्त्वदीयं जयोदाहरणं श्रुत्वा त्वामिहस्थमुपागताः । स भवान् इमां पुरस्कृत्य सहास्माभिः मघवन्तं द्रष्टुमर्हति । महत्खलु तत्रभवतो मघोनः प्रियमनुष्ठितं भवता । पश्य—

पुरा नारायणेनेयमतिसृष्टा मरुत्वते ।
दैत्यहस्तादपाच्छिद्य सुहृदा सम्प्रति त्वया ॥ १६ ॥

---

**राजा**—अये गन्धर्वराजः इति चित्ररथं प्रत्यभिज्ञाय तं सत्कर्तुं रथादवतरति । रथादवतीर्याधः एत्य–अत्र मित्रत्वेऽपि चित्ररथानपेक्षतया गन्धर्वराजपदप्रदानेन तस्य च स्वस्य राजत्वेन साम्यं दर्शितम्, तेन तस्य रथावतरणं योग्यमेवाचारदृष्ट्या । गन्धर्वराजेत्यत्र "राजाहःसखिभ्यष्टच्" इति सूत्रेण टच्प्रत्ययः । प्रियसुहृदे भवते स्वागतम् । प्रेमातिशयेनाचारपद्धत्या वा परस्परं हस्तौ स्पृशतः हस्तग्रहणं कुर्वतः । स्वागतचिह्नमेतत्–आङ्ग्लेष्वपि शिष्टाचारोऽयम् ।

**चित्ररथः**—वयस्य प्रियसुहृद् ! केशिना तदाख्येन दानवेन हृतां बलादपहृतामुर्वशीं नारदाद् महामुनेरुपश्रुत्य ज्ञात्वा अस्या उर्वश्याः प्रत्याहरणार्थं तस्मात् दैत्यान् निर्जित्य पुनरानयनाय शतक्रतुनेन्द्रेण गन्धर्वाणां तदाख्यानां देवानां सेना समादिष्टा आज्ञप्ता । अधिगम्येममुदन्तं नारदाद्दैत्यनाशाय तस्या रक्षणाय च गन्धर्वसेना प्रेषिताऽऽसीदित्यर्थः । अन्तरा मध्ये एव मार्गे ततः प्रस्थानानन्तरं वयश्चारणेभ्यो वन्दिभ्यस्त्वदीयं तव जयोदाहरणं केशिजयवर्णनं श्रुत्वा समाकर्ण्य इहस्थं हेमकूटशिखरे वर्तमानं त्वामुपागताः समायाताः । मार्गान्तराले निशम्य भवद्भिः कृतं तस्याः रक्षणं, वयं त्वत्समीपं समायाता इत्यर्थः । स एतादृशो विजयी भवान् इमामुर्वशीं पुरस्कृत्य गृहीत्वा अस्माभिः गन्धर्वैः सह मघवन्तमिन्द्रं द्रष्टुं मिलितुमर्हसि । त्वया एनां गृहीत्वा महेन्द्रदर्शनं कर्तव्यमिति भावः । इन्द्रदर्शनकारणमाह— यतो भवता तत्रभवतः पूज्यस्य मघोनः देवराजस्य महत् प्रियं हितमनुष्ठितम् कृतम् । महेन्द्रमुपकृतवानसीति सारम् । पश्य विचारय तावत् । **पुरेति**–पुरा प्राचीनकाले नारायणेनेयमुर्वशी मरुत्वते इन्द्राय प्रदत्ता । आत्मनः उरुप्रदेशात्समुत्पाद्येमामुर्वशीं नारायणः इन्द्रायाप्सरसां मध्ये गणयितुं तां प्रादात् । सम्प्रति अस्मिन्समये सुहृदा परमोपकारिणा त्वया दैत्यानां हस्ताद् बन्धनादपाच्छिद्य मोचयित्वा इन्द्राय इयं प्रदीयते । इति त्वया बहु उपकृतम् । पुरा नारायणेनातिसृष्टा चेदानीं त्वं समर्पयसीत्यर्थप्रदानेन पुरूरवसो नारायणतुल्यत्वं सूचितम् । सोऽपि नारायणः कीदृशः "नराणां नित्यानामयनमिति नारायणपदम्" इति । अनुष्टुब्वृत्तम् ॥१६॥

राजा—सखे ! मैवम्—

ननु वज्रिण एव वीर्यमेतद्, विजयन्ते द्विषतो यदस्य पक्ष्याः ।
वसुधाधरकन्दराविसर्पी, प्रतिशब्दो हि हरेर्हिनस्ति नागान् ॥ १७ ॥

चित्ररथः—युक्तमेतत् । अनुत्सेकः खलु विक्रमालङ्कारः ।

---

**राजा**—सखे गन्धर्वराज ! मैवम् मा कथयेदम्, अनुचितेयं तव भणितिरित्यर्थः । **नन्विति**—ननु निश्चये । एतत्सर्वं वज्रिणः इन्द्रस्य एव वीर्यं पराक्रमः यदस्य सुरेन्द्रस्य पक्ष्याः पक्षपातिनः सहायकाः जना द्विषतः शत्रून् विजयन्ते जित्वा स्वायत्तीकुर्वन्ति । सुरेन्द्रसहायकाः शत्रून् जयन्तीत्यत्र तेषां न कोऽपि पराक्रमः किन्तु एतत्तस्यैव विलक्षणविक्रमशालित्वम् । अमुमेवार्थमुदाहरणेन विशेषयति—वसुधाधराणां गिरीणां कन्दरा दरी तासु विसर्पी प्रसारी हरेः सिंहस्य प्रतिशब्दो गर्जना प्रतिध्वनिः नागान् गजेन्द्रान् हिनस्ति हि नूनं नाशयति । गिरिदरीप्रसारिकेसरीगर्जितध्वनिर्मातङ्गान्नाशयतीति केसरिण एवेदं वीर्यम् न तु कन्दराया इति । अनेन वयं तु कन्दरासदृशा एव स्मः । यत्तु 'विजयो लभ्यते तत्तु हरेरेव पराक्रमः' इत्यत्रोदाहरणवाक्येऽपि सिंहस्थाने हरिपदप्रदानेन हरिपदगतश्लेषेण हरिणेन्द्रेणेव केशिनिषूदनं कृतं, का वास्माकं तत्र गतिरिति सूचितम् । अनेन पुरूरवसः औदार्यव्यञ्जको विनयो द्योतितः । वज्रमस्यास्तीति वज्री तस्येति वज्रिणः । द्विषतीति द्विषन् विरोधकारी तस्य द्वितीयाबहुवचनम् द्विषतः । पक्षे साहाय्ये भवाः पक्ष्याः । वसुधां धरन्तीति ते वसुधाधराः पर्वताः । "हरिश्चन्द्रार्कवाताश्वशुकभेकयमादिषु । कपौ सिंहे हरेऽजेंऽशौ शक्रे लोकान्तरे पुमा"निति मेदिनी । हरिपदस्य सिंहेन्द्रादिनानार्थबोधकत्वम् । "ननु" इति पदम् अनुनये वा । 'ननु प्रश्नेऽप्यनुनये' इति विश्वः । अत्र हि इन्द्रस्य वज्रिपदबोध्यत्वात् परिकरालङ्कारः, वज्रिणो वीर्यातिरेकसद्भावात् वज्रिणः इति पदस्य अत्र साभिप्रायत्वम् । पूर्वार्धगतवस्तुसिद्ध्यर्थमुत्तरार्धगतोदाहरणप्रदानेनात्र दृष्टान्तालङ्कारः । तल्लक्षणं यथा काव्यप्रकाशे "दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्" एतेषामिति साधारणधर्माणाम् । शत्रुनाशरूपार्थस्य प्रतिबिम्बनादत्र सत्यं दृष्टान्तालङ्कारः । हरिशब्दस्य एकवृन्तगतफलद्वयन्यायेनार्थद्वयाश्रयित्वादर्थश्लेषालङ्कृतिः, अर्थद्वयं तु सिंहः इन्द्रश्च । यदुक्तं "नानार्थसंश्रयः श्लेषः" इति कुवलयानन्दे । अत्रैतेषां परस्परमनपेक्षतया चमत्काराधायकत्वात्संसृष्टिश्च । अत्र शोभा नाम नायकगुणः । इदमौपच्छन्दसकं नाम छन्दः "वैतालीयं द्विस्वरा अयुक् पादे युगवसवोऽन्तेर्ल्गाः, गौपच्छन्दसकम्" इति पिङ्गले । यत्र प्रथमतृतीयपादयोश्चतुर्दशलकाराः द्वितीयचतुर्थयोश्च षोडशलकारास्तेषु च पादान्ते रेफो लघुर्गुरुश्च भवन्ति तद् वैतालीयं नाम छन्दः । तस्मिन्नन्ते च गकारैकाधिक्येनौपच्छन्दसकं नाम वृत्तं भवति । एतत्तु अर्धसमवृत्तेष्वन्यतमं विद्यते ॥ १७ ॥

**चित्ररथः**—यद्भवता भणितं तत्तु शोभनमेव । अनुत्सेकः निरभिमानित्वं विक्रमस्य पराक्रमस्य अलङ्कारो भूषणं खलु । पराक्रमेण सह यदि भवेद्विनयस्तदा

**राजा**—सखे ! नायमवसरो मम शतक्रतुं द्रष्टुम् । अतस्त्वमेवात्रभवतीं प्रभोरन्तिकं प्रापय ।

**चित्ररथः**—यथा भवान्मन्यते । इत इतो भवत्यः ।

( सर्वाः प्रस्थिताः । )

**उर्वशी**—(जनान्तिकम् ) हला चित्तलेहे, उवआरिणं राएसिं ण सक्कणोमि आमन्तेदुम् । ता तुमं एव्व मे मुहं होहि । [ हला चित्रलेखे ! उपकारिणं राजर्षिं न शक्नोमि आमन्त्रयितुम्, तत् त्वमेव मे मुखं भव । ]

**चित्रलेखा**—( राजानमुपेत्य ) महाराअ ! उव्वसी विण्णवेदि—महाराएण अब्भणुण्णादा इच्छामि पिअसहिं विअ महाराअस्स कित्तिं सुरलोअं णेदुम् । [ महाराज ! उर्वशी विज्ञापयति—महाराजेनाभ्यनुज्ञातेच्छामि प्रियसखीमिव महाराजस्य कीर्तिं सुरलोकं नेतुम् । ]

---

तु नितरां शोभते । भारविरपि अमुमेवार्थं विज्ञापयति "प्रशमाभरणं पराक्रमः" इति । अथवा विक्रमस्य महाराजस्य तदाख्यस्य नायकस्य निरभिमानित्वं एव अलङ्कारः ।

**राजा**—सखे ! नायमवसरः शतक्रतुं द्रष्टुम्, नैष समयः इन्द्रदर्शनस्य । अतस्त्वमेव गत्वा एनामत्रभवतीं माननीयामुर्वशीं प्रभोरिन्द्रस्यान्तिकं समीपं प्रापय नय ।

**चित्ररथः**—यथा भवान्मन्यते विचारयति तदेवोचितम् इति शेषः । अस्मिन् विषये भवन्तः प्रमाणम् इत्यर्थः । इयमुक्तिर्विक्रमं प्रति । इत इतो भवत्यः, आगम्यताम् इत्यर्थः । उक्तिरियमप्सरसः प्रति ।

( सर्वाः प्रस्थिताः चित्ररथसनाथाः सर्वा अप्सरसः स्वावासं प्रति प्रयाता इत्यर्थः । )

**उर्वशी**—( जनान्तिकम्–एकान्ते अन्यान् वञ्चयित्वा परस्परालापः ) यदुक्तं सागरे—"वञ्चयित्वैकमन्योन्यं द्वाभ्यां यत्खलु पठ्यते । जनान्तिकं तु तत्कार्यम् त्रिपताकेन पाणिना" अन्यानपवार्येत्यर्थः । हला सखि चित्रलेखे ! उपकारिणं प्रियकारिणं राजर्षिं राजसु श्रेष्ठं पुरूरवसं आमन्त्रयितुं कृतज्ञतां प्रकाशयितुं गमनायाज्ञां च ग्रहीतुं न शक्नोमि असमर्थाऽस्मि । अतस्त्वमेव मम मुखं भूत्वा तमित्थं निवेदय । अत्र विहृतं नाम नायिकालङ्कारः, यदुक्तं दशरूपके "प्राप्तकालं न यद्ब्रूयाद्व्रीडया विहृतं हि तत्" ।

**चित्रलेखा**—(मद वचः पार गत्वा ) महाराजेति सम्बोधनम् । उर्वशी विज्ञापयति निवेदयति–'महाराज ! श्रीमता अभ्यनुज्ञाता तत्र गमनाय अनुमोदिता चेत् भवतः कीर्तिं मम प्रियसखीमिव सुरलोकं देवेन्द्रपुरीं नेतुं कामय

**राजा**—गम्यतां पुनर्दर्शनाय ।

( सर्वाः सगन्धर्वाः आकाशोत्पतनं रूपयन्ति । )

**उर्वशी**—( उत्पतनभङ्गं रूपयित्वा ) अम्मो, लदाविडवे एसा एआवली वैअअन्तिआ मे लग्गा [ अहो, लताविटपे एषा एकावली वैजयन्तिका मे लग्ना ] ( सव्याजमुपसृत्य राजानं पश्यन्ती ) सहि चित्तलेहे, मोआवेहि दाव णम् । [ सखि चित्रलेखे! मोचय तावदेनाम् । ]

**चित्रलेखा**—( विलोक्य विहस्य च ) आम्, दिढं क्खु लग्गा सा असक्का मोआविदुम् । [ आम्, दृढं खलु लग्ना सा, अशक्या मोचयितुम् । ]

**उर्वशी**—अलं पडिहासेण । मोआवेहि दाव णम् । [ अलं परिहासेन । मोचय तावदेनाम् । ]

---

इति ।' अहं जिगमिषामीत्यतः भवदाज्ञां लिप्से । अत्र चित्रलेखामुखेन कृतविज्ञापनाया उर्वश्याश्चेतसि समद्भूतबीजार्थप्ररोहस्योपवर्णनादुत्तरत्र च "गम्यतां पुनर्दर्शनायेति" नायकोक्त्या ध्वनितस्य राज्ञो मनसि परिस्फुरतः पूर्वरागस्य प्ररोहादुद्भेदाख्यं मुखसन्ध्यङ्गमुपन्यस्तम्; "बीजार्थस्य प्ररोहः स्यादुद्भेदः" इति दर्पणलक्षणात् ॥

**राजा**—गम्यतां पुनर्दर्शनाय । पुनः त्वरितमेव समागमाय गम्यताम् पुनरावयोर्मेलनं अचिरेण भवेदिति समुद्दिश्य गम्यताम् ।

( सर्वाः गन्धर्वसहिता अप्सरसः आकाशोत्पतनं आकाशे उड्डयनं रूपयन्ति नाटयन्तीत्यर्थः । )

**उर्वशी**—( उत्पतनभङ्गं रथक्षोभं रूपयित्वा प्रदर्श्य ) अम्मो इति विस्मये । लतायाः विटपे शाखायां एकावली एकपङ्क्तिमयी वैजयन्तिका मौक्तिकहारः लग्ना रुद्धा । ( सव्याजम् एतन्मिषेण समीपमेत्य राजानं वीक्षन्ती प्राह ) सखि चित्रलेखे! मोचय तावदेनं मौक्तिकसरम् । पूर्वरागस्यात्र विकासः ।

**चित्रलेखा**—( विलोक्येषत्स्मितं च कृत्वा ) आम् इति स्वीकारे, ज्ञातमित्यर्थः । सा एकावली तु दृढं गाढं लग्ना तत्र विटपे निरुद्धा, अतश्च मोचयितुमशक्या । 'आम् ज्ञानविनिश्चये' इति वोपालितः । अयञ्चोपहासः । चित्रलेखा उर्वश्याः हृदयस्थमभीप्सितं परिज्ञाय ~~वक्रवचनेनाह~~—अत्र च भाववक्रता ।

**उर्वशी**—परिहासेन हास्येनालम् पर्याप्तम्—हास्यं मा कुरु । मोचय तावदेनां हारयष्टिमिति भावः । अलंयोगे तृतीया ।

**चित्रलेखा**—आम्, दुम्मोआ विअ मे पडिहादी । तहा वि मोआविस्सं दाव । [ आम्, दुर्मोच्येव प्रतिभाति, तथापि मोचयिष्यामि तावत् । ]

**उर्वशी**—( स्मितं कृत्वा ) पिअसहि, सुमरेहि क्खु एदं अत्तणो वअणम् । [ प्रियसखि ! स्मर खल्वेतदात्मनो वचनम् । ]

**राजा**—( स्वगतम् )

प्रियमाचरितं लते त्वया मे
गमनेऽस्याः क्षणविघ्नमाचरन्त्या ।
यदियं पुनरप्यपाङ्गनेत्रा
परिवृत्तार्धमुखी मया हि दृष्टा ॥ १८ ॥

( चित्रलेखा मोचयति । उर्वशी राजानमालोकयन्ती सनिःश्वासं सखीजनमुत्पतन्तं पश्यति । )

---

**चित्रलेखा**—आम् । इयमेकावली दुर्मोच्या सौकर्येण मोचयितुमशक्या इव प्रतिभाति दृश्यते । तथापि मोचयिष्यामि प्रयत्नं करोमीत्यर्थः ।

**उर्वशी**—( स्मितमीषद्धास्यम् कृत्वा ) प्रियसखि ! त्वं स्मर ते वचनम् । यदधुना त्वया प्रोक्तम् तदवधारय । अत्रोर्वशी राजनि दुर्मोच्यात्मनो रतिं सखीं गमयति ।

**राजा**—( स्वगतम्-आत्मन्येवाह ) **प्रियमिति**—हे लते ! अस्या उर्वश्याः गमने क्षणविघ्नं क्षणपर्यन्तं तदीयैकावलीनिरोधजनितं विघ्नमन्तरायं आचरन्त्या कुर्वत्या त्वया मे मदीयं प्रियमाचरितं कान्तं कृतम् । यतः परिवृत्तं ईषद् पृष्ठतः कृतम् अर्धमुखं यस्याः, अतएव अपाङ्गनेत्रा अपाङ्गयुक्ते कटाक्षयुक्ते नेत्रे यस्याः सा उर्वशी मया पुनरपि दृष्टा अवलोकिता । यदि त्वं न न्यरोत्स्यस्तदीयैकावलीं, सा नात्र स्थिताभविष्यदतस्त्वया उपकृतोऽस्मीति भावः । यतः सा मया पुनरप्येकवारं सभ्रूकटाक्षं दृष्टेति त्वया मे प्रियमनुष्ठितम् । अथवा अपाङ्गनेत्रा अपाङ्गो मदनस्तदुत्पादके नेत्रे यस्याः सा इत्यपाङ्गनेत्रा । "अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च" इति विश्वः । परिवृत्तमीषत्तिर्यक्कृतम् । अत्र परिवृत्तार्धमुखत्वं अपाङ्गनेत्रत्वे कारणं तेन च हेतुहेतुमद्भावात्काव्यलिङ्गमलङ्कारः । अपरञ्च नायके नायिकागतौत्सुक्यादिभावोद्भावाद् भावोदयध्वनिः । यदुक्तं दर्पणे "भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यका इति ।" अपि चात्र समुत्सुकस्य भाविविरहखिन्नस्य नायकस्य कौतुकप्रायमिदं वचः परिभावनाख्यं सन्ध्यङ्गं समुत्थापयति यदुक्तं—"कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना ।" औपच्छन्दसकं वृत्तम् ॥ १८ ॥

( चित्रलेखा लताविटपलग्नामेकावलीं मोचयति—उर्वशी च राजानमालोक-

**सूतः**—आयुष्मन् !

अदः सुरेन्द्रस्य कृतापराधान्
प्रक्षिप्य दैत्यांल्लवणाम्बुराशौ ।
वायव्यमस्त्रं शरधिं पुनस्ते
महोरगः श्वभ्रमिव प्रविष्टम् ॥ १९ ॥

**राजा**—तेन ह्युपश्लेषय रथम्, यावदारोहामि ।

( सूतस्तथा करोति । राजा नाट्येन रथमारोहति । )

**उर्वशी**—( सस्पृहं राजानमवलोकयन्ती ) अवि णाम पुणो वि उअआरिणं एदं पेक्खिस्सम् । [ अपि नाम पुनरपि उपकारिणमेतं प्रेक्षिष्ये । ]

---

यन्ती सनिश्वासं शोकजनितदीर्घाश्वासमुद्गिरन्ती सखीजनमुत्पतन्तमाकाशमार्गे उपर्युपरि गच्छन्तं पश्यति । )

**सूतः**—आयुष्मन् इति राज्ञः सम्बोधनम् । **अद इतिः**—अदः सुरेन्द्रस्य देवेन्द्रस्य कृतापराधान् अपकारिणः दैत्यान् असुरान् लवणाम्बुराशौ क्षारसमुद्रे प्रक्षिप्य निहत्य क्षिप्त्वा ते वायव्यं वायुदेवताकमस्त्रं पुनः शरधिं निषङ्गं तूणीरं वा प्रविष्टम् । स्वकार्यं संसाध्य स्वस्थाने प्रविष्टमित्यर्थः । यथा महोरगः कृष्णसर्पः श्वभ्रं बिलं रन्ध्रं वा प्रविशति । यथा कृष्णसर्पः किञ्चित्कालं बहिरागत्य पुनः स्वबिलं प्रविशति तथैव तवेदं वायुदेवताधिष्ठितमस्त्रं दैत्यान्नाशयित्वा पुनः स्वतूणीरं प्रविष्टम् इति भावः । वायुर्देवतास्येति वायव्यम् "वाय्वृतुपित्रुषसो यत्" इति सूत्रेणात्र यत् प्रत्ययः । शराः धीयन्तेऽस्मिन्निति शरधिः । उरसा गच्छतीति उरगः सर्पः । श्वभ्रं रन्ध्रम् "रन्ध्रं श्वभ्रं वपा शुषि"रित्यमरः । अनेन राज्ञः देवतोपकारित्वं, पराक्रमशालित्वं, वायुप्रभृतिबहुदेवताप्रसादनगृहीतशस्त्रास्त्रविद्याप्रौढत्वं, अनागसि अस्त्रोपयोगाकारित्वं, विवेकित्वं, दण्डनीयदण्डदातृत्वं, न्यायकर्तृकत्वं, गुणगणवत्त्वं च वस्तु व्यज्यते । अत्र चोपमालङ्कारः, अस्त्रस्योरगस्य च रन्ध्रप्रवेशसाधर्म्यात् । अत्रेन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजाति वृत्तम् ॥ १९ ॥

**राजा**—सारथे ! तेन हि कार्यसमाप्तत्वेन रथमुपश्लेषय समीपमानीय स्थापय, यावदहमधिरूढो भविष्यामि । अत्र वर्तमानसमीपे भविष्यत्यर्थे लट् ।

( सूतस्तथा करोति रथं समीपे समानयति राजा च नाट्येन तमधिरोहति । )

**उर्वशी**—( सस्पृहं साभिलाषं राजानमवलोकयन्ती ) अपि सम्भावनायाम् । सम्भाव्यते किमिदं यत् पुनरपि उपकारिणं हितकारिणमेनं प्रेक्षिष्ये । पुनरप्यावयोः संयोगो भविष्यति किमिति । अनेन तस्या विरहखिन्नत्वं सूच्यते, पूर्वरागश्च व्यज्यते ।

( इति सगन्धर्वा सह सखीभिर्निष्क्रान्ता । )

**राजा**—( उर्वशीवर्त्मोन्मुखः ) अहो ! दुर्लभाभिलाषी मदनः ।

एषा मनो मे प्रसभं शरीरात्
पितुः पदं मध्यममुत्पतन्ती ।
सुराङ्गना कर्षति खण्डिताग्रात्
सूत्रं मृणालादिव राजहंसी ॥ २० ॥

( निष्क्रान्तौ )

॥ इति प्रथमोऽङ्कः ॥

---

( इति गन्धर्वैः सह ससखी उर्वशी निष्क्रान्ता गता । )

**राजा**—( उर्वश्याः वर्त्मनि मार्गे उन्मुखः दत्तदृष्टिः ) अहो इति खेदे । दुर्लभमलभ्यमभिलपते काङ्क्षते इति दुर्लभाभिलाषी मदनः अस्तीति शेषः । दुर्लभं वस्तु कामयते मदन इत्यर्थः । इदं नायकहृदयस्थं खेदं सूचयति । नायकगतो रत्याख्यो भावश्च व्यज्यते । अत्र विरहस्य पूर्वरागावस्थायां प्रथमावसरः । **एषा इति**—पितुः स्वजनकस्य भगवतो विष्णोः मध्यमं पदं धाम आकाशं उत्पतन्ती उद्गच्छन्ती इयमेषा सुराङ्गना अप्सरा उर्वशी शरीराद् देहात् मे मनः प्रसभं बलात् कर्षति आत्मानं प्रति हठान्नयति । यथा राजहंसी खण्डिताग्रात् भिन्नमध्यभागान्मृणालात्कमलपत्रदण्डात् सूत्रं बिसतन्तुं आकर्षति तथैव गगनमुद्गच्छन्तीयं देवाङ्गना मम देहात् मनः प्रसह्य समाकर्षति । इयमीदृशी मनोहरा यन्मे मनः बलादात्मानं प्रति नयति इति भावः । इदं प्रशंसा नामालङ्करणम् यन्नायकः स्वमनःसागरशशिलेखां मनोनीतां प्रेयसीं प्रशंसति । अपि चात्र गुणकीर्तनं नाम लक्षणम्—यल्लक्षणमुक्तं "गुणानां कीर्तनं यत्तु तदेव गुणकीर्तनमिति" दर्पणे । विष्णोः मध्यमं पदम् आकाशः "वियद्विष्णुपद"मित्यमरः । अनेन तस्या गगनमुत्पतन्त्या राजहंसीसदृशगतिशालित्वं व्यक्तम् । अत्र चोपमालङ्कृतिः । कविवरस्य कालिदासस्य समय एवायं यत् नायिकया स्वायत्तीकृतस्य नायकहृदयस्याकर्षणमुपवर्ण्यते तन्नाटकान्तरेऽपि लभ्यते, यथा शाकुन्तले "गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः । चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ।" ( १–३६ ) । अत्र गुणाख्यानात् विलोभनं नाम मुखसन्ध्यङ्गम् ॥ उपजाति वृत्तम् ॥ २० ॥

इति उक्त्वा निष्क्रान्तौ राजा सूतश्च अपगतौ रङ्गभूमितः इति प्रथमोऽङ्कः समाप्तः । इति समाप्तौ । प्रथमः आदिमः अङ्कः प्रथमाङ्कः । अङ्कस्तु परिच्छेदो नाटकांशो वा । यल्लक्षणन्तु नाट्यशास्त्रे "अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् । नानाविधानयुक्तो यस्मात्तस्माद् भवेदङ्कः" । अन्ते सकलपात्रनिर्गमः, प्राप्तस्य वनोद्देशस्य परित्यागः अङ्कलक्षणप्राप्तत्वात् सुतरां विन्यस्तम् । तथा च 'राज्य-

देशादिविप्लवनगराद्यवरोधनमेभिर्वर्जितः" । "अन्तनिष्क्रान्तनिखिलपात्रोऽङ्कः" इति दर्पणकारः । तथैव कविकल्पद्रुमे 'अङ्काङ्गत्कपदे लक्ष्मण्यंशासत्कविभाजने' ॥ 'अङ्को विभूषणे स्थाने समीपे नाटकांशके' इति च मेदिनी ॥

इति श्रीमतां प्रमोदमोदमानमानसरसाविभक्तभगवल्लीलाललितकीर्तनस्वानन्दसक्तभक्तगोष्ठीगरिष्ठाणां रामानुजार्यकैङ्कर्यधुरीणानां प्रखरकिरणकरप्रतिभतेजःप्रकरप्रभाकराणां कविपण्डितेन्द्रमण्डलालङ्कारहीराणामजस्रप्रणामारुणितवन्दारुराजन्यवृन्दवन्दितपदद्वन्द्वारविन्दानां रसिकतारसनिधीनामिन्दूरनगराभरणानामुत्तरतोताद्रिविज्ञानविभवपीठाधीशानामाचार्यवर्याणां न्यायवेदवेदान्तमीमांसाद्यखिलनिगमागममन्थानशेमुषीकाणां स्वामिनां श्रीकृष्णाचार्याणाम् तनूभवेन सहृदयताकूपारजलेवाहेन एम्. ए. काव्यपुराणतीर्थसाहित्यविशारदाद्यनेकोपाधिसमुल्लसितेन सुरेन्द्रनाथशास्त्रिणा विरचितायां विक्रमोर्वशीसंजीविकायाम् कल्पलतासमाख्यायाम् व्याख्यायाम् प्रथमाङ्कोल्लासः ॥



# द्वितीयोऽङ्कः।

( ततः प्रविशति विदूषकः )

**विदूषकः**—अविद अविद भोः, णिमन्तणिओ परमण्णेण विअ राअरहस्सेण फुट्टमाणो ण सक्कणोमि जनाइण्णे अइण्णणेण अत्तणो जीहं धारिदुम्। ता जाव सो राआ धम्मासणगदो इदो आअच्छइ दाव इमस्सिं विरलजणसंपादे देवच्छन्दअप्पासादे आरुहिअ चिट्टिस्सम्। ( परिक्रम्योपविश्य पाणिभ्यां मुखं पिधाय स्थितः। )

[ अविद अविद भोः। निमन्त्रणिकः परमान्नेनेव राजरहस्येन स्फुटन्न शक्नोमि जनाकीर्णेऽकीर्तनेन आत्मनो जिह्वां धारयितुम्। तद्यावत्स राजा धर्मासनगतः इत आयाति तावदेतस्मिन् विरलजनसम्पाते देवच्छन्दकप्रासादे आरुह्य स्थास्ये। ]

---

## द्वितीयाङ्कोन्मेषः।

**ततः इति**—इदानीं विदूषकद्वाराग्रिमकथासूचनार्थं विदूषकप्रवेशं तावदाह। ततः पूर्वाङ्के ससूतस्य राज्ञः निष्क्रमानन्तरं विदूषको रङ्गभुवम् प्रविशति। विदूषकलक्षणं तु—"वयस्यकश्चाटुपटुः स एव च विदूषकः। अन्तःपुरचरो राज्ञां नर्मामात्यः प्रकीर्तितः" इति सागरः। दर्पणे च—"कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः। हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः॥ स्वकर्म मधुरभोजनम्।" इयं पताका, प्रासङ्गिकवृत्तस्याख्यासमाप्तिव्याप्तत्वात्॥

**विदूषकः—अविदेति**—अविद अविद भोः ज्ञायतां ज्ञायतामिति। यथा निमन्त्रणिकः भोजनार्थं निमन्त्रणदाता यजमानः परमान्नेन क्षीरेण स्फुटन् द्रवीभूतचेतो भवन् तद्भक्षणाय आत्मनः स्वीयां जिह्वां रसनां धारयितुं निरोद्धुं न शक्नोति तथैवाहमपि राजरहस्येन राज्ञः विक्रमस्योर्वशीविषयकरतिरूपरहस्येन स्फुटन् विघटितात्मा भवन् जनाकीर्णे जनसमूहे अकीर्तनेन तदप्रकाशयितुं जिह्वां धारयितुं निग्रहीतुं न शक्नोमि न पारयामि। अर्थात् राजरहस्यम् मम जिह्वातः स्वयमेव स्फुटदिव बहिर्निष्क्रान्तुमिच्छति। अत्रोपमालङ्कारः। जिह्वां धारयितुमित्यत्र श्लेषश्च। एकत्र भोक्तुमन्यत्र प्रकाशयितुमित्यर्थद्वयशालित्वात्। अनयोपमया विदूषकस्यात्यन्तभोजनप्रियत्वं रसनालोलुपत्वं च सूच्यते, हृदयगाम्भीर्याभाववत्त्वं च व्यज्यते। तद्यावत् अतएव यावता समयेन स राजा विक्रमः धर्मासनगतः न्यायासनतः राजकर्म समाप्य इत अस्मिन्नेवोद्देशे समायाति तावता समयेन विरलजनसम्पाते कतिपयैः पुरुषैर्व्याप्ते देवच्छन्दकप्रासादे तदाख्यराजप्रासादम् आरुह्य तत्र स्थास्ये राजागमनप्रतीक्षां करोमीत्यर्थः। [ परिक्रम्य किञ्चिदितस्ततः परिभ्रम्य पाणिभ्यां हस्ताभ्याम् मुखं पिधायाच्छाद्य स्थितः उपविष्टः। ]

( ततः प्रविशति चेटी । )

**चेटी**—आणत्तम्हि देवीए कासिराअदुहिदाए जधा—हञ्जे णिउणिए ! जदो पहुदि भअवदो सुज्जस्स उअत्थाणं कदुअ पडिणिउत्तो महाराओ तदो पहुदि सुण्णाहिअओ विअ लक्खीअदि । ता तुमं वि दाव अज्जमाणवआदो जाणाहि से उक्कंठाकारणं त्ति । ता कहं स वम्हवंधू अदिसंधादव्वो । अहवा तणग्गलग्गं विअ अवस्साअसलिलं ण तस्सिं राअरहस्सं चिरं चिट्ठदि त्ति तक्केमि । ता जाव णं अण्णेसामि । ( परिक्रम्यावलोक्य च ) अम्मो ! आलेक्खवाणरो विअ किं पि मंतअंतो णिहुदो अज्जमाणअवो चिट्ठदि । ता जाव णं उवसप्पामि । ( उपसृत्य ) अज्ज ! वंदामि । [ आज्ञप्तास्मि देव्या काशिराजदुहित्रा—यथा हञ्जे निपुणिके ! यतः प्रभृति भगवतः सूर्यस्योपस्थानं कृत्वा प्रतिनिवृत्तो महाराजस्ततः प्रभृति शून्यहृदय इव लक्ष्यते । त्त्वमपि तावदार्यमाणवकाज्जानीहि अस्योत्कण्ठाकारणमिति । तत्कथं स ब्रह्मबन्धुरतिसन्धातव्यः । अथवा तृणाग्रलग्नमिवावश्यायसलिलं न तस्मिन् राजरहस्यं चिरं

---

( ततः तत्पश्चात् चेटी काचन दासी प्रविशति । )

**चेटी—आज्ञप्तेति**—देव्या राज्ञ्या काशिराजदुहित्रा काशिराजस्य कन्या पुरूरवसो महिषी तया आज्ञप्ताऽस्मि । यथा वक्ष्यमाणेन विधिना । "हञ्जे निपुणिके । निपुणिकेति चेट्यभिधानम् । यतःप्रभृति यस्मात् समयात् भगवतः सूर्यस्य उपस्थानं कृत्वा सेवां भक्तिं पूजां वा विधाय प्रतिनिवृत्तः प्रत्यागतो महाराजः ततःप्रभृति तस्मादेव समयात् शून्यहृदयः अव्यवस्थितचित्तः अनवहितमनोवृत्तिरेव लक्ष्यते दृश्यते । यतः भगवतः सूर्यस्य सेवां विधाय प्रत्यावृत्तो राजा तत एव अस्थिरहृदयः स अभूत् । अतएव त्वमपि आर्यमाणवकाद् विदूषकाद् जानीहि उत्कण्ठायाः चिन्तायाः कारणम् । अस्यानवस्थितचित्तवृत्तित्वस्य चिन्तायाश्च किं कारणमिति विदूषकं त्वं पृच्छ ।" माणवकेति विदूषकनाम । उत्कण्ठास्वरूपम् यथा—"सर्वेन्द्रियसुखास्वादः यत्रास्ते हि मनः स्त्रियाम् । तत्प्राप्तीच्छां ससंकल्पामुत्कण्ठां कवयो विदुः ॥" एतावती महिष्या आज्ञा । तत् अत एव स ब्रह्मबन्धुः दुष्टविप्रः कथमतिसन्धातव्यः वञ्चनीयः । कथं अहं मधुरालपैः विश्वासं समुत्पाद्य सरलीभूय तस्मान्माणवकादिमां वार्तामवैमीत्यर्थः । इति चेटी मनसि विचारयति । 'ब्रह्मबन्धुरधिक्षेपे निर्देशे च द्विजन्मनाम्" इति ब्राह्मणापसदरूपेऽर्थे ब्रह्मबन्धुपदस्य वाच्यत्वम् । अथवा अलं विचारेणेति मतिविपर्यये । कुतः तस्मिन् विदूषके राजरहस्यं राज्ञः गोपनीयं

तिष्ठतीति तर्कयामि । तद्यावदेनमन्वेषयामि । अहो ! आलेख्यवानर इव किमपि मन्त्रयन्निभृत आर्यमाणवकः तिष्ठति । तद्यावदेनमुपसर्पामि । आर्य ! वन्दे ।

**विदूषकः**—सत्थि भोदीए । (आत्मगतम्) एदं दुट्ठचेडिअं पेक्खिअ तं राअरहस्सं हिअअं भिन्दिअ णिक्कमदि विअ । (किंचिन्मुखं संवृत्य । प्रकाशम् ।) भोदि णिउणिए ! संगीदवावारं उज्झिअ कहिं पत्थिदासि ? [ स्वस्ति भवत्यै । एतां दुष्टचेटिकां प्रेक्ष्य तत् राजरहस्यं हृदयं भित्वा निष्क्रामतीव । भवति निपुणिके ! संगीतव्यापारमुज्झित्वा कुत्र प्रस्थितासि ? ]

**चेटी**—देवीए वअणेण अज्जं एव्व पेक्खिदुम् । [ देव्या वचनेनार्यमेव प्रेक्षितुम् । ]

**विदूषकः**—किं तत्तभोदी आणवेदी ? [ किं तत्रभवती आज्ञापयति ? ]

---

वृत्तान्तं चिराय बहुकालपर्यन्तं न तिष्ठति अनुद्घाटितं न स्थास्यतीति तर्कयामि विचारये । यथा तृणस्याग्रभागे लग्नमवश्यायसलिलम् हिमकणः चिरं स्थातुं न शक्नोति तथैव । यथा तृणाग्रे लग्नो हिमकणस्तस्मिन् स्थातुं न प्रभवति तथैव अस्मिन् राजरहस्यं चिरकालपर्यन्तं गुप्तं स्थातुमशक्यम् । अस्य विदूषकस्य हृदयगाम्भीर्याभावात् । "अवश्यायो नीहारः" । तद्यावदनेन हेतुना एनं विदूषकमन्वेषयामि क्वास्तीति । अहो इति विस्मये, आलेख्यवानर इव चित्रस्थमर्कट इव किमप्यज्ञातं मन्त्रयन् स्थिरं विचारयन् निभृतो निश्चलः आर्यमाणवकस्तिष्ठति । तद्यावदेनमुपसर्पामि । इयमहमस्योपान्तिकं गच्छामीति भावः । (उपसृत्य–समीपं गत्वा) आर्य ! वन्दे अभिवादये इत्यर्थः । अत्रोपमाद्वयम् ।

**विदूषकः**—स्वस्ति भवत्यै–तव कुशलं भूयादिति । अत्र स्वस्तियोगे चतुर्थी । (आत्मगतम्–मनस्येव) एतां इमां दुष्टचेटिकां प्रेक्ष्य दृष्ट्वा तत् उर्वशीविषयकं राजरहस्यं हृदयं भित्वा निष्क्रामतीव बहिरागच्छतीव । तत्कथयितुमुत्कण्ठते मे चेतः इत्यर्थः । [ किञ्चिन्मुखं संवृत्य पिधाय ] भवति निपुणिके ! कालोऽयं ते संगीतस्य । अतः संगीतव्यापारं गायनकार्यं उज्झित्वा परित्यज्य विहाय वा कुत्र कस्मिन्नुद्देशे प्रस्थिताऽसि गच्छसीत्यर्थः ।

**चेटी**—देव्याः काशिराजदुहित्र्याः वचनेनाज्ञया आर्यमेव भवन्तमेव प्रेक्षितुं द्रष्टुं प्रस्थितासीति शेषः ।

**विदूषकः**—तत्रभवती माननीया देवी किमाज्ञापयति ?

**चेटी**—देवी भणादि जधा—अज्जस्स मम उअरि अदक्खिण्णम् । ण मं अणुइदवेअणं दुःक्खिदं अवलोअदि त्ति । [ देवी भणति यथा—आर्यस्य ममोपरि अदाक्षिण्यम् । न मामनुचितवेदनां दुःखितामवलोकयतीति । ]

**विदूषकः**—णिउणिए ! किं वा पिअवअस्सेण तत्तभोदीए पडिऊलं किं वि समाचरिदम् ? [ निपुणिके ! किं वा प्रियवयस्येन तत्रभवत्याः प्रतिकूलं किमपि समाचरितम् ? ]

**चेटी**—जं णिमित्तं भट्टा उक्कण्ठिदो, ताए इत्थिआए णामेण भट्टिणा देवी आलविदा । [ यन्निमित्तं भर्ता उत्कण्ठितः; तस्याः स्त्रियो नाम्ना भर्त्रा देवी आलपिता । ]

**विदूषकः**—( स्वगतम् ) कहं सअं एव्व तत्तभोदा वअस्सेण रहस्सभेदो किदो । किं दाणीं अहं बम्हणो जीहं रक्खिदुं समत्थोम्हि । ( प्रकाशम् ) किं तत्तभोदा उव्वसीणामधेएण आमन्तिदा ? [ कथं स्वयमेव तत्रभवता वयस्येन रहस्यभेदः कृतः । किमिदानीमहं ब्राह्मणः जिह्वां धारयितुं समर्थोऽस्मि । किं तत्रभवता उर्वशीनामधेयेन आमन्त्रिता ? ]

---

**चेटी**—देवी यथा इत्थं भणति आज्ञापयति—आर्यस्य भवतः मम उपरि अदाक्षिण्यम् अननुकूलता प्रातिकूल्यं वा । किं तददाक्षिण्यमित्याह—अनुचितवेदनां निरर्थकमेव पीडितां माम् दुःखितां नावलोकयति आर्यः इति । पीडिताया अपि मम चिन्तां न कुर्वन्ति भवन्तः इत्यर्थः । इत्येव प्रातिकूल्यम् ।

**विदूषकः**—निपुणिके ! तत्रभवत्याः देव्याः किमपि प्रतिकूलमनभिलषितं प्रियवयस्येन राज्ञा कृतम् किम् ? । येन राज्ञी दुःखिता भवेत् तादृशं कृतम् किम् राज्ञा इति भावः ।

**चेटी**—यन्निमित्तं यस्याः कृते भर्ता राजा उत्कण्ठितः तस्याः स्त्रियो नाम्ना भर्त्रा नृपेण देवी आलपिता समाहूता । राजा यामभिलषति, तस्या नाम्ना तेन देवी आकारिता, संबुद्धा वा । अयं तावद्राज्ञः गोत्रस्खलितं नामापराधः ।

**विदूषकः**—[ स्वगतमात्मन्येव ] तत्रभवता मान्येन प्रियवयस्येन राज्ञा स्वयमेव रहस्यभेदः कृतः गोपनीयं वृत्तान्तमुद्घाटितम्, प्रकाशितम् वा । यदा तेनैवेत्थं समाचरितम् तदा कथमहं ब्राह्मणः सन् जिह्वां धारयितुं वशीकर्तुं समर्थोऽस्मि प्रभवामि । इहापि 'जिह्वां धारयितु' मित्यत्र श्लेषः । विदूषकस्य विप्रत्वात् भोजनप्रियत्वात् च जिह्वानिग्रहः दुर्धर एव । यथा रसवतीमवलोक्य विदूषकस्य

**चेटी**—अज्ज ! का सा उव्वसी ? [ आर्य ! का सा उर्वशी ? ]

**विदूषकः**—अत्थि उव्वसि त्ति अच्छरा । ताए दंसणेण उम्मादिदो ण केवलं तं आआसेदि, मं वि बम्हणं असिदव्वविमुहं दिढं पीडेदि । [ अस्ति उर्वशीत्यप्सराः । तस्या दर्शनेनोन्मादितो न केवलं तामायासयति, मामपि ब्राह्मणं अशितव्यविमुखं दृढं पीडयति । ]

**चेटी**—( स्वगतम् ) उव्वादिदो मए भेओ भट्टिणो रहस्सदुग्गस्स । ता गदुअ देवीए एदं णिवेदेमि । [ उत्पादितो मया भेदो भर्तू रहस्यदुर्गस्य । तद्गत्वा देव्यै एतन्निवेदयामि । ] ( इति प्रस्थिता )

**विदूषकः**—णिउणिए ! विण्णावेहि मम वअणेण कासिराअदुहिदरम्—परिस्सन्तम्हि इमाए मिअतिण्हिआए वअस्सं णिअत्तावेदुम् । जई भोदीए मुहकमलं पेक्खिस्सदि तदो णिअत्तिस्सदि त्ति [ निपुणिके ! विज्ञापय मम वचनेन काशिराजदुहितरम्—परिश्रान्तोऽस्मि एतस्या मृगतृष्णिकाया वयस्यं निवर्तयितुम् । यदि भवत्या मुखकमलं प्रेक्षिष्यते ततो निवर्तयिष्यते इति । ]

---

रसनाया नियमनं कठिनमेवमेव राजरहस्यगोपनार्थमपि तस्य जिह्वायाः नियन्त्रणमसम्भवप्रायमेवेत्यर्थः ॥ [ प्रकाशम्–चेटीं प्रति ] किं तत्रभवता राज्ञा देवी उर्वशीनामधेयेन आमन्त्रिता आहूता । किमयं 'अयि उर्वशि'–इति देवीम् आकारितवान् ? इति पृच्छति ।

**चेटी**—आर्य्य ! का सा उर्वशी ? उर्वशीविषयकं सर्वं विचारयति ।

**विदूषकः**—उर्वशीति तन्नामधेया काचन अप्सरा देवाङ्गना अस्ति । तस्या अप्सरसः दर्शनेनोन्मादितः व्याकुलः अनवस्थितः न केवलं तां देवीमेवायासयति पीडयति किन्तु मामपि ब्राह्मणमशितव्यविमुखं भोजनपराङ्मुखं कुर्वन् दृढं परं पीडयति सन्त्रासयति ।

**चेटी**—( स्वगतम् ) मया भर्तुः राज्ञः रहस्यदुर्गस्य रहस्यमेव दुर्गम् तस्य भेदः उत्पादितः कृतः । ज्ञातं मया राजरहस्यम् तद्गत्वा एतत्सर्वम् देव्यै निवेदयामि विज्ञापयामि । रहस्यदुर्गमिति—रूपकालङ्कृतिः । अनेन रहस्यस्य दुर्बोध्यत्वम् व्यज्यते । दुर्गस्य दुःखेन गन्तुं योग्यमिति व्युत्पत्तेः । इति विचार्य प्रस्थिता ।

**विदूषकः**—निपुणिके ! मम वचनेन काशिराजदुहितरम् देवीं विज्ञापय सादरं निवेदय, एतस्या मृगतृष्णिकायाः असन्तोष्यतृष्णायाः राजानं निवर्तयितुम् परिश्रान्तोऽस्मि । एतस्मात् विचारात् तं प्रत्यावर्तयितुं यतमानोऽहम् श्रान्तोऽस्मि । नाऽयं विचारं परिवर्तयतीति भावः । किन्तु यदि भवत्याः मुखकमलं प्रेक्षिष्यते ततः

**चेटी**—जं अज्जो आणवेदि । ( इति निष्क्रान्ता ) [ यदार्यः आज्ञापयति । ]

( नेपथ्ये वैतालिकः )

जयतु जयतु देवः—

आ लोकान्तात्प्रतिहततमोवृत्तिरासां प्रजानां
तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः ।

---

अस्मात् विचारात् स्वयमेव निवर्तिष्यते । भवत्याः विलक्षणसौन्दर्यशालिनं मुखं दृष्ट्वा परित्यक्ष्यत्येनं विचारम् । उर्वश्याः वदनारविन्दम् त्वदास्यदास्येऽप्यधिकारितां न गमिष्यतीति भावः । इयं विदूषकस्य चाटुपटुता ।

**चेटी**—यदार्य आज्ञापयति । निवेदयिष्यामि यदार्येण वाचिकं दत्तम् । ( इति निष्क्रान्ता स्वकार्यं संसाध्य महिषीं प्रतिनिवृत्ता । )

एतावत्पर्यन्तं चेटीविदूषकयोरन्योन्यवचनं प्रपञ्चाख्यम् वीथ्यङ्गम् उत्थापयति । यदुक्तं साहित्यदर्पणकृता, "मिथो वाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः" असद्भूतमसत्यम् । अत्र उर्वशीनाम्ना देवी आलपितेति सर्वमसत्यमेव भाषितम् तया चेट्या ब्रह्मबन्धुं तं वञ्चयितुम् । अत एव अत्र प्रपञ्चाख्यम् वीथ्यङ्गम् पुष्णाति प्रबन्धस्यास्य रसात्मानम् ।

( नेपथ्ये वैतालिकः—अन्तर्वेशरचनागृहात् वैतालिकः समयसूचकः पठति । ) "वैतालिकाः बोधकराः" इत्यमरः । विविधेन तालेन शब्देन चरन्तीति व्युत्पत्तेः । 'चरतेष्ठक्' इति सूत्रेणात्र ठक्प्रत्ययः ।

'आलोकान्तात्' इत्यारभ्य "पासपडिवत्ति होमि" इतिपर्यन्तम् चूलिकाख्यमर्थोपक्षेपकम् । चूलिका हि नाम "अन्तर्जवनिकासंस्थैः सूचनाऽर्थस्य चूलिका" । अत्र चूलिकया अर्थोपक्षेपणं कृतम् । राजागमनरूपार्थसूचनमिति । अङ्कच्छेदार्थं अर्थोपक्षेपकाणि दातव्यानि कविवरैः । यदुक्तं हि "दिनावसाने कार्यं यद्दिने नैवोपपद्यते । अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत्" ॥ इति वचनात् । पञ्चसु अर्थोपक्षेपकेषु अन्यतमेयं चूलिका । इह राजप्रवेशसूचनार्थम् स वैतालिकः पठति—

जयतु जयतु देवः । राज्ञः सर्वत्र विजयो भूयादिति मङ्गलशासनम् ।

**आ लोकान्तादिति ।**

आसां प्रजानां भूलोकस्थचराचराणां प्रजानां जीवानां आ लोकान्तात् लोकान्तं समस्तजगदभिव्याप्य प्रतिहततमोवृत्तिरपास्तपापाचरणः तव च सवितुः सूर्यस्य च अधिकारः कर्तव्यम् तुल्योद्योगः समानश्रमः नः मतः अस्माकं मते वर्तते । यथा सूर्यस्य प्रादुर्भावात् मध्यलोकस्थजनाः तमोरहिताः भवन्ति तथैव तव समागमात् तेषां तामसीवृत्तिर्नश्यति । इह तमःशब्दे अर्थद्वैविध्यम् । सवितुः पक्षे तमसः अन्धकारार्थकत्वम् । राजपक्षे तु तामसी पापाचरणात्मिका हीनवृत्तिः । यतस्त्वापि सूर्यसदृशं तमोघ्नम् कर्म अतः तव च भानोश्च तुल्योद्योगत्वम् सिद्धम् ।

तिष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये
षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्नः ॥ १ ॥

एकः ज्योतिषां नक्षत्राणामधिपतिः सूर्यः व्योममध्ये आकाशमध्ये क्षणं क्षणपर्यन्तं तिष्ठति विरमति । मध्याह्ने सूर्यः गगनमध्ये क्षणं विरमति । तुल्योद्योगयोरुभयोर्युवयोर्मध्ये एकः सविता तु विरमति । एवमेव समायाते तु व्योममध्ये भगवति अंशुमालिनि त्वमपि अह्नः दिवसस्य षष्ठे काले मध्याह्ने विश्रान्तिं राजकीयकार्याद् विरामं लभसे प्राप्नोषीत्यर्थः । यथा सवितुस्तव च तमःप्रतीकारे तुल्योद्योगत्वम् तथैव मध्याह्ने विरामेऽपि साम्यम् भवितुमर्हतीति सारः । मध्याह्नसनयः समायातः; इदानीं सभाविसर्जनं विधाय विश्रान्तिः कार्या देवेनेति वैतालिकः समयसूचनपूर्वकं प्रार्थयति । यतः षष्ठे काले दिनस्य, राज्ञा विरतिः कार्येति नीतिविद्वद्वरैश्चाणक्यप्रभृतिभिः समुपदिष्टम् "षष्ठे स्वैरविहारो मन्त्रो वा सेव्यः" इति । व्यवहारदर्शनान्तरं स्नानभोजनादि कर्तव्यम् । यथाह भगवान् याज्ञवल्क्यः—"व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीतकामतः" । दिनञ्च द्वादशभागेषु विभक्तः ।

गगनमण्डलमतिक्रामति भगवति गभस्तिमालिनि, पूर्वदिक्तः प्रस्थानानन्तरमुदीचीं दिशं यावत्प्राप्नोति भगवानादित्यस्तावदधिरोहत्येव, अर्थात् प्राचीतः उदीचीपर्यन्तं उन्नतिं गच्छति, ततः उदीच्याः प्रस्थानादूर्ध्वं प्रतीचीपर्यन्तमवतरति । उदयाचलात् उन्नमन् सूर्यः उदीचींदिशं अवाप्य खस्वस्तिकं ( उन्नततमं देशं-Altitude ) अधिगच्छति, पश्चाच्चावतीर्णो भवति । उन्नतांशं दिनपतिः मध्याह्ने एव प्राप्नोति । तत्र च उन्नतांशाः दिगंशाश्च ईषत्कालपर्यन्तं द्वित्रिमुहूर्तं समाना एव भवन्ति, अतस्तावत्कालपर्यन्तं भगवान् विभावसुः स्तब्धगतिर्भवतीति खगोलनये निर्णीतम्-यदुक्तं सूर्यसिद्धान्ते—"अक्षक्रान्तिभुजज्याघातोऽक्षक्रान्तिकालकोज्यानां । घातेन संयुतः स्यादुन्नतभागज्यकेष्टनतकाले ॥ (२-१९) ।" इति पद्येनोन्नतांशाः विरता भवन्तीति गम्यते, तत्रैव च खस्वस्तिकं प्राप्य "क्रान्तिज्याऽक्षोर्नत्योर्भुजाशिञ्जिन्योर्वधेन किल रहिता । अक्षांशोन्नतिकोज्योर्ज्याभ्यां भक्ता भवेद्दिगंशज्या ॥" इति वचनात् दिगंशा अपि तावन्त एव भवन्तीति प्रमाणीक्रियते । अतः सविता क्षणं मध्याह्ने विरमतीति सिद्धम् । सिद्धान्तशिरोमणावप्ययमेव नयः । तदेव स्फुटम् यथा—



**विदूषकः**—( कर्णं दत्वा ) एसो उण पिअवअस्सो धम्मासणसमुत्थिदो इदो एव्व आअच्छदि । ता जाव पासपडिवत्ती होमि ।

---

प्रातः भगवान् भानुः पूर्वतः (क)स्थानात् उदेति क्रमेणोन्नमति च यावत् (ख)स्थाने खस्वस्तिकं ( Zenith ) प्राप्नोति । (क)स्थाने सूर्यः आरोहणस्य शून्यांशे भवति, (ख)स्थाने च नवत्यंशेषु भवति, (ख)स्थानञ्चारोहणस्य परमावधिः, ततो दिगंशक्रमेणावतरति प्रतीचीं; (ग)स्थानमवाप्यास्तमेति यत्राशीत्यधिकशतांशे भवति । सिद्धान्ते पूर्वोक्तपद्याभ्यां गणितशास्त्रमर्यादया सिद्धं यत् यदा भास्करः नवत्यंशे गच्छति, तत्र किञ्चित्कालं उन्नतांशाः दिगंशाश्च समाना एव भवन्ति, अतः स्तब्धगतिः सूर्यस्तत्र विरमतीति भावः । अयमेवार्थः वैज्ञानिकमतेनापि चलद्रव्यतन्त्रानुसारं ( Per Dynamic Laws ) सुसङ्गत एव—यथा किमपि चलद्रव्यं चलनक्रमे शक्त्या दिशमेकां अवाप्य यदा प्रतीपं निवर्तते तदावश्यमेव तस्य गतिरोधो भवत्येव—यथा घटीयन्त्रेऽपि लोलकः ( Pendulum ) शक्तिमनुरुध्य एकतो गत्वा यदा प्रतिनिवृत्तो भवति, तदा तस्य गतिः क्षणं रुद्धा भवत्येव, यद्यपि क्रमस्तु असंलक्ष्य एव । अपि च यदा कन्दुकः आकाशे क्षिप्तः सन् यावद्वेगानुसारमारोहति, ततश्च भुव आकर्षणशक्त्या यदाधः पतति, तदा प्रतीपगतिप्रारम्भपूर्वं क्षणं गतिरोधो नूनं भवति । एवमेव आरोहतो भगवतो दिनकृतोऽधः पतनात् पूर्वं गतिरोधो भवतीति निःसन्दिग्धम् । तत्त्वमिदमष्टादशस्वपि ज्योतिःसिद्धान्तग्रन्थेषु त्रिप्रश्नाधिकारे राद्धान्तितं यत् चलतो वस्तुनो गमनागमनयोर्मध्ये गतिस्तम्भो भवति । पुराणेष्वपि स्मर्यते यत्—

"प्रविश्य भानुः स्वां छायां शङ्कवद्यत्र तिष्ठति । स कालः कुतुपो नाम मन्दीभूतस्य संज्ञया ।" इति भविष्यत्पुराणे—( स्वच्छायाप्रवेशस्तु नवत्यंश एव । )—

इत्यनेन निर्विवाद एवायं यत् भगवान् सहस्रदीधितिः मध्याह्ने विरमति; अतो राज्ञापि सवित्रा तुल्योद्योगित्वात् विरामो मध्याह्ने विधेयः इति उभयोरौपम्यभावः सुसाम्प्रत एवेति प्राचां मते । नव्यनये तु इदातीन्तनानां विचारवीथीं नेदं तत्त्वमवतरेत्, तैस्तु इदमेव मन्येत यदिदं केवलं दृशोर्भ्रमविलसितमेव ( Optical Delusion ); तद्यथा सन्ततगतेः सप्तसप्तेः गतिपरिवर्तनवेलायां चलन्नपि सूर्यः मन्दत्वात् स्थित इव भायात् । परमानुभविना च कविना यथा लोकैः प्रतीयेत, तदेवानुसृत्य तिष्ठतेः प्रयोगो विहितः इत्याधुनिकानां प्रायोऽभिप्रायो भवेत् । तेन चास्मिन् मते यथा मध्याह्ने मन्दत्वात् तिष्ठन्निति प्रतीयमानः सविता वस्तुतश्चलन् भवति, एवमेव सततं कार्यव्यापृतेन राज्ञा विरतिसमयेऽपि निजव्यापारं विदधता प्रजानां हिताय जरीजागृतैवानिशं भवितव्यमिति ध्वनिरत्र चमत्करोतीति दिक् ॥

अनेन भगवतः सूर्येण सदृशत्वं राज्ञो व्यज्यते । श्लेषालङ्कारश्च । मन्दाक्रान्तावृत्तम् । लक्षणं तु—"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्" इति वृत्तरत्नाकरे ॥ १ ॥

**विदूषकः**—( कर्णं दत्वा-श्रुत्वा ) एषः प्रियवयस्यो राजा धर्मासनात् समुत्थितः इत एव आगच्छति, तद्यावत् अतः तस्य पार्श्वपरिवर्ती निकटवर्ती भवामि ।

[ एष पुनः प्रियवयस्यः धर्मासनसमुत्थितः इत एव आगच्छति । तद्यावत् पार्श्वपरिवर्त्ती भवामि । ]

( इति निष्क्रान्तः । )

प्रवेशकः ।

( ततः प्रविशति उत्कण्ठितो राजा विदूषकश्च । )

राजा—

आ दर्शनात्प्रविष्टा सा मे सुरलोकसुन्दरी हृदयम् ।
बाणेन मकरकेतोः कृतमार्गमवन्ध्यपातेन ॥ २ ॥

---

तस्य समीपे गच्छामीति भावः । पुनरित्यत्र अवधारणे निश्चये वा । यतः "स्युरेवं पुनर्वैवेत्यवधारणवाचकाः" इत्यमरः ।

( इति विचार्य निष्क्रान्तो विदूषकः । )

प्रवेशकः—

आविदूषकप्रवेशोऽयं सन्दर्भः प्रवेशकः इत्याख्यायते । द्वितीयाङ्के प्रवेशयतीति प्रवेशकः । पञ्चसु अर्थोपक्षेपकेषु अन्यतमोऽयम् । यदुक्तं दर्पणे "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रैः प्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥" अस्य प्रवेशकस्य प्रथमाङ्केऽन्त्ये च प्रतिषेधः । यथा दशरूपकटीकाकृतः "नासूचितस्य पात्रस्य प्रवेशः क्वचिदिष्यते । प्रवेशं सूचयेत्तस्मात् अमुख्याङ्के प्रवेशकात् ।" इति ।

( ततः प्रवेशकानन्तरं उर्वशीविषयमुत्कण्ठितो राजा विदूषकश्च प्रविशति । )

**राजा—आ दर्शनादिति**—आदर्शनात् उर्वशीदर्शनसमयादारभ्य सा उर्वशीनामधेया विलक्षणरूपशालिनी सुरलोकसुन्दरी देवाङ्गना मे हृदयम् प्रविष्टा । प्रवेशस्यावकाशापेक्षित्वात् हृदयस्य च निरवकाशत्वात् कथं तत्र प्रवेशः इतीवोत्प्रेक्ष्यते—मकरकेतोः मीनध्वजस्य कामस्य अवन्ध्येन अवन्ध्यः सफलः पातः यस्य सः तादृशा अमोघेन बाणेन कृतमार्गमिव हृदयं सा विवेश । तस्या प्रवेशार्थं कामेन मम हृदि द्वारमिव कृतम् । तस्याः दर्शनेन कामोद्दीपनमभूत् । तेन च कामदेवेन स्वीयः शरः प्रक्षिप्तः । तेन हृदये बिलं कृतम् । तस्मात् सा प्रविष्टा इत्यर्थः । यस्मात्समयात् सा अप्सरा दृष्टिगोचराऽभूत् ततः प्रभृत्येव कामदेवेन तस्या एव प्रवेशार्थं कृतबिले मम हृदये सा गाढं प्रविष्टा; सर्वत्र सैव दृश्यते इति भावः ।

आदर्शनादित्यत्र—"आङ् मर्यादाभिविध्योः" इति सूत्रेण अभिविध्यर्थे आङ्-निर्देशः । मकरः केतौ यस्येति मकरकेतुर्मदनः । कृतमार्गं कृतः प्रवेशमार्गो यस्मिन् तदिति । अत्र बाणेन कृतमार्गं हृदयमिति सम्भावनात् उत्प्रेक्षालङ्कारः । अनेन राज्ञः अव्यवस्थितचित्तत्वं, तस्यां गाढं प्रेम च स्फुटीकृतम् । उर्वश्यालम्बनस्य राज्ञः स्मृत्यादिस्मरदशाः यथास्थानं विद्वद्भिरूह्याः । इत्यतः बिन्दुप्रयत्नयोः समवायात्मकः प्रतिमुखसन्धिः प्रारप्स्यते । अत्र प्रथमाङ्कोपदर्शितस्य नायकनायिकासमागमजन्यानुरागरूपबीजस्य चेटीविदूषकद्वारा ज्ञेयत्वात् तस्य च चेटीत

**विदूषकः**—सपीडा क्खु जादा तत्तभोदी कासिराअदुहिदा। [ सपीडा खलु जाता तत्रभवती काशीराजदुहिता। ]

**राजा**—( निरीक्ष्य ) रक्ष्यते भवता रहस्यनिक्षेपः ?

**विदूषकः**—( आत्मगतम् ) वञ्चिदोम्हि दासीए णिउणिआए, अण्णधा कधं एव्वं पुच्छदि वअस्सो। [ वञ्चितोऽस्मि दास्या निपुणिकया, अन्यथा कथमेवं पृच्छति वयस्यः। ]

**राजा**—किं भवांस्तूष्णीमास्ते।

**विदूषकः**—भो ! एव्वं मए जीहा संजन्तिदा जेण भवदो वि णत्थि पडिवअणम्। [ भोः ! एवं मया जिह्वा संयन्त्रिता येन भवतोऽपि नास्ति प्रतिवचनम्। ]

---

देव्या स्वल्पमुन्नीयमानत्वादुद्भेदात्मकं प्रतिमुखम्। तल्लक्षणं वक्ष्यते। अत्र बिन्दुः—यल्लक्षणं यथाह मुनिः "प्रयोजनानां विच्छेदे यदविच्छेदकारणम्। यावत्समाप्तिबन्धस्य स बिन्दुरिति संज्ञितः।" इति ॥ अप्रतिरूपरूपायाः उर्वश्याः कान्ति वीक्ष्य विद्धचेतसो राज्ञः फलप्राप्तिं अपश्यतः तल्लाभाय प्रयत्नप्रक्रमो भावी। इयञ्चार्या जातिः ॥ २ ॥

**विदूषकः**—तत्रभवती काशीराजदुहिता तव महिषी सपीडा खलु जाता सचिन्ता जाता।

**राजा**—( निरीक्ष्य-विदूषकं प्रति सविस्मयं विलोक्य ) भवता रहस्यमेव निक्षेपः रहस्यरूपन्यासस्तु रक्ष्यते। अपि नाम त्वया मया त्वयि न्यासीकृतं मम रहस्यं रक्ष्यते ? रहस्यं तु भवता गोप्यते इति विश्वसिमि-इति भावः।

**विदूषकः**—( आत्मगतम् मनसि ) दास्या निपुणिकया वञ्चितोऽस्मि यतः तया मत्तः रहस्यम् ज्ञातम्। राज्ञा महिषी उर्वशीनाम्ना संबुद्धा इति मिथ्यैव उक्त्वा विश्वासमुत्पाद्य रहस्यगोपने तयाहं वञ्चितः। अन्यथा यदि एवं न स्यात्तदा कथं वयस्यः एवं 'रक्ष्यते रहस्यनिक्षेपः' इति प्रष्टुमर्हति। यदि तेनैव समुद्घाटितञ्चेद्रहस्यं न पृष्टं भवेदीदृशम्। उत्तरवाक्यम् 'वञ्चितोऽस्मी'त्यनुमितौ हेतुः।

**राजा**—किं भवान् तूष्णीं आस्ते। त्वं तु निर्वचनोऽसि न वदसीति भावः। मौनं धृतवानसि। "मौने तु तूष्णीं तूष्णीकाम्" इत्यमरः।

**विदूषकः**—भोः इति राज्ञः सम्बोधनम्। मया एवं जिह्वा संयन्त्रिता नियमिता येन भवतोऽपि प्रतिवचनमुत्तरं नास्ति न दीयते। अत्यन्तमेव रहस्योद्घाटने जिह्वा निरुद्धा इति सारः। उपहासोऽयम् निजापराधगोपनात्मकः।

**राजा**—युक्तम्। अथ केनेदानीं आत्मानं विनोदयामि?

**विदूषकः**—भो! महाणसं गच्छम्ह। [भो! महानसं गच्छावः।]

**राजा**—किं तत्र?

**विदूषकः**—तहिं पंचविहस्स अब्भवहारस्स उवणदसंभारस्स जोअणां पेक्खमाणेहिं सक्कं उक्कंठां विणोदेदुम्। [तत्र पञ्चविधस्याभ्यवहारस्य उपनतसम्भारस्य योजनां प्रेक्षमाणाभ्यां शक्यमुत्कण्ठां विनोदयितुम्।]

**राजा**—तत्रेप्सितसन्निधानाद्भवान् रंस्यते। मया खलु दुर्लभप्रार्थनः कथमात्मा विनोदयितव्यः?।

**विदूषकः**—णं भवं वि तत्तभोदीए उव्वसीए दंसणपहं गदो। [ननु भवानपि तत्रभवत्या उर्वश्याः दर्शनपथं गतः।]

**राजा**—ततः किम्।

---

**राजा**—युक्तम्। साधु वदसि, यतः सन्तुष्टो राजा यदनेन सम्यक् रहस्यरक्षा विहितेति। अथेदानीं केन उपायेन कथं वा आत्मानं विनोदयामि। किमपि अनुकूलं न लगति तेन कथं मनोरञ्जनं कर्तव्यम् इति पृच्छति विदूषकम् निजं नर्मसचिवं राजा।

**विदूषकः**—भोः! महानसं पाकशालां भोजनशालां रसवतीं वा प्रति गच्छावः क्षुधाशमनाय। अनेन विदूषकस्य भोजनमात्रे एव मनोविनोदः भवतीति सूचितम्।

**राजा**—पृच्छति नायकः तावत् तत्र महानसे किं मनोविनोदाय प्राप्स्यावः इति।

**विदूषकः**—तत्र पञ्चविधस्य लेह्यचोष्यपेयभक्ष्यभोज्यात्मकस्य नानारसमयस्य उपनतसंभारस्य पच्यमानस्य अभ्यवहारस्य अशनीयस्य योजनां विधिं प्रेक्षमाणाभ्याम् उत्कण्ठा विनोदयितुं शक्या। तत्र भोजनपाकस्य विधिं दृष्ट्वा मनोविनोदः स्यादिति संभवः।

**राजा**—भवान् तावत् भवतः ईप्सितस्याभिलषितस्य वस्तुनः तत्र सन्धानात् योगात् लाभाद्वा रंस्यते विनोदितो भविष्यति। किन्तु मम पुनः कथं मनोविनोदो भविष्यति यतः दुर्लभप्रार्थनः दुर्लभेष्टः अहमस्मि, यन्मया इष्यते तत्तु दुर्लभम् तेन कथं वा सम्भवो मदीयमनोरञ्जनस्य इति भावः।

**विदूषकः**—ननु इति प्रश्ने। भवान् अपि तत्रभवत्याः उर्वश्या दर्शनपथं गतः। किं भवान् तया दृष्टो न वा? विदूषकोऽयमिह तस्य दुर्लभप्रार्थनत्वं पराकर्तुमिदं पृच्छति।

**राजा**—ततः किम्—दृष्टोऽस्मि तया—किन्तु तेन किमभूत्?

विदूषकः—ण खु दे दुल्लह त्ति तक्केमि । [ न खलु ते दुर्लभेति तर्कयामि । ]

राजा—पक्षपातोऽपि तस्यां सद्रूपस्यालौकिक एव ।

विदूषकः—एवं मन्तअन्तेण मे वड्ढिदं कोदूहलम् । किं तत्तभोदी उव्वसी अद्दुदीआ रूएण; अहं विअ विरूवदाए ? [ एवं मन्त्रयता मे वर्धितं कौतूहलम् । किं तत्रभवती उर्वशी अद्वितीया रूपेण अहमिव विरूपतया ? ]

राजा—माणवक ! प्रत्यवयवमशक्यवर्णनां तामवेहि । तेन हि समासतः श्रूयताम् ।

विदूषकः—भो, अवहिदोम्हि । [ भोः, अवहितोऽस्मि । ]

राजा—

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।

---

विदूषकः—तेन सा खलु दुर्लभा इति नाहं तर्कयामि । तव एतादृशस्य निर्जितमारस्य सुकुमारस्य रूपमवेक्ष्य सापि मुग्धा भविष्यति च त्वां विना उत्कण्ठिता सती त्वां कामयिष्यतीत्यनेन न सा तव दुर्लभा ।

राजा—सद्रूपस्य सतः सुन्दरस्य समीचीनस्य वा रूपस्य तस्यामुर्वश्यां पक्षपातः अत्यन्ताग्रहपूर्वकं संस्थितिः अलौकिक एव विलक्षणः एव । रूपेण तस्याः पक्षः गृहीतः । सा तु मत्तः सौन्दर्ये परतरा इति भावः ।

विदूषकः—एवं पूर्वोक्तप्रकारेण उर्वशीविषयं मन्त्रयता कथयता त्वया मम कौतूहलम् उत्साहो वर्धितः । किं तत्रभवती उर्वशी रूपेण अद्वितीया अनुपमा अस्ति यथाऽहं विरूपतायामद्वितीयोऽस्मि । यादृशोऽहं कुरूपतायामनुपमोऽस्मि तादृशी एव सा किं सौन्दर्येणाद्वितीयास्ति ? अनया भङ्ग्या नायकमुखेन वर्णयितुमिच्छति कवीन्दुः कालिदासः । अत्र एकत्र सुरूपतायामद्वितीयत्वेन परत्र विरूपतायामद्वितीयत्वेन अद्वितीयत्वसाधर्म्यप्रदानेनोपमालङ्कृतिः । इयं विरुद्धधर्मावच्छिन्नसाम्योपमा ।

राजा—माणवक ! अवयवे अवयवे इति प्रत्यवयवम् । प्रत्यवयवं अशक्यं वर्णनं यस्याः सा इति तादृशीं तां अवेहि जानीहि । तस्याः प्रत्येकस्यावयवस्य वर्णनं न शक्यमस्तीति जानीहि । तेन हि अस्मात् कारणात् समासतः संक्षेपेण श्रूयताम् ।

विदूषकः—श्रोतुं अवहितोऽस्मि, सावधानोऽस्मि, स्थिरचित्तोऽसीत्यर्थः ।

राजा—हे सखे माणवक ! तस्या उर्वश्याः वपुः शरीरम् आभरणस्य कटककुण्डलादीनामलङ्काराणामपि आभरणम् भूषणमस्ति । अलङ्कारैः ईदृशमलङ्कार्यं प्राप्तमिति तेषामेव शोभा, तस्या विलक्षणरूपशालित्वात् । तथा च प्रसाधनविधेः

उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥ ३ ॥

**विदूषकः**—अदो दाव तुए दिव्वरसाहिलासिणा जादअव्वदं गहिदम् । ता दाव तुमं कहिं पत्थिदो ? । [ अतस्तावत्त्वया दिव्यरसाभिलाषिणा चातकव्रतं गृहीतम् । तत्तावत्त्वं कुत्र प्रस्थितः ? ]

**राजा**—विविक्तादृते नान्यदुत्सुकस्य शरणमस्ति, तद्भवान् प्रमदवनमार्गमादेशयतु ।

**विदूषकः**—( आत्मगतम् ) का गई ! [का गतिः !] ( प्रकाशम् )

---

चन्दनलेपाञ्जनाभ्यञ्जनेपथ्यप्रभृतेः प्रतिकर्मणः प्रसाधनविशेषः शोभाप्रदः । तस्याः वपुः प्रसाधनस्याप्यनुपमशोभाजनकमित्यर्थः । उपमानस्य उपमानकोटिस्थितानां चन्द्रादीनामपि तस्याः शरीरं प्रत्युपमानम् । प्रायशः उपमानं हि मनाधिकगुणं भवतीति कविभिरादृतम् । तस्याः शरीरं च उपमानस्याप्युपमानमार्मीदनेन चन्द्रादीनां उपमानानामपि उपमेयत्वम् । चन्द्रादीनि उपमेयानि उपमानं चास्याः वपुरिति तदीयाङ्गस्यालौकिककमनीयताऽस्तीति व्यक्तम् । अपूर्वसौन्दर्यमिति भावः । अत्रानौपम्यख्यापनात् नायिकायाः दीप्तिर्नामायत्नजो भावः—यदुक्तं दशरूपके—"दीप्तिः कान्तेस्तु विस्तरः ।"

प्रसाध्यते अङ्गमनेनेति प्रसाधनम्, "प्रतिकर्म प्रसाधनम्" इत्यमरः । उपमीयतेऽनेनेति उपमानम् ।

साधारणतयोपमानकोटिस्थितानामाभरणचन्द्रादीनामपि उपमेयत्वोत्पादनेन तद्वपुषः आधिक्यवर्णनाद् व्यतिरेकालङ्कारः । "उपमानाद्यदन्यस्य व्यतिरेकः स एव सः" इति । आर्याजातिः ॥ ३ ॥

**विदूषकः**—अतः तदीयाङ्गापूर्वसौष्ठवरूपहेतोः दिव्यरसाभिलाषिणा अपूर्वरसास्वादनं कामयता त्वया चातकव्रतं गृहीतम्—चातकस्य व्रतमिव व्रतं प्रतिज्ञा गृहीतम् । चातकस्तु स्वातिनक्षत्रे एव मेघैः वर्षितं प्रथमजलं पिबति; अन्यथा तृषार्त एवात्मानं धारयति । तथैव चातकसदृशस्त्वमपि तामेव लिप्सुः किमपि नान्यन्मार्गयन्नुत्सुक एवात्मानं धारयति । तदिदानीं त्वं कुत्र प्रस्थितोऽसि, क्व गच्छसीति भावः ।

**राजा**—विविक्तादृते निर्जनस्थानं विहाय उत्सुकस्य स्वाभिलषितं प्रति उत्कण्ठितस्य जनस्य कृते नान्यत् शरणं भवति । विरहितानां कृते निर्जनसेवनमेव वरं शान्तिप्रदं च भवतीति भावः । तत् अस्माद्धेतोः भवान् प्रमदवनमार्गमादेशयतु दर्शयतु ।

विविक्तादित्यत्र "अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" इति सूत्रेण ऋतेपदप्रयोगे पञ्चमी । अत्र नायिकया समागमस्याशया प्रमदवनगमनस्य निश्चयाद्युक्तिर्नाम मुखसन्ध्यङ्गम् । यदुक्तं—"सम्प्रधारणमर्थानां युक्तिः ।"

**विदूषकः**—( आत्मगतम् ) का गतिः—अद्य तावत् जठरानलेन सन्त्रास्यमानस्य मे विपणिकन्दुरिव दन्दह्यते हृदयम् । किन्तु अहं किं कर्तुं शक्नोमि, भवतु

इदो इदो भवम्। [ इत इतो भवान्। ]

( इति परिक्रामतः। )

**विदूषकः**—एसो पमदवणपरिसरो। काणमिअ पत्तुवगदो भवं आअन्तुओ दक्खिणमारुदेण। [ एष प्रमदवनपरिसरः। आनम्य प्रत्युपगतो भवानागन्तुको दक्षिणमारुतेन। ]

**राजा**—( विलोक्य ) उपपन्नं विशेषणमस्य वायोः। अयं हि—

निषिञ्चन् माधवीं लक्ष्मीं लतां कौन्दीं च लासयन्।
स्नेहदाक्षिण्ययोर्योगात् कामीव प्रतिभाति मे॥ ४॥

---

राज्ञा सह क्षुधापीडितोऽपि गच्छामि। ( प्रकाशम् ) इतः इतः भवान् अनेन पथा आगच्छतु इति प्रमदवनमार्गं प्रदर्शयति।

इति उक्त्वा विदूषकराजानौ प्रमदवनं जिगमिषन्तौ रङ्गभूम्यां इतस्ततः परिक्रामतः।

**विदूषकः**—एषः प्रमदवनपरिसरः प्रमदवनसमीपस्था भूमिः। "पर्यन्तभूः परिसरः" इत्यमरः। आगन्तुकः अतिथिर्भवान् दक्षिणमारुतेन दक्षिणदिक्तः वहता वायुना आनम्य प्रणम्य प्रत्युपगतः स्वागतीकृतः। दक्षिणवायुरतिथिं त्वां स्वागतं करोतीति भावः। 'आगन्तुरतिथिर्ना गृहागत' इत्यमरः।

**राजा**—( विलोक्य—वायुगतिं निरूप्येति भावः ) अस्य दक्षिणदिशा आगतस्य वायोः दक्षिणेतिविशेषणमुपपन्नं युक्तम्। अत्र विदूषकप्रयुक्तस्य दिग्वाचकस्य दक्षिणपदस्य राज्ञा श्लेषमर्यादया अनुकूलरूपार्थे पर्यवसानम्। अयं हि—कीदृशोऽयं वायुरिति निरूपयति—

**निषिञ्चन्निति**—मधोः वसन्तस्य इयं माधवी तां वसन्तसम्बन्धिनीं लक्ष्मीं शोभां निषिञ्चन् नितरां सिञ्चन् पुष्णन् अतिशयां कुर्वन् तथा च कौन्दीं लतां लासयन् नर्तयन् अयं वायुः स्नेहदाक्षिण्ययोः प्रेमानुकूलत्वयोर्योगात् सद्भावात् कामीव प्रतिभाति दृश्यते।

यदा वायुर्वहति तदा लता तु कम्पते तत्रोत्प्रेक्षते कविर्यत् लतां नर्तयति वायुः किलेति। स्वभावोऽयं कामुकस्य यत् या नायिका नववयोविशेषशालिनी भवति तस्यां नितरां प्रीतिं निषिञ्चति तथा च प्रगल्भां तावत् पुनः केवलं नर्तयन्नेव तस्यां प्रीतिं प्रकाशते। तथैव वायुः नववयस्कां वासन्तीं लतां स्नेहेन निषिञ्चति, प्रगल्भां तां भ्रमरादिभिर्भुक्तशेषां कौन्दीं केवलं नर्तयति, तेन तस्य कामुकत्वं स्पष्टमेव।

**सरलार्थस्तु**—वासन्तीं शोभां स्नेहेन विवर्धयन् नर्तयंश्च कौन्दीं लतां दाक्षिण्येनायं वायुः कामीव सम्यग् लक्ष्यते।

"वासन्ती माधवी लता" इत्यमरः। दाक्षिण्यं हि परच्छन्दानुवर्तित्वं आनुकूल्यं वा।

**विदूषकः**—सरिसो एव्व से अहिणिवेसो [ सदृश एवास्याभिनिवेशः ] ( इति परिक्रामन् ) एदं पमदवणम् [ इदं प्रमदवनम् ] पविसदु भवम् । [ प्रविशतु भवान् । ]

**राजा**—वयस्य ! प्रविशाग्रतः ।

( उभौ प्रवेशं नाटयतः । )

**राजा**—( त्रासं रूपयित्वा ) वयस्य ! साधु मनसा समर्थितः आपत्प्रतीकारः किल ममोद्यानप्रवेशः । तच्चान्यथैवोपपन्नम् ।

विविक्षोर्यदिदं नूनमुद्यानं नाघशान्तये ।
स्रोतसेवोह्यमानस्य प्रतीपतरणं महत् ॥ ५ ॥

---

"कामीवे"त्यत्र उपमालङ्कृतिः । अनेन च माधवीकौन्दीलतयोर्ज्येष्ठाकनिष्ठानायिकाविशेषत्वप्रकाशनेन उर्वशीकाशीराजदुहित्रोर्ज्येष्ठाकनिष्ठिकाभावं गमयन् समासोक्त्यलङ्कारभङ्ग्या राज्ञः उर्वश्यां स्नेहनिषेकश्च काशिराजदुहितरि केवलं दाक्षिण्यमेवेति प्रदर्शयन् नायकमुखेन नायिकाविषयकं बहुमानं सूचयति तत्रभवान् महाकविः कालिदासः । तेन च नायकस्य शठत्वं ध्वन्यते । यदुक्तं–"गूढविप्रियकृच्छठः ।" समासोक्तिलक्षणं तु यथा दर्पणे, "समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥"

अनुष्टुब् वृत्तम् ॥ ४ ॥

**विदूषकः**—सदृशः उचित एवास्याभिनिवेशः । अस्य वायोः योग्या एव प्रीतिः । अभिनिवेशः प्रीतिराग्रहे वा । ( इति परिक्रामन् विचरन् ) इदं प्रमदवनम्, भवान् प्रविशतु । 'ईदृश' इति पाठान्तरे सत्यमेतादृश एवेत्यर्थः ।

**राजा**—वयस्य माणवक ! प्रविशाग्रतः । प्रथमं त्वमेव प्रविश ।

( उभौ राजविदूषकौ प्रवेशं नाटयतः दर्शयतः । )

**राजा**—( त्रासं खेदं रूपयित्वा प्रकटयन् ) वयस्य ! मम मनसा उद्यानप्रवेशः आपदः खेदस्य प्रतीकारः निराकरणहेतुः भविष्यतीति पूर्वं साधु सम्यक् विचारितमासीत् । किन्तु तच्च अन्यथैव उपपन्नम्–विपरीतं जातम् । विविक्तसेवनं मम खेदनिराकरणं भविष्यतीति मया प्रागुचितमेव विचारितम् अभवत् किन्त्वधुना इह मलयानिलादीनां भावेन तत्तु अधिकं खेदकारणं जातमिति भावः । अत्रोपवनगमनस्य सम्भावितशान्तिहेतुत्वे सत्यपि तत्रापत्प्रतीकाराभावः प्रत्युत समधिकतापोद्भवरूपानर्थोपातः, तेन चात्र विषमाख्योऽलङ्कारः; यदुक्तं साहित्यदर्पणे—"यद्वारब्धस्य वैकल्यमनर्थस्य च सम्भवः । विरूपयोः सङ्घटना या च तद्विषमं मतम्" ।

**विविक्षोरिति**—यद् यस्मात् कारणादिति चूर्णकस्थवाक्येनान्वयः । उद्यानं प्रमदवनाख्यं विविक्षोः प्रवेष्टुमिच्छोर्मम इदमुपवनं अघशान्तये खेदनिवारणाय न ।

**विदूषकः**—कहं विअ ? [ कथमिव ? ]

**राजा**—

इदमसुलभवस्तुप्रार्थनादुर्निवारं
प्रथममपि मनो मे पञ्चबाणः क्षिणोति ।
किमुत मलयवातोन्मूलितापाण्डुपत्रै-
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु ॥ ६ ॥

---

नेदम् मां सान्त्वयितुं पारयति । स्रोतसा जलप्रवाहेणोह्यमानस्य प्रापितस्य नीयमानस्य वा जनस्य यथा प्रतीपतरणं प्रवाहवेगस्य प्रतिकूलतरणं दुःखाकरं भवति एवमेव ममात्रागमनम् । यथा जलगतेः विरोधिप्लवनं केवलं दुःखायैव सम्पद्यते तथैवोद्यानप्रवेशः मां पीडयत्येवेति सारः । अघपदस्य दुःखार्थवाचकत्वमपि "अघं दुःखे व्यसनैनसो"रिति हैमवचनप्रामाण्यात् । विविक्षुरिति वेष्टुमिच्छुरिति सन्नन्तादुः । उपमालङ्कारश्च । अनुष्टुब् वृत्तम् ॥ ५ ॥

**विदूषकः**—कथमिव—कथं नेदमुद्यानं दुःखनाशकमिति पृच्छति ।

**राजा—इदमिति**—पञ्च बाणाः यस्य सः कामः इदं मदीयं असुलभं सौकर्येणालभ्यं यद्वस्तु तद्विषयिणी या प्रार्थना अभिलाषस्तस्मिन् दुःखेन निवारयितुं निरोद्धुं शक्यं मनः प्रथममपि आदौ एव क्षिणोति कृशयति । असुलभं यदुर्वशीरूपं वस्तु तस्मिन् साभिलाषं मदीयं मनः आदावेव मदनः कृशीकरोति । प्रथममेवाहं सन्तप्तोऽस्मीति भावः । पुनश्च मलयवातोन्मूलितापाण्डुपत्रैः मलयाचलतः वहता वातेन उन्मूलितानि पातितानि आपाण्डूनि ईषत्पीतान्यत एव पक्वानि पत्राणि येषां तैः उपवनसहकारैः उद्यानस्थाम्रवृक्षैरङ्कुरेषु दर्शितेषु सत्सु किमुत का वा मे मनसः कथा । प्रथमं सहकारदर्शनमेवोद्दीपनम् । पुनश्च तेषु अङ्कुरोद्गमः समुद्दीपनम्, तथा च आपाण्डुपत्राणामभावेन नितान्तसौन्दर्यशालित्वेन सहकारस्य विशेषोद्दीपकत्वं तथा च मलयवातोन्मूलितत्वात्तस्य मलयाचलतो वहत अत एव सुगन्धिनः वायोस्तत्र सद्भावात् अत्यन्तमेवोद्दीपकत्वमिति गम्यते । तेन च भावस्तावदित्थमस्ति यत् प्रथममेव मे दुर्लभवस्तुकांक्षि मनः अनङ्गेन सन्तप्तं एवास्ति तत्रापि च पुनः मलयवातेन पातितानि शुष्कपत्राणि येषां तेषु सहकारेषु अङ्कुरदर्शनेन कीदृशी विरहव्यथा मे मनसि सञ्जायेतेति न ज्ञायते इति सारः । अत्र उत इति वितर्के ।

अत्र नायिकागतरतेरुपकारकः उद्दीपनाख्यो विभावो वर्णितः । अपि चात्र विधानाख्यं मुखसन्ध्यङ्गम् । यदाह धनञ्जयः—"विधानं सुखदुःखकृत् ।" अत्र विप्रलम्भशृङ्गारपरिपोषिणां वितर्कौत्सुक्यचिन्तानां भावानां व्यज्यमानत्वाद् भावशबलता ।

अत्र च मालिनीवृत्तम् । तल्लक्षणं तु "ननमयययुतेयं मालिनी भोगिलोकैः । यस्मिन् वृत्ते नगणद्वयं मगणं यगणयुग्मं च भवति तद्वृत्तं मालिनी नाम । तत्र च अष्टभिः सप्तभिश्च यतिरस्ति ॥ ६ ॥

**विदूषकः**—अलं भवदो परिदेविदेण । अइरेण इट्ठसंपादइत्तओ अणंगो एव्व दे सहाओ भविस्सदि । [ अलं भवतः परिदेवितेन । अचिरेणेष्टसम्पादयितानङ्ग एव ते सहायो भविष्यति । ]

**राजा**—प्रतिगृहीतं ब्राह्मणवचनम् ।

( इति परिक्रामतः । )

**विदूषकः**—पेक्खदु भवं वसन्तावदारसूइदं से अहिरामत्तणं पमदवणस्स । [ प्रेक्षतां भवान् वसन्तावतारसूचितमस्याभिरामत्वं प्रमदवनस्य । ]

**राजा**—नूनं प्रतिपदमेव तावदवलोकयामि । अत्र हि—

अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयो-
र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।

---

**विदूषकः**—भवतः परिदेवितेन विलापेनालम् । नास्ति काचनापेक्षा विलापस्येति । अलमिति पर्याप्तम् । मा कुरु विलापमिति भावः । अचिरेण शीघ्रमेव इष्टस्य अभीप्सितस्य वस्तुनः सम्पादयिता प्रापकः अनङ्गः कामदेवः एव ते अस्मिन् कार्ये सहायः सहकारी भविष्यति । काम एव सत्वरं स्वयं सर्वं सङ्गमयिष्यते अतो भवता तदर्थं न विलपितव्यमिति भावः ।

**राजा**—ब्राह्मणस्य तव वचनं इष्टसम्पादकं वचः प्रतिगृहीतम् स्वीकृतम् । अनुगृहीतोऽस्मि ब्राह्मणवचसा ।

[ इति परस्परालापं कुर्वन्तौ विक्रमविदूषकौ प्रमदवने इतस्ततः तदीयशोभां निरूपयन्तौ मनोविनोदकारणं मार्गयन्तौ परिक्रामतः । ]

**विदूषकः**—प्रेक्षतामिति । भवान् अस्य प्रमदवनस्य वसन्तस्य ऋतुराजस्यावतारः प्रादुर्भावस्तेन सूचितं प्रकटीकृतमभिरामत्वं सौन्दर्यं प्रेक्षतां पश्यतामिति ।

**राजा**—नन्विति । नन्ववधारणे । प्रमदवनस्य कमनीयतां प्रतिपदं स्थाने स्थाने अवलोकयामि । सर्वत्रैव रामणीयकरञ्जितमिदं प्रमदवनमाभातीति भावः । पदे पदे इति प्रतिपदम् इति वीप्सायां प्रतिपदप्रयोगः । "प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः" इत्यमरः । "अत्र हि" इति चूर्णकस्थं पदद्वन्द्वं प्रमदवनमेव बोधयति ।

**अग्र इति**—सखे माणवक ! अत्र हि अस्मिन् प्रमदवने अग्रे पुरत एव स्त्रीणां नखानि तद्वत्पाटलं श्वेतारुणं कुरबकं तदाख्यं कुसुमं तिष्ठति वर्तते । परत्र च द्वयोर्भागयोः पार्श्वभागयोः श्यामं, उपोढः सविशेषो रागः यस्य तेन च सुभगं बालाशोकं तत्कुसुमं च भेदोन्मुखं विकसनोत्सुकम् तिष्ठति । एकतः कुरबकः परतश्च बालाशोकः स्तः । तयोर्मध्ये चूते सहकारतरौ लग्ना ईषत् स्वल्पं बद्धं विद्यमानं

ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता ॥७॥

**विदूषकः**—एसो कसणमणिसिलावट्टसणाहो अदिमुत्तलदाम-

---

यद्रजः केसरपांसुः तस्य कणैरग्रे अग्रभागे कपिशा श्यामरक्ता नवा नूतना मञ्जरी तादृशी शोभायमाना लक्ष्यते यथा मुग्धत्वस्य अप्रौढतायाश्च यौवनस्य च मध्ये स्थिता मधुश्रीर्वासन्ती शोभा एव भवेत् ।

**तात्पर्यं तु**—कुरबकबालाशोकयोर्मध्ये विराजमाना सहकारमञ्जरी मुग्धत्वयौवनयोर्मध्ये शोभमाना मधुश्रीरिव राजते ।

पाटलमिति श्वेतरक्तयोर्मिश्रणेन जायमानो रङ्गः । यतः "श्वेतरक्तस्तु पाटलः" । "तत्र शोणे कुरबकः" इति वचनात् शोणपुष्पं किञ्चन कुरबकाख्यम् । कपिशस्तु श्यामरक्तयोः सम्भेदेन रङ्गविशेषो जायते । यथा "श्यावस्तु कपिशः" इति । अत्र कुरबके मुग्धत्वमारोपितम् पाटलत्वात् । शासति तु तस्मिन् यौवने पूर्णरक्तत्वस्यावश्यम्भावात् । तदसति तु युक्तमेव श्वेतरक्तत्वम् । तथा च बालाशोके यौवनं संस्थापितम् तस्योपोढरागत्वात् विकासोन्मुखत्वाच्च । मुग्धत्वयुक्तस्य कुरबकस्य यौवनसनाथस्य च बालाशोकस्य मध्ये नवा रसालमञ्जरी मधुश्रीरिव विराजते इति भावः । कामिनीनां नखेषु सविशेषसौन्दर्यास्तित्वात् कुरबकाणां च नखसदृशतिर्यग्रूपत्वात् तयोर्विषयविषयीभावः । अशोकस्य बालत्वविशेषणं उपोढरागसन्निधानाय दत्तम् । भेदोन्मुखत्वेन मुग्धत्वदौर्बल्यसहकृतस्य यौवनस्य प्रादुर्भावः सूच्यते । ईषद्बद्धत्वेन मुग्धत्वस्येषत्संभवः । रजःकणैश्च यौवनमपि मञ्जर्यां समासादितम् । नवत्वेन कपिशत्वं युक्तमेव । अत्र च "स्त्रीनखपाटलमित्यत्रोपमालङ्कृतिः" । अपि च तिष्ठतेः कुरबकस्य बालाशोकस्य च प्रकृतयोः कारकत्वेन "तुल्ययोगितालङ्कारः" । यदाह—"वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता" । मञ्जरीयं च मधुश्रीरेव स्थिता इति तस्यां मञ्जर्यां मधुश्रियः संभावनयोत्प्रेक्षालङ्कारः । अत्र च स्वाभाविकस्योद्यानस्य वर्णनात् स्वभावोक्तिरलङ्कारः । "यदुक्तं स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्" । एतेषां च परस्परं स्वाधीनतया चमत्काराधायकत्वेन संसृष्टिरलङ्कारः । यदुक्तं दर्पणे—"मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते" । कुरबकपदम् अशोकपदञ्च पुष्पविशेषवाचकं प्रायेण पुंस्येव प्रयोज्येते । नपुंसकमशोकपदं पारदवाचि, यदुक्तं "अशोकस्त्रिषु निःशोके, पुंसि कङ्केलिपादपे । स्त्रियां तु कटुरोहिण्यां पारदे स्यान्नपुंसकम्" इति मेदिन्याम् । अत्र च नपुंसकप्रयोगादप्रयुक्तत्वं दोषः, स च पूर्वार्धे लिङ्गव्यत्यासेन समाधेयः ॥

अनेन च नायिकायां अपि मुग्धत्वयौवनमध्यस्था स्थितिः मधुश्रीत्वं च समारोपितम् । इह च माधुर्याख्यो गुणः । यदुक्तम् "चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते" । वृत्तं च शार्दूलविक्रीडितम् । लक्षणं तु प्रागुक्तमेव ॥ ७ ॥

**विदूषकः**—एष इति । एष प्रमदवनस्थः कृष्णः कृष्णवर्णो यो मणिशिला-

ण्डओ भमरसंहविहडिदेहिं कुसुमेहिं किदोवआरो विअ अत्तभवदो वट्टदि, ता अणुग्गहीअदु एसो । [ एष कृष्णमणिशिलापट्टसनाथः अतिमुक्तालतामण्डपो भ्रमरसङ्घविघटितैः कुसुमैः कृतोपचार इवात्रभवतो वर्तते, तदनुगृह्यतामेषः ।

**राजा**—यदभिरोचते भवते । ( इत्युपविशतः । )

**विदूषकः**—दाणिं इहासीणो ललिदलदालोहिअमाणलोअणो उव्वसीगदं उक्कंठं विणोदेदु भवं । [ इदानीमिहासीनो ललितलता-लोभ्यमानलोचन उर्वशीगतामुत्कण्ठां विनोदयतु भवान् ! ]

**राजा**—( निःश्वस्य )

बहुकुसुमितास्वपि सखे नोपवनलतासु नम्रविटपासु ।
चक्षुर्बध्नाति धृतिं तदङ्गनालोकदुर्ललितम् ॥ ८ ॥

---

पट्टः प्रस्तरः तेन सनाथः सुशोभितः अतिमुक्तलतायाः माधवीलतायाः मण्डपः वितानम् भ्रमराणां सङ्घैः समूहैः विघटितानि विकसितानि कुसुमानि तैः कृतः उपचारः सत्कारः येन सः एतादृश एव वर्तते ।

तत्र प्रमदवने माधवीलतामण्डपे एकः सुन्दरः उपवेशार्हः प्रस्तर आसीत्त-दुपरि च वायुवेगेन कानिचित्कुसुमान्यपि अधःपातितानि आसन् । तेनोत्प्रेक्ष्यते यदिदं वासन्तीलतावितानम् विकसितैः कुसुमैः पूजार्हस्य भवतः स्वागतं करोति ।

अत्र सप्रस्तरस्य लतामण्डपस्य वर्णनेन 'अत्र भवान् किञ्चिद्विश्रान्तुमर्हतीति' गम्यते तथा सुन्दरं सुवासितमिदं स्थलमिति च सूच्यते । तदेषः लतामण्डपः किञ्चिद्विश्रम्य अनुगृहणीयः भवता इति भावः ।

अत्र चोत्प्रेक्षालङ्कारः । अतिमुक्तलता तु माधवीलता "अतिमुक्तः पुण्ड्रको वासन्ती माधवी लता" इत्यमरवचनात् ।

**राजा**—यदिति—यथा त्वमिच्छसि तथैवावाम् कुर्व इति—आगच्छ । उपविशावोऽत्र किञ्चित्कालमिति ।

( इत्युपविशतः )

**विदूषकः—इदानीमिति**—इदानीमधुना इह वासन्तीलतामण्डपे आसीनः विश्रान्तः, ललिताः रुचिरा या लतास्ताभिः लोभ्यमाने हार्यमाणे लोचने नयने यस्य सः एतादृशो भवान् उर्वशीगतां तद्विषयिणीमुत्कण्ठां लालसां विनोदयतु । इह सुन्दरं दृश्यं पश्यन् भवान् आत्मविनोदं कर्तुमर्हतीति भावः ।

**राजा—बहुकुसुमितास्विति**—हे सखे मित्र ! बहूनि कुसुमानि यासु ताः बहुकुसुमिताः तासु प्रसूनभरसमेतासु अपि नम्रविटपासु कोमलशाखासु उप-

तदुपायश्चिन्त्यतां यथा सफलप्रार्थनोऽहं भवेयम् ।

**विदूषकः**—( विहस्य ) भो ! अहल्लाकामुअस्स इन्दस्स वज्जं सचिवो; उव्वसीपज्जुस्सुअस्स भवदो वि अहम् । दुवे वि एत्थ उम्मत्तआ । [ भो ! अहल्याकामुकस्येन्द्रस्य वज्रम् सचिवः, उर्वशीपर्युत्सुकस्य भवतोऽप्यहम् । द्वावप्यत्रोन्मत्तौ । ]

**राजा**—न खलु चिन्तयति भवान् ।

**विदूषकः**—( चिन्तयति । ) एसो चिन्तेमि । मा उण परिदेविदेहिं समाधिं भंज्जस्ससि । ( निमित्तं सूचयित्वा । आत्मगतम् ) अहो !

---

वनलतासु तदङ्गनालोकदुर्ललितम् तादृशालौकिकरूपसमलङ्कृतायाः अङ्गनायाः लोकः दर्शनं तेन दुर्ललितं दूषितं मन्थरं स्तब्धं वा मम चक्षुः धृतिं न बध्नाति स्थिरतया स्थातुं न पारयति । तासु मम चक्षुर्न सज्जति इति भावः । अनेन च नायिकायाः अलौकिकरूपशालित्वं व्यज्यते । विविधोपवनलतासु मे चक्षुर्न बध्नातीति वचसा नैककमनीयकामिनीकान्तेऽप्यन्तःपुरे मेऽन्तःकरणं न सज्जतीति भावप्रदर्शनात् उपवनलतारूपोपमानपदेनोपमेयभूतानां नानारमणीनां निगरणं व्यज्यते । तस्माच्चात्र अतिशयोक्त्यलङ्कारध्वनिः । आर्या जातिः ॥ ८ ॥

तत्तस्मात् हेतोः उपायः चिन्त्यतां येन सफला प्रार्थना यस्य सः सफलप्रार्थनः सकामो भवेयम् । येनाहं तां प्रियां लभेय तदुपायोऽन्वेषितव्यः । सफलप्रार्थनाहेतूनामुपायानां चिन्तनस्य प्रतिपाद्यत्वात् "प्रयत्नो नाम कार्यस्य द्वितीयावस्था" इतः प्रक्रमते । यल्लक्षणं दशरूपके—"प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वितः" । अत एवात्र विक्रमोर्वशीसमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य चेटीविदूषकाभ्यां ज्ञायमानतया किञ्चिल्लक्ष्यस्य, काशीराजदुहित्रा च भूर्जपत्रवृत्तान्तेनोन्नीयमानस्य दृश्यादृश्यरूपतयोद्भेदात् इतः प्रभृति प्रतिमुखसन्धिः प्रवर्तते । यदाह विश्वनाथः—"फलप्रधानोपायस्य मुखसन्धिनिवेशितः । लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत् ॥

**विदूषकः**—( विहस्य—किञ्चिदात्मश्लाघां कुर्वन् परिहासेन ) । भो मित्र ! यथा अहल्यायाः गोतमस्य भार्यायाः कामुकस्येन्द्रस्य वज्रम् एव सचिवः कार्यवाहको बभूव तथैव उर्वशीपर्युत्सुकस्य तत्प्राप्तिसमुत्कण्ठितस्य तव अहं नियोजितकार्यधूः सचिवोऽस्मि । अत्र कार्ये द्वौ अपि वज्रम् अहं च उन्मत्तौ भयावहौ । विलक्षणकार्यशक्तिसम्पन्नत्वात् ।

**राजा**—न खलु चिन्तयति भवान्—उपायम् । किन्तु किमपि संल्पति ।

**विदूषकः**—( चिन्तयति—उपायचिन्तनं नाटयति ) एष चिन्तयामि । किन्तु त्वं परिदेवितैः विलापैः समाधिं चित्तैकाग्र्यं भङ्क्ष्यसि विनाशयसि । अहो !

अहं कज्जदंसी । [ एष चिन्तयामि । मा पुनः परिदेवितैः समाधिं भङ्क्ष्यसि । अहो ! अहं कार्यदर्शी । ]

राजा—

असुलभा सकलेन्दुमुखी च सा
किमपि चेदमनङ्गविचेष्टितम् ।
अभिमुखीष्विव वाञ्छितसिद्धिषु
व्रजति निर्वृतिमेकपदे मनः ॥ ९ ॥

( इति मदनोत्सुकस्तिष्ठति । )

( ततः प्रविशत्याकाशयानेनोर्वशी चित्रलेखा च )

---

इति आह्लादे । तेन कामपि कार्यनिष्पत्तिं सूचयन् अहम् कार्यदर्शी कुशल इति गगने उपयान्तीमुर्वशीं प्रेक्ष्य विस्मितो ब्रूते ।

**राजा—असुलभेति** । सकलेन्दुमुखी पूर्णचन्द्रानना सा सुकुमारी युवती असुलभा दुर्लभा । तथापि किमपि कुतोऽप्यकथ्यकारणात् इदं वामेतरनयनस्पन्दनादिकं अनङ्गविचेष्टितम् कामचेष्टा च मयि भवति । अपि च मनः वाञ्छितस्य अभीप्सितस्य वस्तुनः सिद्धिषु प्राप्तौ अभिमुखीषु अनुकूलासु अचिरनिष्पद्यमानासु वा सत्सु यथा निर्वृतिं सुखं तापराहित्यं वा व्रजति प्राप्नोति तथैव मम मनः एकपदे सपदि तस्मिन्नेव वा क्षणे निर्वृतिं शान्तिमुपैति । तात्पर्य तु—दुर्लभा तु मम प्रिया । भवति च मयि किमप्यवर्णनीयः कामप्रभावः तथा च मम मनः तादृशीं शान्तिं अस्मिन्नेव क्षणे प्राप्तम् यथा मनोरथसिद्धिः अचिरभाविनी एव स्यात् । अनेन उर्वशीसम्मेलनं शीघ्रमेव भविष्यतीति दक्षिणाक्षिस्फुरणेन व्यक्तमिति सूचितम् । अत्र च पूर्वार्धे चकारद्वयप्रदानेन सकलेन्दुमुख्याः असुलभत्वेन अनङ्गविचेष्टितम् विरोधीति वैरोध्यं सूचितम् । सम्पूर्णाभिः कलाभिः युक्तमिति सकलश्चासौ इन्दुः तादृशं मुखं यस्याः सा सकलेन्दुमुखी । अत्र धर्मवाचकलुप्तोपमालङ्कारः । एकपदे तस्मिन्नेव क्षणे "तत्क्षणैकपदे तुल्ये सद्यः सपदि च स्मृतम्" इति हलायुधः । अत्र वाञ्छितसिद्धिषु अभिमुखीष्विवेति तत्समये असुलभायां अपि शीघ्रमेव सम्पाद्यत्वसमारोपणेनोत्प्रेक्षालङ्कारः । यतः उर्वशीलाभरूपकार्यस्य नाटकीयवस्तुनो नायकमनःकामनायाः प्रारम्भयत्नप्राप्त्याशानियताप्तिफलागमरूपाः पञ्चावस्थाः सन्ति, तेन वाञ्छितस्य पञ्चाङ्गत्वम् एकैकस्य चाङ्गस्य क्रमेण सिद्धिः, तासां च समस्तानां समानगौरवशालित्वान्नायकाभीप्सितत्वात्पृथग्ग्रहणम्, अतएवात्र वाञ्छितसिद्धिषु इति बहुवचनप्रदानम्; तेन च नायिकानुकूल्यं अस्तीति नायकहृदि दूरस्थभावविनिमयशक्त्या ( by means of Telepathy ) प्रतिबिम्बितमिति प्रत्ययगतवक्रताजनिता वस्तुध्वनिः ॥

**चित्रलेखा**—सहि उव्वसि ! कहिं क्खु अणिदिट्ठकालणं गच्छीअदि ? [ सखि उर्वशि ! कुत्र खलु अनिर्दिष्टकारणं गम्यते ? ]

**उर्वशी**—( मदनवेदनामभिनीय सलज्जम् ) सहि ! हेमऊडसिहरे लदाविडवान्दरे लग्गा वैजअन्तिआ मोआवेहि त्ति मए भणिदा उवहसिअ मं भणासि दिढं क्खु लग्गा ण सक्का मोआविदुम् । दाणिं पुच्छसि कहिं अणिदिट्ठकालं गच्छीअदि त्ति । [ सखि ! हेमकूटशिखरे लताविटपान्तरे लग्ना वैजयन्तिका मोचयेति मया भणिता उपहस्य मां भणसि दृढं खलु लग्ना न शक्या मोचयितुम् । इदानीं पृच्छसि कुत्रानिर्दिष्टकारणं गम्यत इति । ]

**चित्रलेखा**—किं णु तस्स राएसिणो पुरूरवस्स सआसं पत्थिदासि ? [ किं नु खलु तस्य राजर्षेः पुरूरवसः सकाशं प्रस्थितासि ? ]

---

अत्र च नायिकया मेलने जाताशस्य संभोगाकाङ्क्षिणः नायकस्य स्थितिवर्णनेन विलासं नाम प्रतिमुखसन्ध्यङ्गम् । यदुक्तं दर्पणे—"समीहा रतिभोगार्थो विलास इति कीर्तितः" । प्रसादाख्यो गुणः ।

अत्र च द्रुतविलम्बिताख्यं वृत्तम् । यदुक्तम् "द्रुतविलम्बितमाह नभौ भरौ" पादान्ते च यतिः ॥ ९ ॥

( इति विचारयन् मदनोत्सुकः मदनपीडितः तिष्ठति । ततः आकाशयानेन गगनमार्गेण उर्वशी च चित्रलेखा प्रविशति । )

**चित्रलेखा**—सखि उर्वशि ! कुत्र खलु अनिर्दिष्टकारणं अनिश्चितकारणं अकारणं वा गम्यते ? त्वं कारणं विनैव क्व गच्छसीति भावः ।

**उर्वशी**—( मदनजन्यां वेदनां पीडां अभिनीय प्रकटयन्ती सलज्जम् ) सखि ! हेमकूटशिखरे लतानां विटपो वितानं तदन्तरे तन्मध्ये लग्ना वैजयन्तिका मदीया एकावली तां मोचय इति मया भणिता उक्ता त्वं उपहस्य हास्यं कृत्वा मां भणसि प्रोक्तवती यत् इयं दृढं कठिनं यथा स्यात्तथा लग्ना अत एव मोचयितुं न शक्या इति वदन्त्यपि त्वं इदानीं पृच्छसि कुत्र अनिर्दिष्टकारणं विशेषकारणं विनैव गम्यते गच्छसि । भणसीत्यत्र भूतार्थे लट् ।

आदौ तावत् विक्रमं विहाय दूरं गमनप्रवृत्तायां तस्यां तदीयैकावली लतायां यदा रुद्धा तदा चित्रलेखा व्यहसत् यदमोच्येयम् । तदेवोर्वशी तां स्मारयति यत्कथं त्वमधुना जानत्यपि दुर्मोच्यत्वं तस्या, इदं पृच्छसि यत्काकारणं गम्यत इति भावः अनेन नायिकायाः स्वालम्बने प्रेमातिशयो द्योत्यते ।

**चित्रलेखा**—किं त्वं तस्य राजर्षिणः पुरूरवसः विक्रमस्य सकाशं समीपे प्रस्थितासि प्रचलितासि ? तमुद्दिश्येदं गमनं त्वदीयं किमिति भावः । नु इति प्रश्ने ।

**उर्वशी**—एसो मे अवहत्थिदलज्जो व्ववसाओ । [ एषो ममापहस्तितलज्जो व्यवसायः । ]

**चित्रलेखा**—सहि ! तधा वि संपधारीअदु दाव । को उण सहीए तहिं पढमं पेसिदो ? [ सखि ! तथापि सम्प्रधार्यतां तावत् । कः पुनः सख्या तत्र प्रथमं प्रेपितः ? ]

**उर्वशी**—णं हिअअम् । ( ननु हृदयम् । )

**चित्रलेखा**—को णु तुमं णिओजेदि ? [ को नु त्वां नियोजयति ? ]

**उर्वशी**—मअणो क्खु मं णिओजेदि । [ मदनः खलु मां नियोजयति । ]

**चित्रलेखा**—अदो अवरं णत्थि मे वअणम् । [ अतः अपरं नास्ति मे वचनम् । ]

---

**उर्वशी**—एप अयमेव अपहस्तिता दूरीकृता लज्जा यस्मादिति तादृशो व्यवसायो विचारः कर्म । नायिकायाः स्वयमभिसरणरूपोऽयं निर्लज्जो मदीयो व्यवहारः । अर्थात् यत्त्वयोक्तं तत् साधु । अहं तत्रैव तत्सकाशं प्रस्थिताऽस्मि । अत्र मदनव्यापारानुरोधात् नायिकायाः स्वयं अभिसरणात् उर्वश्या अभिसारिकात्वं गम्यते, यल्लक्षणं रूपके—"कामार्ताऽभिसरेत्कान्तं सारयेद्वाभिसारिका" इति ।

**चित्रलेखा**—सखि ! यद्यपि त्वया व्यवसितमिदमङ्गनाजनविरोधि तथापि सम्प्रधार्यतां विचार्यतां तावत् यत् सख्या त्वया प्रथममादौ त्वदागमनविज्ञापनाय को जनः प्रेपितः ।

**उर्वशी**—ननु हृदयम् हृदयमेव मया आदौ मदागमनविज्ञापकं प्रेपितम् । ननु निश्चये । निश्चयेन वच्मि यन्मे हृदयादृते नान्यः कोऽप्यत्र कर्मणि प्रणिधिः अस्तीति भावः ।

**चित्रलेखा**—को वा नियोजयति—त्वां कः पुनः प्रेरयति ?

**उर्वशी**—मदनः खलु कामः मां नियोजयति प्रेरयति । अत्र "एप मे अपहस्तितलज्जो व्यवसायः" इति मुक्तात्मश्लाघनात्, "मदनो मां नियोजयतीति" वचसा स्वमनोवृत्तेः अचञ्चलत्वख्यापनात् धैर्याख्यः प्रमदानां सात्त्विकभावमुल्लिख्य अयत्नजो नायिकालङ्कारः प्रोक्तः, यल्लक्षणं दशरूपके—"चापलाविहता धैर्यं चिद्वृत्तिरविकत्थना" इति ॥

**चित्रलेखा**—अतःपरं नास्ति मे वचनमुत्तरम् । यदीदं चेत् अनुत्तराऽस्मि ।

**उर्वशी**—तेण आदेसदु मे सही मग्गं जेण तहिं गच्छन्तीए ण अन्तराओ भवे। [तेन आदिशतु मे सखी मार्गं येन तत्र गच्छन्त्याः नान्तरायो भवेत्।]

**चित्रलेखा**—सहि! वीसद्धा होहि। णं भअवदा देवगुरुणा अवराइदं णाम सिहावन्धणं विज्जं उवदिसंतेण तिदसपडिवक्खस्स अलंघणीआ कदे म्ह। [सखि विस्रब्धा भव! ननु भगवता देवगुरुणा अपराजितां नाम शिखाबन्धिनीं विद्यामुपदिशता त्रिदशप्रतिपक्षस्य अलङ्घनीये कृते स्वः।]

**उर्वशी**—(सलज्जम्) ताए पओअं सव्वं सुमरेसि? [तस्याः प्रयोगं सर्वं स्मरसि?]

**चित्रलेखा**—सहि! हिअअं एदं सव्वं जानादि। [सखि! हृदयं एतत् सर्वं जानाति।]

(उभे भ्रमणं रूपयतः)

**चित्रलेखा**—सहि! पेक्ख पेक्ख। एदं भअवदीए भाईरहीए

---

**उर्वशी**—तेन यतस्त्वं निरुत्तरा सम्पन्ना तं मार्गमादिशतु प्रदर्शय येन तत्र विक्रमसन्निधौ गच्छन्त्याः मम पथि कोऽपि अन्तरायो विघ्नभूतो न भवेत्।

**चित्रलेखा**—सखि! विस्रब्धा भव विश्वस्ता स्वस्थचित्ता भव। ननु सम्प्रधारणे। भगवता पूज्येन देवगुरुणा बृहस्पतिना अपराजितां नाम शिखां बध्नातीति शिखाबन्धिनी तां विद्यां उपदिशता प्रयच्छता आवाम् त्रिदशानां देवानां प्रतिपक्षाः शत्रवः दैत्यास्तेषामलङ्घनीये जेतु मशक्ये कृते। तात्पर्य तु—भगवता गुरुणा अस्मान् अपराजितानाम्नी विद्या शिक्षिता। तस्याश्च प्रभावेण दैत्याः अस्मान् जेतुं न प्रभवन्ति। तदेवोच्यते यदावाम् अपराजितां विद्यां पाठयता गुरुणा दैत्यानामवशंवदे कृते इति भावः। अपराजिता तु—यया विद्यया अथवा यस्या विद्यायाः प्रभावात् न केनापि पराजेतुं प्रभूयते इति अपराजिता—सरलतया तु, यया केनापि पराजितो न भवतीति भावः।

**उर्वशी**—(सलज्जम्) तस्याः विद्यायाः प्रयोगं विधिं सर्वं स्मरसि। अपि जानासि कथं प्रयोक्तव्या सा विद्येति। सामान्यमपीदं प्रश्नवाचकं वाक्यम्।

**चित्रलेखा**—सखि! इदं हृदयं (मदीयं) सर्वं एतत् विधानं जानाति। ज्ञायते मया तस्याः प्रयोगविधिः।

(उभे उर्वशीचित्रलेखे भ्रमणं आकाशे चङ्क्रमणं रूपयतः।)

**चित्रलेखा**—सखि उर्वशि! प्रेक्षस्व प्रेक्षस्व पश्य पश्येति कौतूहले वीप्सा।

जमुणासंगपावणेसु सलिलेसु पुण्णेसु अवलोअन्तस्स विअ अत्ताणअं पइट्ठाणस्स सिहाभरणभूदं विअ तस्स राएसिणो भवणं उवगद म्ह । [ सखि ! प्रेक्षस्व प्रेक्षस्व । एतत् भगवत्या भागीरथ्या यमुनासङ्ग-पावनेषु सलिलेषु पुण्येषु अवलोकयत इवात्मानं प्रतिष्ठानस्य शिखाभरणभूतमिव तस्य राजर्षेर्भवनमुपगते स्वः । ]

---

भगवत्याः परमपावनायाः भागीरथ्याः गङ्गायाः यमुनासङ्गेन पावनेषु पवित्रेषु पुण्येषु पुण्यप्रदेषु सलिलेषु जलेषु आत्मानं स्वीयं स्वरूपमिवावलोकयतः पश्यतः प्रति-ष्ठानस्य तदाख्यनगरस्य शिखाभरणभूतमिव चूडामणिरिव तस्य दिव्यस्य राजर्षेः पुरूरवसः भवनं निवासमन्दिरमुपगते प्राप्ते स्वः । तात्पर्यं तु—विक्रमस्य राज-धानी गङ्गातटपरिचुम्बिनी बभूव । तेन गङ्गाजलेषु तस्याः प्रतिबिम्बमदृश्यत । तत्रोत्प्रेक्षते तत्रभवान् कवियत् गङ्गायाः सलिलेषु राजधानीयं स्वीयं रूपं अव-लोकयति इति । तेन चायं भावः—भगवत्याः गङ्गायाः यमुनया सह सङ्गमेन अधिकपुण्येषु जलेषु स्वरूपमेव पश्यतः प्रतिष्ठानाख्यनगर्याः चूडामणिमिव संस्थितं राजप्रासादमावाम् प्राप्नुवः इति ।

अत्र हि राजधान्या गङ्गासलिलेष्वेव स्वरूपदर्शनरूपव्यापारप्रतिपादनेन उत्प्रेक्षा-मिषेण गङ्गातटस्थत्वं लक्ष्यते । तेन च शैत्यपावनत्वादिकं पुण्यशीलत्वं च तस्यां व्यज्यते । तेनेह 'गङ्गायां घोष' इतिवत् प्रयोजनवती उपादानलक्षणा । शिखाभरण-भूतमिवेति अन्योत्प्रेक्षा । ततश्च प्रासादस्य सर्वोत्कृष्टत्वं प्रतिपादितम् । भागीरथ्या यमुनासङ्गित्वप्रदानेन अधिकपुण्यवत्त्वं व्यक्तीकृतम् । तथा च तस्य राजधानी यत्र कुत्रापि तीर्थराजस्य प्रयागस्य समीपे एवासीदिति सूचितम् । प्रतिष्ठान-स्थेत्यनेन भवेत् "पटना" प्रयागपूर्वतीरस्थितं (झूसी) नगरम्—इति रङ्गनाथः । अत्र भगीरथेन स्वपितामहसन्तारणार्थं भुवि समानीतेति भागीरथी, तथाच यमस्य भगिनी तेन यमुनेति पौराणिककथाद्वयमनुसन्धेयम् । पुनश्च गङ्गामन्दा-किनीतिपदव्यावृत्तिपूर्वकं भागीरथीपदग्रहणेन अस्यां पितृपितामहादीनां सर्वेषामपि सन्तारणसामर्थ्यसनाथत्वं व्यज्यते । कालिन्द्यादीनि पदानि विहाय यमुनापदग्रहणेन यमस्य भगिनीत्वात् दुष्टानां पापानां निग्रहसामर्थ्यवत्त्वस्य व्यज्यमानत्वात् तस्य राजधान्यामपि पापानां निग्रहानुरूपन्यायानुसारित्वमासीदिति द्योतितम् । "सलि-लेष्विति" बहुवचनप्रदानेन बहूनां पुण्यजलानां अस्यां सन्निवेशः आसीदिति प्रकटीकृतम् । आदरार्थे वा बहुवचनम् भगवतीपदप्रयोज्यत्वात् । महतीनां नदीनां जलस्य बहुवचनेन सम्बोधनमसाम्प्रतं न । अन्यास्वपि भाषासु तादृशप्रयोग-दर्शनात् यथा (Cf—the waters of the Holy Ganges) । न चात्र यमुनासङ्गपावनेषु तथा पुण्येषु इति समानार्थकपदद्वयप्रदानेन पुनरुक्तिरिति वाच्यम्, तेन स्वयं पुण्येषु एव, पुनश्च यमुनासङ्गमेन परं पावनीकृतेषु इति आत्यन्तिकपावनत्वस्य द्योतितत्वात् । अथवा पुण्यपदमत्र रुचिरत्ववाचकम्

**उर्वशी**—( सस्पृहमवलोक्य ) । णं वत्तव्वं ठाणान्तरगदो सग्गो त्ति । ( विचार्य ) हला, कहिं क्खु सो आवण्णाणुकम्पी भवे ? [ ननु वक्तव्यं स्थानान्तरगतः स्वर्ग इति । ( विचार्य ) हला ! क्व नु खलु स आपन्नानुकम्पी भवेत् ? ]

**चित्रलेखा**—एदस्सिं णन्दणवणेक्कपदेसे विअ पमदवणे ओदरिअ जाणिस्सामो । [ एतस्मिन् नन्दनवनैकप्रदेश इव प्रमदवने अवतीर्य ज्ञास्यामः । ]

( उभे अवतरतः )

**चित्रलेखा**—( राजानं दृष्ट्वा सहर्षम् ) सहि ! एसो पढमोदिदो विअ भअवं चन्दो कोमुदिं विअ अवेक्खदि तुमम् । [ सखि ! एषः प्रथमोदित इव भगवान् चन्द्रः कौमुदीमिव अवेक्षते त्वाम् । ]

---

यथाहामरः–"पुण्यं तु चार्वपि" इति । अत्र हि निर्जीवस्यापि नगरस्य सजीवसदृशव्यापारशालित्वसमारोपेण च शिखाभरणभूषणतोऽलौकिकत्वसमारोपे च भिन्नकार्यत्वात् अन्योन्यनिरपेक्षतया स्थितत्वात् उत्प्रेक्षाद्वयस्य संसृष्टिरलङ्कारः । आङ्गमतानुसारं तु निर्जीवे सजीवत्वारोपणात् चेतनत्वोपचाराख्यं (personification इति तदाख्यं) अलङ्करणम् । अत्र नायिकायाः विरहपीडितायाः दूरतो नायकगृहदर्शनेन वर्धितत्वात् कौतूहलस्य, उद्दीपनाख्यो विभावो व्यज्यते, स्वयमभिसरन्त्याः उर्वश्याः पुरतः राजर्षिपदस्वीकारेणात्र नायकगतोत्तमत्वप्रदर्शनेन रतेरधिकतयोद्दीपनत्वात् । राजर्षेश्च तस्येति विशेषणप्रदानेन अलौकिकत्वं किङ्करीकृतदयादाक्षिण्यादिगुणवृन्दत्वं प्रियसख्या उर्वश्याः कान्ते नायके सहचर्या सूचितम् ।

**उर्वशी**—सस्पृहमवलोक्य–कौतूहलवशाद् नायकप्रासादोपलब्धिहेतुकं सस्पृहत्वम् । ननु अवधारणे । प्रदेशोऽयं स्थानान्तरगतः स्वर्ग इति अन्योऽयं स्वर्ग एव इति वक्तव्यम् । स्वर्ग एवायम् । अन्यत् स्थानं स्थानान्तरम् । सखि ! कुत्र कस्मिन् स्थाने आपन्नानां पीडितानामनुकम्पी सहायकः भवेत् । क्व प्राप्स्यते स महाराजः आर्तेषु परमदयालुरिति । स्वर्ग एवेत्यत्र गम्योत्प्रेक्षा ।

**चित्रलेखा**—एतस्मिन् नन्दनवनस्य एकप्रदेशे एकविभाग इव प्रमदवने अवतीर्य ज्ञास्यामः । नन्दनवनसमसुन्दरेऽस्मिन् प्रमदवने क्व लभ्यः स महाराजः इति वयं ज्ञास्यामः । अत्र च सखीच्छानुसारिणी चित्रलेखा प्रमदवनम् नन्दनैकदेशं वर्णयति । इह च 'इष्टनष्टानुसरणम् परीसर्पश्च कथ्यते' इति वचनात् परिसर्पाख्यं प्रतिमुखसन्ध्यङ्गम् ।

( उभे आकाशाद् अवतरतः )

**चित्रलेखा**—(राजानं तत्रैव प्रमदवने दृष्ट्वा सहर्षम् सानन्दम् ) सखि ! एष पुरो दृश्यमानः प्रथमोदित इव भगवान् चन्द्रः द्वितीयाचन्द्र इव कौमुदीसदृशीं त्वाम्-

**उर्वशी**—( विलोक्य ) हला ! दाणिं पढमदंसणादो वि सविसेसं पिअदंसणो मे महाराओ पडिभादि [ हला ! इदानीं प्रथमदर्शनादपि सविशेषं प्रियदर्शनो मे महाराजः प्रतिभाति । ]

**चित्रलेखा**—जुज्जदि । ता एहि उवसप्पम्ह । [ युज्यते । तदेहि उपसर्पावः । ]

**उर्वशी**—ण दाव उवसप्पिस्सम् । तिरक्करिणीपडिच्छण्णा पास्सवत्तिणी भविअ सुणिस्सं दाव पासवत्तिणा वअस्सेण सह विअणे किं मन्तअन्तो चिट्ठदि त्ति । [ न तावदुपसर्पिष्ये । तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वा श्रोष्ये तावत् पार्श्ववर्तिना वयस्येन सह विजने किम् मन्त्रयन् तिष्ठतीति । ]

---

वेक्षते प्रतीक्षते अत्रैवास्ते महाराजः त्वां परिपालयन् यथा चन्द्रः कौमुदीं प्रतीक्षते । यथा कृष्णपक्षानन्तरं प्रथमोदितो द्वितीयाचन्द्रः लोकान् आह्लादयति तथैवाऽयं आल्हादयत्यस्मान् । अपि च यथा द्वितीयाचन्द्रः क्षीणः असमग्रकलो भवति तथैवायमपि त्वद्विरहक्षीणः अस्तीति गम्यते । यथा स्वीयज्योतिःपोषिकां कौमुदीं चन्द्रः प्रतिपालयति तथैवाऽयमपि त्वदागमनप्रतीक्षां कुर्वाणः तिष्ठति । अत्र भगवानिति पदप्रदानेन यथा ऐश्वर्यशालिनोऽपि चन्द्रस्य चन्द्रिकापेक्षा तथैव महाराजस्य दासीकृतैश्वर्यस्यापि त्वदपेक्षा इति व्यज्यते । तथा च कौमुदीत्वसमारोपेण नायिकायां तस्मै सविशेषानन्ददायित्वं ध्वन्यते । उपमालङ्कारश्च । अवोपसर्गपूर्वकेक्षतेः प्रतीक्षणार्थे कविना अन्यत्रापि प्रयोगो विहितः—यथा "नहि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः" ( मालविकाग्निमित्रे ) ।

**उर्वशी**—( तादृशं तं विलोक्य ) इदानीमस्यामवस्थायां विद्यमानोऽयं महाभागः प्रथमदर्शनाद् अपि सविशेषमत्यन्तं प्रियं दर्शनं यस्येति तादृशो मनोहारी मे मह्यं दृश्यते । पूर्वतः अधिकं शोभनो लक्ष्यते । अत्र स्वभावोक्तिः । हृदये जाते तु रतेरुद्गमे चिरविरहानन्तरं पुनः सम्मेलने आलम्बनयोः परस्परं सविशेषा प्रीतिः निरतिशयः आल्हादातिरेकः सन्मानं च भवति इति सहृदयानुभव एवात्र प्रमाणम् । अथवा 'मे महाराज' इति षष्ठीविभक्त्यन्तमसस्तपदम् मदीयत्वं सूचयति ।

**चित्रलेखा**—युज्यते-यत्त्वं वदसि तत्तु यथार्थम् । तदेहि । उपसर्पावः तस्य निकटं प्राप्नुवः ।

**उर्वशी**—न तावदुपसर्पिष्ये । नाहं तन्नयनपथगामिनी भवितुमिच्छामि । अदृश्यत्वसामर्थ्यप्रदा तिरस्करिणी तदाख्या विद्या तया प्रतिच्छिन्ना अन्तर्हिता सती अस्य पार्श्ववर्तिनी निकटस्था भूत्वा श्रोष्ये आकर्णयिष्यामि यत् किमपि अयं पार्श्ववर्तिना समीपस्थेन वयस्येन माणवकेन सह विजने रहसि मन्त्रयन् विचारयन् तिष्ठति । अहं तु किमयं मित्रेण सह विचारयतीति श्रोष्ये न तु तद्दर्शनपथं

**चित्रलेखा**—जहा दे रोअदि । [ यथा ते रोचते । ]

( उभे यथोक्तमनुतिष्ठतः )

**विदूषकः**—भो ! चिन्तिदो मए दुल्लहप्पणइजणस्स समागमोवाओ। [ भोः ! चिन्तितो मया दुर्लभप्रणयिजनस्य समागमोपायः । ]

( राजा तूष्णीमास्ते )

**उर्वशी**—का उण धण्णा इत्थिआ जा इमिणा पडिमुग्गमाणा अत्ताणअं विणोदेदि । [ का पुनर्धन्या स्त्री या अनेन परिमृग्यमाणा आत्मानं विनोदयति । ]

**चित्रलेखा**—झाणस्स किं बिलम्बीअदि ? [ ध्यानाय किं विलम्ब्यते ? ]

---

गन्तुमिच्छामीति भावः । अनेन नायिका नायकस्य आत्मानं प्रति कियत् प्रेमेति परीक्षितुमिच्छति । एतत्तु उत्तमनायिकाया लक्षणम् यतस्तया यः कोऽपि क्रियते प्रेमबन्धः स तु विचार्य क्रियते–यन्मम प्रेमानुबन्धी स्वानुरूपो विद्यते न वायं ममालम्बनमिति । यस्या विद्यायाः प्रभावात् पुरुषः केनापि अलक्षितो भ्रमितुं स्थातुं वा प्रभवति सा विद्या तिरस्करिणी नाम ।

**चित्रलेखा**—यथा ते रोचते । यथा त्वमिच्छसि तथा कुरु । अत्र 'रुच्यर्थानां प्रीयमाणः' इति रोचतेर्योगे चतुर्थी ।

( उभे उर्वशीचित्रलेखे यथोक्तं अनुतिष्ठतः कुर्वतः । पार्श्ववर्तिन्यौ भूत्वा नर्मसचिवेन सह किं विचार्यते राज्ञेति निभृतं शृणुतः । )

**विदूषकः**—भो वयस्य ! मया दुर्लभप्रणयिजनस्य समागमोपायश्चिन्तितः । कथं दुर्लभमपि प्रीतिपात्रं वस्तु लभ्यं भवेत् तदुपायस्तु मया ज्ञातः ।

राजा तूष्णीमास्ते—राजा तु तस्या नितान्तं ध्याने मग्नः सन् किमुच्यते माणवकेनेत्यपि नावधारयते । अत्र नान्दीगतस्थाणुपदेन इयमेव निश्चला परिस्थितिः सूचिता ।

**उर्वशी**—का सा स्त्री परमधन्या भवेत् या अनेन राज्ञा परिमृग्यमाणा अन्वेष्यमाणा विचार्यमाणा वा सती आत्मानं धन्यतां प्राप्तं विनोदयति ? का भवेत् सा पुनर्नारी या अनेन इत्थं चिन्त्यमाना सती स्वात्मानं धन्यतां नयति रञ्जयति । धन्या पुण्यातिरेकशालिनी, प्रलोभिका वा, यदुक्तं—"रामा त्रिवर्गहेतुः स्त्री, धन्या योषित्प्रलोभिका" । प्रलोभिका तु रतिरूपा चित्ताकर्षकत्वात् ।

**चित्रलेखा**—ध्यानाय किं विलम्ब्यते ? त्वं दिव्या असि । सर्वं ध्यानवशेन ज्ञातुं प्रभवसि तदा का पुनः सा धन्या स्त्री या अनेन चिन्त्यते इति कथं न त्वं ध्यानविधिना तां परिज्ञातुं यतसे । किमर्थं विलम्बं करोषि ध्यानवशेन तस्याः परिज्ञाने इति भावः ।

**उर्वशी**—सहि ! भीआमि सहसा पहावादो विण्णादुम् । [ सखि ! बिभेमि सहसा प्रभावतो विज्ञातुम् । ]

**विदूषकः**—भो ! णं भणामि चिन्तिदो मए दुल्लहपणइजण-समागमोवाओ [ भोः ! ननु भणामि चिन्तितो मया दुर्लभप्रणयि-जनस्य समागमोपायः । ]

**राजा**—वयस्य ! कथ्यताम् ।

**विदूषकः**—सिविणसमागमआरिणं णिद्दं सेवदु भवम् । अहवा तत्तभोदीए उव्वसीए पडिकिदिं चित्तफलए अहिलिहिअ आलो-अन्तो अत्ताणअं विणोदेहि । [ स्वप्नसमागमकारिणीं निद्रां सेवताम् भवान् । अथवा तत्रभवत्याः उर्वश्याः प्रतिकृतिं चित्रफलके अभिलिख्य आलोकयन् आत्मानं विनोदय । ]

---

ध्यानायेत्यत्र "तुमर्थाच्चेति" सूत्रेण ध्यातुमित्यर्थे चतुर्थी ।

**उर्वशी**—सखि ! प्रभावतः ध्यानवशात् तां ज्ञातुं बिभेमि । कुतः—सम्भवतीदं यत् राज्ञः काप्यन्या प्रिया भवेत् यां मार्गयमाणोऽयमित्थं तूष्णीमास्ते । यदि मया प्रभावतो जिज्ञासा कृता, तदनन्तरं यदि तेन निदिध्यास्यमाना कापि सा मदन्या भवेत्तदा तु तत् ध्यानार्जितं ज्ञानं केवलं मम तापायैव स्यात् इति मत्वा प्रभावतो विज्ञातुमहं भीताऽस्मि ।

**विदूषकः**—ननु अवधारणे । भणामि अहं कथयामि यन्मया दुर्लभप्रणयि-जनसमागमोपायः चिन्तितः । कथं दुर्लभापि प्रिया सुगमा स्यादित्युपायो मयाऽत्र आविष्कृतः । प्रेयसीं निदिध्यासतोऽनवहितस्य महाराजस्य पूर्वमभिहितं विदूषकवचनमनाकर्णयतश्चित्तमावर्जयितुं "ननु भणामीति" पदयुगलमत्रगुरू-च्चारणव्यञ्जकम् ।

**राजा**—वयस्य ! कथ्यताम् कस्तावत् स उपायः । एतत्तु राज्ञा औदासीन्येन तद्वचने बहुमानं अकृत्वैव प्रोक्तम् । भवतु त्वदुपायमपि शृणोमि इति ।

**विदूषकः**—भवान् स्वप्ने प्रियया सह समागमः सम्मेलनं तत्कारिणीं निद्रां सेवताम् । भवान् स्वपितु । तत्र स्वप्ने प्रियया सह समागमो भविष्यति इति । एकस्तावदयमुपायः । अपरश्च तत्रभवत्या आदरणीयायाः उर्वश्याः प्रतिकृतिं प्रतिरूपं चित्रफलके अभिलिख्य आलोकयन् प्रेक्षमाणः आत्मानं विनोदय अथवा आलेख्ये तस्याः प्रतिमानं लिखित्वा कुरु तावत् स्वमनोरञ्जनम् ।

पूर्वोपायदर्शने भवानिति पदस्य, परत्र च विनोदयेत्यत्राध्याहृतस्य युष्मत्पदस्य प्रयोगेण विदूषकस्य सौहार्दवशान्निरङ्कुशत्वं गम्यते ।

उर्वशी—( सहर्षम् ) हीणसत्त हिअअ! समस्सस समस्सस ।
[ हीनसत्त्व हृदय ! समाश्वसिहि समाश्वसिहि । ]

राजा—तदुभयमप्यनुपपन्नम् ।

हृदयमिषुभिः कामस्यान्तःसशल्यमिदं सदा
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् ।
न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां
मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ १० ॥

---

उर्वशी—सहर्षम्—राज्ञा चिन्त्यमाना प्रिया अहमेवास्मि नान्येति सहर्षम् कुतः अन्यनारीशङ्कासमाधानात् । श्रुत्वा त्विदं वचनम् उत्ताम्यदात्मनो हृदयं तदा सा सम्बोधयति । रे हीनसत्त्व अधीर हृदय । किञ्चित् समाश्वसिहि समाश्वसिहि । विश्रब्धं भव । धैर्यं धर । शान्तिं लभस्व ।

राजा—तदुभयमप्यनुपपन्नम् । माणवकं प्रति इयमुक्तिः । त्वया प्रदर्शितमुपाययुग्मं अपि अनुपपन्नम् अनुचितम् असम्भवात् । नान्यतरोऽपि कर्तुं शक्यत इत्युपपादयितुं तत्र हेतुं दर्शयति—

हृदयमिति—हे सखे मित्र ! कामस्य मनोजस्य इषुभिर्बाणैः इदं मदीयं हृदयं सदा सर्वकालं अन्तःसशल्यं व्यथितमस्ति । अस्यां दशायाम् स्वप्ने प्रियया सह समागमकारिणीम् निद्रां कथमुपलभे प्राप्नोमि न कदापीति भावः । यदा मम हृदयं मनोजपीडितं वर्तते तदा कथं निद्रामहं लप्स्ये इति सारः । अनेन पूर्वार्धेन विदूषकेण प्रदर्शितस्तावद् प्रथमोपायो निराकृतः । सुन्दरं वदनं मुखं यस्याः सा तादृशीं सुमुखीं प्रियां आलेख्ये चित्रफलके लेखनविधौ असमाप्य मम नयनयोरुद्बाष्पत्वं प्रादुर्भूताश्रुत्वं न भविष्यतीति न, अपि तु भविष्यत्येव । चित्रफलके यदि अहं तस्याः प्रतिकृतिं लिखामि तदा यावता समयेन लेखनविधिः समाप्तिं गमिष्यति तस्य पूर्वमेव मम नयनाभ्यामश्रुपातः न निर्गमिष्यतीति न, अपि तु लिखतः एव मम नयनाभ्यामश्रुवृष्टिर्भविष्यति तेनाहं प्रतिकृतिमपि समापयितुं न पारयामि । अनेन द्वितीयश्चाप्युपायः अपाकृतः । तात्पर्यं तु-व्यथितचेतसः पुरुषस्य निद्रागमनमसम्भवम् । अश्रुनिरुद्धनेत्रस्य प्रतिमालेखनमपि न घटत इति ।

अन्तःसशल्यमिति । शल्यं नाम शङ्कुः कण्टकम् वा "शल्यं तु न स्त्रियां शङ्कौ" इति मेदिनी । शल्येन सह इति सशल्यम् अन्तः सशल्यमिति अन्तःसशल्यम् विद्धम् इति पर्यायः । उद्बाष्पत्वम्—बाष्पम् अश्रु । उद्गतानि बाष्पाणि ययोरिति उद्बाष्पे तयोर्भावः उद्बाष्पत्वम् निर्गताश्रुत्वम् ।

बाष्पम्—बाधृ निरोधे । निरोधार्थकबाधृधातोः षः प्रत्ययः । तस्मात् बाष्पमिति रूपम् "खष्पशिल्पशष्पबाष्परूपपर्पतल्पा" इति वचनप्रामाण्यात् । ( उणादिके तृतीयपादे अष्टाविंशतितमम् सूत्रम् । )

**चित्रलेखा**—सहि, सुदं तुए वअणम ? [ सखि ! श्रुतं त्वया वचनम् ? ]

**उर्वशी**—सुदम् । ण उण पज्जत्तं हिअअस्स । [ श्रुतम् । न पुनः पर्याप्तं हृदयस्य । ]

**विदूषकः**—एत्तिओ मे मदिविहओ । [ एतावान् मम मति-विभवः । ]

**राजा**—( सनिःश्वासम् )

नितान्तकठिनां रुजं मम न वेद सा मानसीं
प्रभावविदितानुरागमवमन्यते वापि माम् ।

---

हरिणीवृत्तम्—लक्षणं तु यथा "रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इति । षड्भिस्ततश्चतुर्भिस्ततः सप्तभिर्यतिः । यदा नगणसगणौ मगणरगणौ सगणः लघुर्गुरुश्च भवन्ति तदा हरिणी नाम छन्दः स्यात् । वृत्तमिदं परमेव हृदयव्यथाव्यञ्जकम् भाव्यरसानुरूपम् ॥ १० ॥

**चित्रलेखा**—सखि ! श्रुतं त्वया वचनम् । यत्त्वद्विरहेण कियान् कातरोऽयं महाभागः ।

**उर्वशी**—श्रुतम् । किन्तु मम हृदयस्य पर्याप्तम् न । तथापि असन्तुष्टं हृदयम् । अधिकं श्रोतुमिच्छामीति तस्या आकूतम् ।

**विदूषकः**—एतावान् एव मम मतिविभवः विचारशक्तिः । अतःपरं नाह-मुपायान्तरं चिन्तयितुं शक्नोमि ।

**राजा**—सनिःश्वासम्-व्यथां व्यञ्जयन्—

**नितान्तेति**—स्वप्रियामेवाधिक्षिपति नायकः तस्या निर्दयित्वशंसनात् । सा तत्रभवती उर्वशी मम मानसीं मनोभवां नितान्तं कठिनां दुःसहां रुजं व्यथां न वेद ज्ञातवती । यदि अभविष्यत् सानुकम्पा सा तदा तु जानन्ती ममेतादृशीं विरहव्यथां अवश्यमेव दर्शनं मह्यमदास्यदेव । तेनेत्थमनुमिनोमि यत् तया मम व्यथा एव न ज्ञाता । अपरः कल्पः—अथवा सा तु देवाङ्गना । ज्ञातुं प्रभवति स्वप्रभावात् मन्मनोव्यथाम् । तेन च सा स्वप्रभावेण विदितः अवगतः अनुरागः प्रेम यस्य सः एतादृशं माम् अवमन्यते तिरस्करोति मम अवहेलनां वा करोति । यदि तया ज्ञातं तस्या कृते ममायमनुराग इति तथापि च दर्शनेन मां न सम्भावयति तदा तु सा अवश्यमेव मां न्यग्भावयति । यदि सा अपि मामित्थमेवाभि(वाञ्छति)लष्यात् तदा तु नावगणिष्यदेव माम् इति भावः । अपरार्धेनात्मनो नैराश्यमसूचयत्—

अलब्धफलनीरसं मम विधाय तस्मिञ्जने
समागममनोरथं भवतु पञ्चबाणः कृती ॥ ११ ॥

---

अन्यतरेणापि हेतुना तस्मिञ्जने मम समागममनोरथं सम्मेलनेच्छां अलब्धं अप्राप्तं यत्फलं तेन नीरसं निष्फलं विधाय पञ्चबाणः कृती स्वेप्सितसाधनपटुर्भवतु। यदि मम समागमाभिलाषः निष्फलत्वेन नीरसः भवेत्तदा तादृङ्नीरसतां समुत्पाद्य कामो निकामं सकामः स्यात्। यतः तद्विरहे तु नूनमहं पञ्चत्वं गमिष्यामि। तेन च सोऽपि कामः स्वीयबाणगतपञ्चत्वं माम् पञ्चत्वं गमयन् सार्थकं करोतु इति भावगाम्भीर्यमुद्दिश्येह तत्रभवता कविना कामवाचकानि अन्यानि पदानि अनादृत्य पञ्चबाणपदमेव स्वीकृतम्।

सरलार्थस्तु—आदौ तु तया ममेतादृशी विरहव्यथा अस्तीति नावगतेव दृश्यते यतः तया दर्शनप्रदानेन नाहं सम्भावितः। अथवा यदि तया स्वप्रभाव-विशेषेण मम प्रीतिर्ज्ञाता तदा तु सा 'अहं देवाङ्गनाऽस्मि कथमिमं मानुषं वृणोमीति' विचार्य मामवगणयति। यदि अनयोरन्यतरोऽपि सत्यः स्यात् तस्याश्च मे सङ्गमो न भवेत्तदा तु कामदेवो माम् पञ्चत्वं प्रापयन् स्वस्य पञ्चबाणत्वं सफलीकरोतु नाम, यतोऽतः परं तस्याः समागमं विना मम जीवधारणमध्रुवमेव इति।

अलब्धफलत्वात् नीरसमिति अलब्धफलनीरसम्। कृतमनेनेति कृती।

अत्र पूर्वार्धे तस्या इहागमनाभावस्य कारणे सन्देहात् ससन्देहालङ्कारः। तथात्र अलब्धफलनीरसमित्यत्र फलाप्राप्तौ तु मरणमेव शरणं स्यात् तेन च पञ्चबाणस्य बाणपञ्चकस्वीकरणं सफलमेव स्यादिति फलध्वनिः। पुष्पधन्वनः पञ्चबाणाः— "अरविन्दमशोकं च चूतं च नवमल्लिका। नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः" इति। अथवा "सम्मोहनोन्मादनौ च शोषणस्तपनस्तथा। स्तम्भन-श्चेति कामस्य पञ्च बाणाः प्रकीर्तिताः"। अत्रोपायान्तरदर्शनाभावात्तपनं नाम प्रतिमुखसन्ध्यङ्गम्। यदाह विश्वनाथः—"उपायादर्शनं यच्च तपनं नाम तद्भवे"दिति।

अत्र पृथ्वी वृत्तम्-यदुक्तम् "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः"। जगणसगणौ जगणसगणयगणाः लघुरेको गुरुश्च यत्र भवन्ति तत् पृथ्वी नाम छन्दः। तथा अत्र अष्टभिस्ततो नवभिर्विरामः कार्यः। पद्येऽस्मिन् पृथ्वीवृत्त-लक्षणसमन्वये विहिते द्वितीयचरणस्य यतिविच्छेदस्तावदेवं भवति यथा—

प्रभावविदितानुरागमवमन्यते वापि माम् ॥

इह पूर्वभागस्याष्टाक्षरत्वमुत्तरस्य च नवाक्षरमयत्वम्। 'अनुरागपदे' च एकस्य गकाराक्षरस्योत्तरभागे समावेशादत्र यतिभङ्गाख्यो दोषः, यथा पिङ्गलनागप्रोक्ते यतिर्विच्छेदेति सूत्रे (६।१) भट्टहलायुधेन स्मृतं यत् "क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत्, यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ" इति। अत्रा-परभागस्तु एकवर्णक एव। अस्य च दोषस्य "अपि माषं मषं कुर्याच्छन्दोभङ्गं न

**चित्रलेखा**—सुदं तुए ? [ श्रुतं त्वया ? ]

**उर्वशी**—हद्धी हद्धी ! मं वि एव्वं अवगच्छदि । सहि ! असमत्थम्हि अग्गदो भविअ अत्ताणअं दंसिदुम । ता पहावणिम्मिदेण भुज्जवत्तेण लेहं संपादिअ अन्तरा खिविदुमिस्सामि । [ हा धिक् हा धिक् । मामप्येवमवगच्छति । सखि ! असमर्थास्म्यग्रतो भूत्वात्मानं दर्शयितुम् । तत्प्रभावनिर्मितेन भूर्जपत्रेण लेखं सम्पाद्यान्तरा क्षेप्तुमिच्छामि । ]

**चित्रलेखा**—अणुमदं मे । [ अनुमतं मे । ]

( उर्वशी नाट्येनाभिलिख्य क्षिपति )

---

कारये"दिति न्यायाद् वर्जनीयत्वात् समाधानं "उपेक्षन ममापि वा प्रणयमात्मशक्तीरितम्" इति पाठेन विधातुं शक्यम् । एवञ्च समाहिते अवहेलनायाः पुरुषविशेषनिरपेक्षमनुरागस्य विषयीभूतत्वात् विधेयस्य समासे गुणीभूतस्य पृथङ्निर्देशादापन्नस्याविमृष्टविधेयांशस्यापि दोषस्य परिहारः स्यात् किन्तु, वस्तुतोऽत्र उभौ एवैतौ दोषौ वक्तृविशेषमुखापतितौ विरहखिन्नस्य नायकस्य हार्दिकोद्वेगं व्यञ्जयन्तौ कामप्यभिख्यां पुष्णन्तौ गुणाय प्रकल्पेते, यथा पण्डितराजो जगन्नाथः पीयूषलहर्यां आत्मनः खेदातिरेकं गमयितुं यतिभङ्गेन आह—

तवालम्बादम्ब स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञापुरपथमनीयन्त विबुधाः ।
इदानीमौदास्यं यदि भजसि भागीरथि तदा
**निराधारो हा रो-दिमि** कथय केषामिह पुरः ॥११॥ (शिखरिणी)

**चित्रलेखा**—श्रुतं त्वया–कथं त्वमुपालभ्यसे इति ।

**उर्वशी**—हा धिक् धिक् इति विगर्हणे । मामेवायं महानुभावः एवं नितान्तकठिनवेदनाज्ञानवर्तीं, ज्ञानेऽपि वा तमवमन्यमानां अवगच्छति विचारयति । अस्मात्कारणात् हे सखि ! अग्रतो भूत्वा अस्य सम्मुखीभूय आत्मानं दर्शयितुं असमर्थास्मि ।

यत अनेनाहमीदृशी निष्ठुरा कल्पिता तत असाम्प्रतमिदं सम्प्रति अस्य पुरोगमनम् । अत एव प्रभावनिर्मितेन प्रभावविशेषेण समुत्पादितेन भूर्जपत्रेण लेखं सम्पाद्य लिखित्वा अन्तरा अनयोर्महाभागतन्मित्रयोर्मध्ये क्षेप्तुमिच्छामि । इति मदनलेखं लिखितुं विचारयति ।

**चित्रलेखा**—अनुमतं मे । सहमताऽस्मि तवाऽस्मिन् विचारे ।

( उर्वशी नाट्येन लेखनविधिं निरूप्य अभिलिखति क्षिपति च )

**विदूषकः**—अविद अविद भो, किं णु एदम् । भुअङ्गणिम्मोओ किं मं खादिदुं णिवडिदो [ अविदाविद भोः ! किं न्वेतत् ! भुजङ्गनिर्मोकः किं मां खादितुं निपतितः ? ]

**राजा**—( दृष्ट्वा ) नायं भुजङ्गनिर्मोकः । भूर्जपत्रगतोऽयं अक्षरविन्यासः ।

**विदूषकः**—णं क्खु अदिट्ठाण उव्वसीए भवदो परिदेविअं सुणिअ भुज्जवत्ते अणुराअसूअआ अक्खरा अहिलिहिअ विसज्जिआइं भवे । [ ननु खल्वदृष्टया उर्वश्या भवतः परिदेवितं श्रुत्वा भूर्जपत्रेऽनुरागसूचकान्यक्षराण्यभिलिख्य विसर्जितानि भवेयुः । ]

**राजा**—नास्त्यगतिर्मनोरथानाम् ( गृहीत्वानुवाच्य च सहर्षम् ) सखे ! प्रसन्नस्ते तर्कः ।

**विदूषकः**—जं एत्थ अहिलिहिदं तं सुणिदुं इस्सामि । [ यदत्राभिलिखितं तं श्रोतुमिच्छामि । ]

---

**विदूषकः**—अविद अविद भोः ! ज्ञायतां ज्ञायतामिति । "अदृष्टाश्रुतसम्प्राप्तावविदाविद भोः पदम्" इति सागरोक्तेः । अस्य विस्मयावबोधकस्याव्ययस्य अदृष्टाश्रुतसम्प्राप्तिरूपोऽर्थः । किं नु एतत् इति विस्मयः । भुजङ्गनिर्मोकः किम् भोः मां खादितुं निपतितः । भुजङ्गस्य निर्मोकः कञ्चुकः ( कांचली इति भाषायाम् 'Slough' इति आङ्ग्लाः ) "निर्मोको मोचने व्योम्नि सन्नाहे सर्पकञ्चुके" इति कोशः ।

**राजा**—( दृष्ट्वा ) । नायं भुजङ्गनिर्मोकः किन्तु भूर्जपत्रगतोऽयं अक्षरविन्यासः । किमपि भूर्जपत्रे लिखितमस्तीति भावः । ( भोजपत्र इति भाषा—Birch इति आङ्ग्लाः ) ।

**विदूषकः**—ननु खलु इति वितर्के । सम्भवमिदं यत्, अदृष्टया उर्वश्या भवतः परिदेवितं विलापं श्रुत्वा भूर्जपत्रेऽस्मिन् अनुरागसूचकानि प्रेमप्रदर्शकाणि अक्षराणि अभिलिख्य विसर्जितानि पातितानि भवेयुः इति तर्क्यते । मदनपत्रिकेयं भवेदिति भावः ।

**राजा**—मनोरथानामगतिरविषयः किमपि न । यत्र कुत्रापि मनोरथानां गतिरस्तीति भावः । सम्भवमिदं नु स्यात् इति तात्पर्यम् । एतदेव शाकुन्तलेऽपि—"मनोरथानामतटप्रपातः" इति । ( भूर्जपत्रं गृहीत्वा अनुवाच्य मनस्येव पठित्वा प्रियालेखत्वात्सहर्षम् ) सखे माणवक ! प्रसन्नस्ते तर्कः—यत्त्वया तर्कितमासीत् तत्तु तथैव । शुद्धस्तेऽनुमानः ।

**विदूषकः**—यदत्र भूर्जपत्रे लिखितं तत् श्रोतुमिच्छामि ।

**उर्वशी**—साहु साहु अज्ज ! णाअरोसि । [ साधु साधु आर्य ! नागरोऽसि । ]

**राजा**—श्रूयताम्—

( इति वाचयति )

सामिअ संभाविदआ जह अहं तए अमुणिआ
तह अ अणुरत्तस्स सुहअ एअमेअ तुह ।
णवरि अ मे ललिअपारिआअसअणिज्जम्मि
होन्ति सुहा णंदणवणवाआ वि सिहि व्व सरीरे ॥ १२ ॥
[ स्वामिन् सम्भाविता यथाहं त्वयाज्ञात्री
तथा चानुरक्तस्य सुभग एवमेव तव ।
अनन्तरं च मे ललितपारिजातशयनीये
भवन्ति सुखा नन्दनवनवाता अपि शिखीव शरीरे ॥ १२ ॥ ]

---

**उर्वशी**—साधु साधु-त्वया साधूक्तम् । आर्य ! नागरोऽसि चतुरोऽसि, यदेवं परस्परालम्बनयोः प्रीतिप्रसरः श्रोतुमिष्यते त्वया ।

**राजा**—श्रूयताम्—यदत्र लिखितमिति शेषः ।

( इति वाचयति—यदत्र लिखितं तत् पठति । )

**उर्वशी—सामिअ इति**—हे स्वामिन् प्राणेश्वर ! यथा अहं त्वया अज्ञात्री त्वदीयपीडामजानती सम्भाविता कल्पिता तत्तु हे सुभग ! मयि अनुरक्तस्य तव एवमेव सत्यम् । "नितान्तकठिनामिति" ( १-११ ) इति पद्ये प्रतिपादितां मद्वि-योगवेदनां भवदीयां अहं न ज्ञातवती अत एव यद् भवता परिकल्पितं यद् मया न ज्ञाता भवेत् भवदीया विरहवेदना इति तत्तु सत्यम् एव । मया तु भवतः मद्विषयका प्रीतिस्तु न ज्ञातैव । अनन्तरं ज्ञातायां तु भवद्वेदनायां ललितं सुन्दरं कोमलं यत् पारिजातकुसुमविशेषनिर्मितं शयनीयं शय्या यदर्थमिति एतादृशि मम शरीरे सुखाः सुखशान्तिप्रदाः नन्दनवनवाताः नन्दनाख्ये अमरपुरवने पवमाना अत्यन्त-शीतला अपि वाताः शिखीव अग्निरिव दाहका अभवन् । यतःप्रभृति मदनुराग-केन्द्रस्य भवतः मदर्थमेतादृशीं पीडां बोधितवती ततःप्रभृति कुसुमशय्यामधि-शयाने मदीयशरीरे नन्दनवने वहन्तोऽपि मन्दमन्दममन्दामोदवन्तोऽपि वाताः अग्निरिव देहदाहकाः समपद्यन्त । इति स्वीयमनुरागं तस्मिन् प्रकाशयन्ती तदीयोपालम्भविषयितां आत्मनो निराचकार । पारिजातेति पदस्वीकारेण सुरद्रुम-प्रसूनैः निर्मितेऽपि शयनीये मम विरहव्यथानल्पा आसीदिति भावः ।

शिखीवेत्यत्र दाहकत्वरूपधर्माप्रदानेन धर्मलुप्तोपमालङ्कारः । कुसुमशयनीयत्व-प्रदानेन च शरीरस्य शिरीषप्रसूनाधिकसौकुमार्यवत्त्वं व्यक्तम् । नन्दनवनवाता

**उर्वशी**—किं णु संपदं भणिस्सदि ? [ किं नु साम्प्रतं भणिष्यति ?]

**चित्रलेखा**—किं णु । भणिदं एव्व एदेण मलाणकमलणालोवमेहिं अंगेहिं । [ किं नु । भणितमेवैतेन म्लानकमलनालोपमैरङ्गैः । ]

**विदूषकः**—दिट्ठिआ मए क्खु बुभुक्खिदेण सोत्थिवाअणिअं विअ लद्धं भवदो समस्सासणकारणम् । [ दिष्ट्या मया खलु बुभुक्षितेन स्वस्तिवाचनिकमिव लब्धं भवतः समाश्वासनकारणम् । ]

**राजा**—समाश्वासनमिति किमुच्यते ।

तुल्यानुरागपिशुनं ललितार्थबन्धं
पत्रे निवेशितमुदाहरणं प्रियायाः ।
उत्पक्ष्मलं मम सखे मदिरेक्षणाया-
स्तस्याः समागतमिवाननमाननेन ॥ १३ ॥

---

अपि शिखीव भवन्तीत्यनेन मदनव्याधिः परः प्रकाशते । नायकस्यावमाननं उत्तमा नायिका न कदापि करिष्यतीति विज्ञापयितुं पूर्वार्धे तया नायकस्य प्रथमस्तावत् सन्देहो यथार्थ इति स्वीकृतम्, अनेन नायिकायाः साधारणत्वेऽप्युत्तमत्वं ध्वनितम् । "णवरि" इति प्राकृतं अनन्तरार्थे रूढम् । अत्र लेखो—"विवक्षितार्थकलिता पत्रिका लेख उच्यते" । भावाभिव्यक्तेरयं प्रथमः प्रकारः । इदं चतुष्पदीच्छन्दः ॥ १२ ॥

**उर्वशी**—विचारयति । साम्प्रतं इदं पठित्वा किं नु भणिष्यति कथयिष्यति । नु इति वितर्के । अनेनौत्सुक्यातिशयं व्यज्यते ।

**चित्रलेखा**—किं नु इति सन्देहानपेक्षा । एतेन नायकेन म्लानकमलनालसदृशैः स्वकैरङ्गैः कथितम् एव । यदस्याङ्गानि म्लानानि जातानि तेनास्य क्षीणता प्रकाशिता । इह नायको नूनमन्तःपिहितमदनविकारोऽस्तीति युक्तियुक्तवाक्याभिधानेनाप्रत्यक्षार्थस्य साधनात् विचारो नाम नाटकलक्षणम्—यदुक्तं दर्पणे—"विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थसाधनम्" इति ।

**विदूषकः**—दिष्ट्या महद्भाग्यमेवैतत् । यथा बुभुक्षितस्य क्षुधितस्य कृते स्वस्तिवाचनिकमुपहारः भोज्यं वा लब्धं भवेत्, तथैव भवतोऽपि किमपि समाश्वासकारणम् प्रियालिखितमिदं प्रेमपत्रम् मया प्राप्तम् । तत्समाश्वसिहीति भावः । स्वस्तिवाचनिकं लाभकारी, अनेन इह भोज्यमित्यर्थः ।

**राजा**—समाश्वासनमिति किमुच्यते । कुतो न भविष्यति सान्त्वनम्—यतः हेतुरेवेदं तस्य । यतः-**तुल्येति** । हे सखे ! प्रियाया उर्वश्यास्तुल्यः समानो योऽनुरागस्तस्य पिशुनं सूचकम्; ललितः सुन्दरो योऽर्थः तस्य बन्धः निवेशो वाक्यरचना वा यस्मिन् तत् रमणीयभावं उदाहरणमुक्तिः अनङ्गलेखो वा पत्रे

**उर्वशी**—एत्थ णो समभाआ मदी । [ अत्रावयोः समभागा मतिः । ]

**राजा**—वयस्य ! अङ्गुलीस्वेदेन मे लुप्यन्तेऽक्षराणि । धार्यतां अयं स्वहस्ते निक्षेपः प्रियायाः ।

---

भूर्जपत्रे निवेशितम् लिखितम् । तत्तु अहं तस्याः अनुपमसौन्दर्यालङ्कृतायाः मदिरेक्षणायाः मदघूर्णितलोचनायाः उन्नते पक्ष्मले नेत्रलोमनि यस्मिन् तादृशं विस्फारितलोचनमाननं मम आननेन मुखेन समागतमिव मन्ये । तात्पर्यं तु—अस्य पत्रस्य प्राप्तिं प्रियासमागमनात् अन्यूनामिव मन्ये—प्रियासङ्गममेव मन्ये । एतत् पत्रं तु किं लिखितं, प्रियासमागम एव जात इति भावः । अनेन विरहातिरेकः गम्यते । यथा कश्चनात्यन्तिकवियोगविधुरः प्रेयस्या साक्षात् समागमेऽसम्भवे सति, तल्लेखप्रतिमादर्शनादिकमेव तत्समागममेव मन्यते, एवमेवात्र मन्वानस्य विप्रलम्भविधुरस्य तस्य विक्रमस्यानेन अतिशयप्रेमाभिव्यञ्जकं वियोगदुःसहत्वं ध्वन्यते । अत्र च पत्रे तदाननत्वसम्भावनयोत्प्रेक्षालङ्कारः । अत्र पुष्पं नाम सन्ध्यङ्गम् "पुष्पं विशेषवचनं मतम्" । पिशुनपदस्य अभिव्यञ्जकत्वरूपोऽप्यर्थः "पिशुनौ खलसूचकौ" इति त्रिकाण्डशेषः । मायत्यनयेति मदिरा इति मदि हर्षे ( दिवादिः परस्मै सेट् ) धातोः "इषिमदिमुदि" ( उ. १।५१ ) इत्यादिना किरचान्तव्युत्पत्तेः मदिरामदविघूर्णन्नयनाया नायिकाया दर्शनात् हर्षः मदश्च जायते इति विशेषार्थबोधः । "सौष्ठवेनापरित्यक्ता स्मरापाङ्गमनोहरा । वेपमानान्तरा दृष्टिर्मदिरा परिकीर्तिता" इति सङ्गीतकलिकायाम् ॥

वसन्ततिलका वृत्तम् "उक्ता वसन्ततिलका तभजा जगौ गः" तकारभकारजकाराः यत्र सगुरुद्वया भवन्ति तत्र वसन्ततिलकाख्यं वृत्तम् । पादान्ते च यतिः ॥ १३ ॥

**उर्वशी**—( चित्रलेखां प्रति ) अत्र आवयोः समभागा समाना अनुकूला वा मतिः । यत् त्वयोक्तं "अस्य म्लानैः अङ्गैः भणितमेवैतत्" इति यथार्थमेव ॥

**यद्वा**—( विक्रममुद्दिश्यात्मगतमेव ) एतस्य दर्शनेन आवयोः समागतमिवाभवत् इति यत् भवद्भिः भणितम् तत्तु मम विचारानुकूलमेव । अत्रावयोः सदृश एव विचारः ।

**राजा**—वयस्य माणवक ! मे अङ्गुलीजन्येन स्वेदेन अक्षराणि ( अस्मिन् पत्रे लिखिताक्षररचना ) लुप्यन्ते परिमृष्टानि भवन्ति ॥ लोपस्तु अविद्यमानता—"अदर्शनं लोपः" इति कौमुदी । अक्षराणि नष्टानि दुर्वाच्यानि वा भवन्ति । अत इति शेषः । प्रियायाः मम अयं निक्षेपः न्यासः स्वहस्ते धार्यताम् । निक्षेपपदेन पुनरेतद् दर्शनीयं देयं वा भवेत् इति सूचयति । साक्षात्समागमवेलायां कदापि भविष्यत्यस्यापेक्षा वा इति भावः ।

**विदूषकः**—( गृहीत्वा ) तदो किं तत्तभोदी उव्वसी भवदो मणोरहतरुकुसुमं दंसिअ फले विसंवदिस्सदि ? [ ततः किं तत्रभवती उर्वशी भवतो मनोरथतरुकुसुमं दर्शयित्वा फले विसंवदिष्यति ? ]

**उर्वशी**—हला ! जाव उवत्थाणकादरं अत्ताणअं समवत्थावेमि, ताव तुमं अत्ताणअं दंसिअ जं मे अणुमदं तं भणाहि । [ सखि ! यावदुपस्थानकातरमात्मानं समवस्थापयामि, तावत्त्वमात्मानं दर्शयित्वा यन्मेऽनुमतं तद्भण । ]

**चित्रलेखा**—तहा । [ तथा । ] ( इति तिरस्करिणीमपनीय राजानमुपसृत्य ) जेदु जेदु महाराओ । [ जयतु जयतु महाराजः । ]

**राजा**—( सम्भ्रमादरगर्भम् ) स्वागतं भवत्यै ( पार्श्वमवलोक्य ) भद्रे !

---

**विदूषकः**—( गृहीत्वा-तत्पत्रमिति भावः ) ततः परस्परालम्बनत्वेऽपि किम् तत्रभवती मान्या उर्वशी भवतः मनोरथः एव तरुः तस्य फलागमसूचकं कुसुमं प्रदर्श्य पश्चात् फले विसंवदिष्यति मिथ्या भविष्यति । कुसुमागमानन्तरं क्वचिदेवेदं भवति यत् तरुषु फलं न दृश्येत । तथैव तदुपलब्धिरूपभवन्मनोरथानोकहे एतत्पत्रप्रेषणरूपकुसुमं प्रदर्श्य किं सा उर्वशी समागमरूपफले मिथ्यात्वं प्राप्स्यते। प्रायः नैतत्सम्भवमिति भावः । अत्र उर्वश्याः तत्रभवतीति विशेषणम् परं साकूतम्, मान्यस्यैतादृशः फलविसंवादः अयोग्य एव इति सामान्यवस्तुज्ञापनात्, अत एवात्र परिकरालङ्कृतिः । यथा कुसुमदर्शनानन्तरं तरुषु नान्तरीयकतया फलावगमः, एवमेव पत्रप्रेषणमनु नूनं समागमो भावीति साम्यादभूतार्थस्य कल्पनादिह अभिप्रायो नाम नाटकलक्षणम्—'अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पनेति' वचनात् । मनोरथतरुरित्यत्र रूपकम् । फले न कदापि विसंवदिष्यतीति तात्पर्यावगमादर्थापत्तिरलङ्कारश्च । एतेषां च संसृष्टिः ॥

**उर्वशी**—सखि चित्रलेखे ! यावता समयेन उपस्थाने उप तस्य समीपे स्थाने स्थितौ तत्समीपागमे कातरं भीरुं आत्मानं समवस्थापयामि समाश्वासयामि तावता कालेन त्वं आत्मानं दर्शयित्वा तिरस्करिणीं विहाय सर्वलक्ष्या भूत्वा यत् मे मम अनुमतं वाञ्छितं तद्भण तत् सर्वं तस्मै विज्ञापय । भावाभिव्यक्तेरयमपरः प्रकारः यथाह विश्वनाथः—'दूतीसम्प्रेषणैर्नार्या भावाभिव्यक्तिरिष्यते' ।

**चित्रलेखा**—तथा-उचितम्, तथैव करोमि । ( इति तिरस्करिणीं अलक्ष्यतामपनीय दूरीकृत्य राजानमुपसृत्य ) जयतु जयतु महाराजः । जयपाठेन महाराजस्य कल्याणशंसनं करोति ।

**राजा**—( सम्भ्रमः विस्मयजन्यं भयम् तत्सहितं चित्रलेखाविषये आत्मनः प्रियायाः सखित्वात् आदरं प्रदर्श्य ) स्वागतं भवत्यै—इति समुदाचारः । ( पार्श्वमवलोक्य इत आस्यताम् इति बोधयति ) भद्रे कल्याणिनि !

न तथा नन्दयसि मां सख्या विरहिता तया ।
सङ्गमे दृष्टपूर्वेव यमुना गङ्गया यथा ॥ १४ ॥

**चित्रलेखा**—णं पढमं मेहराई दीसदि, पच्छा विज्जुलदा ।
[ ननु प्रथमं मेघराजिः दृश्यते, पश्चाद्विद्युल्लता । ]

**नेति**—तया मद्बुद्धिस्थप्रकारावच्छिन्नया पूर्वदृष्टया अपूर्वया अनुपमसौन्दर्यया उर्वश्या विरहिता विहीना त्वं मां तथा तादृक् न नन्दयसि आनन्दयसि । तां विना त्वदागमनं न मदानन्दहेतुः, तद्विरहात् आनन्दात्यन्ताभावात् । यथा सङ्गमे प्रयागे दृष्टपूर्वा यमुना पश्चात् गङ्गया विहीना दृष्टा सती न तथा तादृशं आनन्दं ददाति । यथा वा गङ्गायमुनयोः सङ्गमे दृष्टशोभा यमुना यदि गङ्गां विना पुनरपि दृष्टा चेत् न सा तादृशीमभिख्यां धत्ते न च प्रेक्षकान् नन्दयति तथैव उर्वश्या विना एकाकिनी त्वं मदाल्हादजनयित्री भवितुं नार्हसि इति भावः । अत्र उपमालङ्कारः । विनार्थसम्बन्धात् विनोक्तिश्च । अनेन गङ्गासदृशत्वप्रतिपादनेन नायिकायाः शुभ्रत्वं परमगाम्भीर्यं च सूच्यते । अत्र पूर्वार्धे तथेति पदम् उत्तरार्धगतस्य यथेतिपदस्य सहकारित्वात् केवलमौपम्यसूचकं न, परन्तु तथेति पदमत्र नन्दयतेः आनन्दनव्यापारस्य इयत्तासूचकं परिमाणबोधकं क्रियाविशेषणम् । यावदानन्दमुर्वशीसहकृता त्वं ददासि न तावत्त्वं तदसहकृतेति भावः, अतएव तथेति क्रियाविशेषणस्य उपमेयोपमानोभयकोट्योः अन्वयो विधेयः । सरलार्थस्तु—यथा प्रयागे गङ्गया सह सङ्गता यमुना एकदा दृष्टा सती पश्चात् एकाकिनी दृष्टा चेन्न तादृक्प्रमोदहेतुर्भवति एवमेव कमनीयया कामिन्या प्रियसख्या उर्वश्या सह एकदा दृष्टा त्वमिदानीमेकाकिनी मिलिता सती तादृशं ( तावत्परिमाणकं ) मे विनोदं न विदधासीति उत्कण्ठितस्य नायकस्य आकूतम् ॥ अनुष्टुब् वृत्तम् ॥ १४ ॥

**चित्रलेखा**—ननु अवधारणे । प्रथमं मेघराजिः जलदपङ्क्तिः दृश्यते, पश्चात् विद्युल्लता । आदौ अहं दृष्टा पश्चात्सापि आगमिष्यति यथा प्रथमं मेघाः दृश्यन्ते पश्चात्तडिद्दर्शनम् । अनेन तस्यां विद्युत्त्वारोपणेन दीप्तिमत्त्वं, चाञ्चल्यम्, ईषत्कालपर्यन्तं स्थितिश्च तस्याः व्यज्यते । अत्र सुन्दरं कियदाह्लादकं परम्परितरूपकम् । यदि चित्रलेखायां प्रथमप्रादुर्भावात् मेघराजित्वारोपणं सम्पद्यते तदा तस्यामपि विद्युल्लतात्वारोपणं भवेदिति निगीर्याध्यवसानाद् रूपकातिशयोक्तिः । पूर्वं 'न तथा नन्दयसीति' पद्ये नायकेन उर्वशीचित्रलेखयोः दिव्याङ्गनयोः सततप्रवाहिन्योः नद्योः गङ्गायमुनयोरध्यवसानात् नायिकायाः गङ्गासदृशमत्रत्वं सातत्यं विज्ञापितमभूत् किन्तु वाक्केलिनिपुणया चित्रलेखया मेघपङ्क्तिविद्युल्लतयोरध्यवसानादचिरस्थायित्वं झगिति दृश्यमानत्वं आशुगामित्वमात्मनः ख्यापयन्त्या नायकोक्तिः प्रत्याख्याता; अनेन च पूर्ववद् युवयोः सम्मेलनमाशु भावि, परञ्च विरहोऽपि नूनं तथैवेति रसतन्त्रकोविदया दूत्या सम्यग् ध्वनितमित्यतो वक्रोक्तिचमत्कृतिरत्र विभावनीयेति रहस्यम् ॥

**विदूषकः**—( अपवार्य ) कहं ण एसा उव्वसी उवगदा ! तत्त-भोदीए उव्वसीए सहअरीए एदाए होदव्वम् । [ कथं नैषा उर्वश्युपगता ! तत्रभवत्या उर्वश्याः सहचर्यैतया भवितव्यम् । ]

**राजा**—एतदासनमास्यताम् ।

**चित्रलेखा**—उव्वसी महाराअं सिरसा पणमिअ विण्णवेदि । [ उर्वशी महाराजं शिरसा प्रणम्य विज्ञापयति । ]

**राजा**—किमाज्ञापयति—

**चित्रलेखा**—मम तस्सिं सुरारिसंभवे दुण्णए महाराओ एव्वं सरणं आसी । संपदं सा अहं तुह दंसणसमुत्थेण आआसिणा बलिअं बाधिअमाणा मअणेण पुणो वि महाराअस्स अणुकंपणीआ होमि । [ मम तस्मिन् सुरारिसम्भवे दुर्नये महाराज एव शरणमासीत् । साम्प्रतं साहं तव दर्शनसमुत्थेनायासिना बलवद्बाध्यमाना मदनेन पुनरपि महाराजस्यानुकम्पनीया भवामि । ]

---

**विदूषकः**—( मनस्येव उभयोर्वाक्प्रसरं निशम्य विचारयति ) कथं नैषा उर्वशी उपगता ! आदौ "जयतु जयतु" इति शब्दं श्रुत्वा तु तेन इयमेवोर्वशीति अनुमितमासीत् किन्तु उत्तरेण वाक्यार्थेन शङ्का समुत्पन्ना । तदा स विदूषको विचारयति । नेयमुर्वशी । भवेदियं तस्याः सखी इति ।

**राजा**—( चित्रलेखां प्रति ) इदमासनमास्यताम् । अत्रोपविशेति भावः ।

**चित्रलेखा**—उर्वशी महाराजं शिरसा प्रणम्य एतत् कथ्यमानं विज्ञापयति निवेदयति ।

**राजा**—किमाज्ञापयति । नायकः प्रेमवशात् तन्निवेदनम् अवश्यकरणीयत्वगुणसम्पन्नमाज्ञापनमिति मन्यते ।

**चित्रलेखा**—मम तस्मिन् ( प्रथमाङ्कोद्दिष्टे ) सुरारेः सम्भवः यस्य सः तस्मिन्, दैत्यकृते दुर्नये विप्लवे महाराज एव शरणं रक्षितासीत् । 'शरणं गृहरक्षित्रोः' इति कोषः । यदाहं केशिना दैत्येनापहृता तदा भवतैवाभयं दत्त्वा समुद्धृता । साम्प्रतं सैवाहं तव दर्शनात् समुत्थेन समुत्पन्नेन आयासिना संत्रासकेन मदनेन बलवद् अत्यन्तं बाध्यमाना पीड्यमाना पुनरपि यथापूर्वं महाराजस्यानुकम्पनीया दयनीया भवामि । यथा पुरा केशिबाधातः समुद्धृताऽहं तथैवाधुना भवद्दर्शनोत्पन्नेन कामेन सन्तप्ताहं दयनीयेति प्रार्थयति । अत्र चित्रलेखा उर्वश्याः दूतीत्वं स्वीकरोति ।

तथा च 'सुरारिसम्भवेति' परं च, दर्शनसमुत्थेनेत्यत्र एकत्र "भुवः प्रभवश्च" परत्र "जनिकर्तुः प्रकृतिः" इति सूत्रद्वयेन पञ्चमी ।

**राजा**—अयि सखि !

पर्युत्सुकां कथयसि प्रियदर्शनां ता-
मार्तिं न पश्यसि पुरूरवसस्तदर्थाम् ।
साधारणोऽयमुभयोः प्रणयो यतस्व
तां कौमुदीमिव समागमयेन्दुबिम्बे ॥ १५ ॥

**चित्रलेखा**—( उर्वशीमुपेत्य ) हला ! इदो एहि । णिभुअदरं भीसणं मअणं पेक्खिअ पिअदमस्स दे दूदिम्हि संवुत्ता । [ सखि ! इत एहि । निभृततरं भीषणं मदनं प्रेक्ष्य प्रियतमस्य ते दूत्यस्मि संवृत्ता । ]

---

**राजा**—अयि सखि !

**पर्युत्सुकामिति**—प्रियं दर्शनमवलोकनं यस्याः सा एतादृशी प्रियदर्शना मनोहारिणी तां त्वं पर्युत्सुकां मयि उत्कण्ठितां कथयसि । तथा च पुरूरवसः मम तस्यै इति तदर्थामार्तिं पीडां न पश्यसि । त्वं निवेदयसि यत् मनोहररूपा सा मनोजेन भृशं पीडिता किन्तु अहमपि तथैवास्मीति नाववुद्धं त्वया इत्यर्थः । यतः आवयोः पारस्परिकी समुत्कण्ठा विद्यते तदा त्वं कथं नावाम् सम्मेलयसीति—अयं प्रणयः प्रेम उभयोरावयोः साधारणः सामान्यम् । अतः कौमुदीं चन्द्रिकां इव तां इन्दुबिम्बे मयि समागमय सम्मेलय । तदर्थं यतस्व । यथा इन्दुबिम्बं चन्द्रिकायाः साहजिकं स्थानं तथैव कौमुदीसदृशायां तस्यां विश्लेषितायां स्वस्थानात्, त्वं तदीया सखी भूत्वापि कथं नावाम् समागमयसि । तदर्थं त्वया यत्नः कार्यः इति तां अभ्यर्थयते राजा ।

अत्र उर्वश्याः नयनानन्दकरत्वेन कौमुद्या सह साधर्म्यप्रदर्शनात् उपमालङ्कृतिः । इन्दुबिम्बेति प्रदानेन स्वस्य तदीयप्रेमपात्रत्वम् गम्यते । इह नायकस्य प्रणयपूर्णाया धृतेः सत्त्वात् द्युतिसमाख्यं प्रतिमुखसन्ध्यङ्गम्, यदुक्तं धानञ्जये—"धृतिस्तज्जाद्युतिर्मता" इति । ममेति पदमप्रयुज्य पुरूरवस इति अन्यपुरुष-सम्बोधनेन स्वीयमाहात्म्यं प्रकाशयन् "ममेति" कथनेन आगम्यमानं निर्लज्जत्वं वारयति । यत्नस्य साधारणप्रणयहेतुकत्वादत्र काव्यलिङ्गमलङ्कारः । वसन्ततिलका वृत्तम् ॥ १५ ॥

**चित्रलेखा**—( उर्वशीं तिरस्करिणीसमावृतामुपेत्य ) सखि ! इतः अस्मात् स्थानात् एहि गच्छ । निभृततरं अदृश्यं भीषणं परमनिर्दयं मदनं प्रेक्ष्य ते तव प्रियतमस्य विक्रमस्य दूती प्रियासङ्गमयित्री मदनसमाचारदात्री च अस्मि अहं संवृत्ता । मया नाम मदनेन भृशं पीडितस्य तव प्रियस्य प्रियाह्वानरूपं दूतीत्वमपि स्वीकृतम् । अत्रास्मीतिपदं उत्तमपुरुषवाचकं अव्ययम् ।

इह नायकस्य नायिकाविषये दूतिप्रयोगः । दूत्याः गुणास्तावदाह विश्वनाथ-पण्डितः—

उर्वशी—( तिरस्करिणीमपनीय ) अयि अणवत्थिदे ! लहु एव्व तुए परिच्चत्ताम्हि । [ अयि अनवस्थिते ! लघु एव त्वया परित्यक्तास्मि । ]

चित्रलेखा—( सस्मितम् ) एदस्सिं मुहुत्ते जाणिस्सामो को कं तजिस्सदि त्ति । आआरं दाव पडिवज्ज । [ एतस्मिन् मुहूर्ते ज्ञास्यामः कः कं त्यक्ष्यतीति । आकारं तावत् प्रतिपद्यस्व । ]

उर्वशी—( ससाध्वसमुपसृत्य सव्रीडम् ) जेदु जेदु महाराओ । [ जयतु जयतु महाराजः । ]

राजा—( सहर्षम् ) सुन्दरि !

---

"कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ।
माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ।"

इयं चेह दूती उत्तमा—यतः अनयेह परमौचित्यं कृतम् । भृशं पीडितयोर्नायकनायिकयोरवस्थां निरूप्य मेलनप्रकारः क्रियते इति ।—"एता अपि यथौचित्यमुत्तमाधममध्यमाः" तथा चेयं दूती निसृष्टार्था—"उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् । सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः"—स इति दूतः । एतदेव लक्षणं दूत्या अपि "कार्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधः" इति वचनप्रामाण्यात् ।

उर्वशी—( तिरस्करिणीं रूपगोपिनीं विद्यां अपनीय ) अयि अनवस्थिते ! अयि विशेषोत्साहत्वादविमृश्यकारिणि ! अहं त्वया लघु एव अल्पकालमेव [ लघ्व्या हीनया इव ( पाठान्तरम् ) ] परित्यक्ताऽस्मि । यद्यपि उर्वशी तस्याः सत्वरागमनं मनसि प्रशंसति तथापि उत्तमनायिकात्वात् स्वीयोत्साहं गोप्तुमनास्तामेवाधिक्षिपति ।

चित्रलेखा—( सस्मितं ) एतस्मिन् मुहूर्ते प्रियसङ्गमसमये ज्ञास्यामः कः कम् त्यक्ष्यति ।—कथं वा त्वं प्रियं सत्वरं परित्यक्तुं प्रभवसि । तत्प्रियं आकारं स्वरूपं तावदादौ प्राप्नुहि ।

त्वं तु विरहं असहमाना तत्प्रियस्वरूपं निरूप्य कथं तं त्यक्ष्यसीति वयं जानीमः इति उर्वशीकृतमधिक्षेपं प्रत्यधिक्षिपति । अत्र परिहासस्य गम्यत्वात् "नर्म" नाम सन्ध्यङ्गम् । यदुक्तं "परिहासवचो नर्म" । इति ।

उर्वशी—( ससाध्वसं राज्ञः तेजोविशेषात् सभयं उपसृत्य समीपं गत्वा । सव्रीडम् सलज्जम् प्रियदर्शनात् ) जयतु जयतु महाराजः । महाराजस्य जयमाकाङ्क्षती नायिका स्वीयप्रियस्योत्कर्षमभीप्सते ।

राजा—( सहर्षम्—प्रियालोकनात् ) सुन्दरि मनोरमे !

मया नाम जितं यस्य त्वयायं समुदीर्यते ।
जयशब्दः सहस्राक्षादागतः पुरुषान्तरम् ॥ १६ ॥

( हस्ते गृहीत्वा आसन उपवेशयति । )

**विदूषकः**—कीदिसी त्थिदी भोदीए रज्जे । पिअवअस्सो वम्हणो ण वन्दीअदि । [ कीदृशी स्थितिर्भवदीये राज्ये, प्रियवयस्यो ब्राह्मणो न वन्द्यते । ]

( उर्वशी सस्मितं प्रणमति । )

---

**मयेति**—मया नाम जितम्—सत्यमेव ममोत्कर्षः संजातः । अविन्थनेवोत्कर्षशाली अहम् । यतः पदमिदम् पुरा पुरन्दरप्रयोज्यमेवाभवत् साम्प्रतं तु मादृशि जने तस्य प्रवृत्तत्वात् सत्यमहमुत्कर्षशालीति भावः । तस्य हेतुमाह—यस्य पुरुषस्य त्वया तादृशया अयं जयशब्दः समुदीर्यते प्रोच्यते; यो जयशब्दः सहस्राक्षादिन्द्रात् पुरुषान्तरम् मामुपागतः प्राप्तः । अन्यः पुरुषः पुरुषान्तरः ।

अत्र सुमुखिमनोरमप्रियादिविविधपदोपादानविरहपूर्वकं केवलं सुन्दरीपदप्रदानेन परमादरणीयत्वं स्वलावण्येन चित्तद्रावकत्वं च व्यज्यते । सु द्रियते इति सुन्दरः 'दृङ् आदरे' ( तुदादि–आ. अ. ) "गृहवृह" ( ३।३।५८ ) इत्यादिना अप् प्रत्ययः । अनया व्युत्पत्त्या आदरणीयत्वं व्यज्यते । तथाच सु उनत्ति चित्तं द्रवीकरोति इति सुन्दः "उन्दी क्लेदने" ( रु. प. से. ) ततश्च बाहुलकादरः । "शकन्ध्वादिः" ( वा. ६।१।९४ ) तेन च सुन्दरः । पश्चात् "स्त्रियां गौरादित्वात्" ( ४।१।४१ ) इति सूत्रेण ङीष् । तेन सुन्दरीतिसम्बुद्ध्या हृदयद्राविरूपसम्पन्नत्वं नायिकाया व्यज्यते ।

तथा च "जेदु जेदु" इत्यतः "पुरुषान्तर"पर्यन्तम् नायकनायिकयोरुत्तरोत्तरसंवादेन "प्रगमनं" नाम प्रतिमुखसन्ध्यङ्गम्—यदुक्तं दर्पणे—"प्रगमनं वाक्यं स्यादुत्तरोत्तरम्" इति । अनुष्टुब्वृत्तम् ॥ १६ ॥

हस्ते गृहीत्वा तां आसने उपवेशयति । उपपूर्वकविशतेर्णिजन्तप्रयोगः । तेन च प्रेमातिशयं द्योत्यते ।

**विदूषकः**—उर्वशी राजानं प्रेक्ष्य प्रेमातिशयात् सर्वं समुदाचारं विस्मरन्ती तं भृशं निदिध्यायन्ती अन्तरे विदूषकोपालम्भे पतिता । भवदीये राज्ये कीदृशीयं स्थितिः यत् प्रियवयस्यो ब्राह्मणो न वन्द्यते । कोऽयं युष्माकं शिष्टाचारो यद् वन्दनीयस्य वन्दनरूपं सत्पथः अवमन्यते । अत्र 'हासः'—यल्लक्षणं–भाषणाकृतिवेषाणां क्रियायाश्च विकारतः । लौल्यादेश्च परस्थानामेषामनुकृतेरिति ॥ विकासश्चेतसो हासः ॥

( उर्वशी ईषद्धसन्ती विदूषकं प्रणमति । )

**विदूषकः**—सोत्थि भोदीए। [ स्वस्ति भवत्यै। ]

**देवदूतः**—चित्रलेखे ! त्वरयोर्वशीम्—

मुनिना भरतेन यः प्रयोगो
भवतीष्वष्टरसाश्रयो निबद्धः।
ललिताभिनयं तमद्य भर्ता
मरुतां द्रष्टुमनाः सलोकपालः ॥ १७ ॥

( सर्वे आकर्णयन्ति । उर्वशी विषादं रूपयति । )

---

**विदूषकः**—स च स्वीयधर्मानुसारं प्रणमन्त्यै तस्यै स्वस्तीति कल्याणकरेण वचसा मङ्गलमाशास्ते ।

**देवदूतः**—चित्रलेखे ! उर्वशीं त्वरय शीघ्रं सज्जीकुरु ! "ञित्वरा संभ्रमे" ( भ्वा. उ. से. ) तस्मात् लोटः प्रयोगः ।

**मुनिनेति**—मुनिना भरतेन नाट्यशास्त्रविधात्रा यः ( अष्टौ च ते रसाश्च अष्टरसा शृङ्गारप्रभृतयः आश्रयन्ते यस्मिन् इति ) अष्टरसाश्रयः सकलरसालङ्कृतः प्रयोगः नाट्यप्रयोगः भवतीषु अप्सरःसु निबद्धः अध्यापनेन स्थापितः, ललितो मनोहारी अभिनयः भावाभिव्यञ्जनं यस्मिन्निति तादृशं हावभावपरिपूर्णं तं प्रयोगविशेषं लोकान् पालयन्ति ते लोकपालाः तैः सह मरुतां देवानां भर्त्ता इन्द्रः अद्य द्रष्टुमनाः द्रष्टुमिच्छति ।

यः प्रयोगः भवत्यो भरतेन पाठितः तं साभिनयं प्रयोगं अद्य इन्द्रो दिदृक्षतीति भावः । अत एव उर्वशीं त्वरितं प्रयोगाय सज्जीकुरु ।

भरतः सङ्गीतनाट्यशास्त्रविधाता । प्रयुज्यते रङ्गाङ्गणेऽभिनीयत इति प्रयोगः ।

अभिनयति व्यञ्जयति अर्थम् इति अभिनयः अभिनयतीति पचाद्यच् । अभिनयो वाचिकाङ्गिकाहार्यसात्त्विकभेदाच्चतुर्विधः । अभिनयो हि अङ्गविक्षेपादिमयैः हावभावैः इङ्गितैश्च मनोगतार्थव्यञ्जनम् ।

अनया त्वरया नायकनायिकयोरुत्कण्ठावृद्धिर्विधीयते । एतदेव कवेश्चातुर्यं यत् तयोः पारस्परिकं मेलनं बहुधा केनापि दृश्येनान्तरायते । क्वचिद्देवी मध्ये समायाति, क्वचिद्व्यग्रता स्वीयं प्राधान्यं व्यनक्ति; क्वचिन्नायिका च तत्पालकैराहूयते इति विविधैर्हेतुभिः तयोः समागमे जायमाने केनाप्यन्तरायेण तज्जन्येन च वियोगेन पारस्परिकोऽभिलाषः उत्कण्ठा च विवर्धते । तेन चमत्कारातिशयश्च रसिकानां परमप्रमोदजनकः सम्पद्यते । अत्र कृच्छ्रेण मिलितयोः परस्परोद्बुद्धभावयोः नायकनायिकयोः विश्लेषणान्निरोधनं नाम प्रतिमुखसन्ध्यङ्गम् । यदुक्तं दशरूपके—"हितरोधो निरोधन"मिति ।

वृत्तं औपच्छन्दसिकम् । लक्षणं तूक्तमेव प्राक् ॥ १७ ॥

( इमां घोषणां सर्वे आकर्णयन्ति शृण्वन्ति । )

( उर्वशी च प्रियविरहजनितं विषादं शोकं रूपयति प्रदर्शयति । )

**चित्रलेखा**—सुदं तुए देवदूअस्स वअणम् । ता अणुजाणीहि महाराअम् । [ श्रुतं त्वया देवदूतस्य वचनम् । तदनुजानीहि महाराजम् । ]

**उर्वशी**—( निःश्वस्य ) णत्थि मे वाआविहवो । [ नास्ति मे वाग्विभवः । ]

**चित्रलेखा**—महाराअ ! उव्वसी विण्णवेदि—परवसो अअं जणो । महाराएण अब्भणुण्णादा इच्छामि देअदेअस्स अणवरद्धं अत्ताणअं कादुम् । [ महाराज ! उर्वशी विज्ञापयति—परवशोऽयं जनः । महाराजेनाभ्यनुज्ञाता इच्छामि देवदेवस्य अनपराद्धमात्मानं कर्तुम् । ]

**राजा**—( कथं कथमपि वचनं संस्थाप्य ) नास्मि भवत्योरीश्वरनियोगपरिपन्थी । किन्तु स्मर्तव्यस्त्वयं जनः ।

---

**चित्रलेखा**—त्वया देवदूतस्य श्रुतं वचनम् । अत एव महाराजम् अनुजानीहि । महाराजात् गन्तुमनुज्ञां गृहाण । गमनायापृच्छस्वेति भावः ।

**उर्वशी**—( निःश्वस्य शोकाकुलत्वात् ) मे वाग्विभवः वाचि सामर्थ्यं नास्ति । नाहं प्रभवामि अनुज्ञां ग्रहीतुम् । अनेन नायिकाया विरहकातरत्वं गम्यते ।

**चित्रलेखा**—महाराज ! उर्वशी विज्ञापयति निवेदयति—

अयं जनः भवत्सु दत्तचित्तः परवशः पराधीनः । ( तथापि ) महाराजेन अभ्यनुज्ञाता दत्तगमनाज्ञा विसर्जिता वा देवदेवस्येन्द्रस्यानपराद्धम् अपराधदूषणशून्यमात्मानं कर्तुं इच्छामि—यदि भवद्भिराज्ञा दीयते चेत् यथासमयं यथास्थानं प्राप्ता देवदेवाज्ञां विधित्सुरयं जनः इति उर्वशी निवेदयतीति भावः । गन्तुमाज्ञां गृह्णाति । विक्रमे बद्धभावत्वान्नायिकाया पराधीनत्वं, अत एव महाराजानुज्ञानप्रयत्नस्य च सामञ्जस्यम् । अथवा महेन्द्राधीनत्वात् पारवश्यमुर्वश्याः इति अपरः पक्षः, प्रणयिन्या अपि प्रेमापरतन्त्रानुवर्तित्वाङ्गीकारात् ।

**राजा**—( कथं कथमपि महता क्लेशेन वचनं संस्थाप्य स्वीकृत्य ददाति—स एतादृग् वियोगकातरः सञ्जातो यद् वचनादानेऽप्यशक्तः । )

भवत्योः उर्वशीचित्रलेखयोः ईश्वरनियोगपरिपन्थी प्रभोराज्ञाभङ्गकर्ता न भवामि । नियोगः आज्ञा तस्य परिपन्थी विपक्षो विरोधी वा । किन्तु अयं जनः स्मर्तव्यः । भवतामेवाहमिति स्मृतिः परिपालनीया इति भावः ।

अत्र ईश्वरशब्दस्य ऐश्वर्यशालित्वम् प्रभुत्वमर्थः, न तु क्लेशकर्मविपाकादिभिरपरामृष्टपुरुषविशेषत्वम् । यतः प्रसिद्धा एव इन्द्रादीनां कर्मपरतन्त्रता, शतमखत्वेन इन्द्रत्वप्राप्तिश्रवणात्, ययातेश्च इन्द्रपदपरिच्युतिस्मरणाच्च ।

( उर्वशी वियोगदुःखं रूपयित्वा राजानं पश्यन्ती सह सख्या निष्क्रान्ता । )

**राजा**—( सनिःश्वासम् ) वैयर्थ्यमिव चक्षुषः सम्प्रति ।

**विदूषकः**—( पत्रं दर्शयितुकामः ) णं भुज्ज—( इत्यर्धोक्तेनात्मगतम् ) अविद अविद भो, उव्वसीदंसणविम्हिदेण मए तं भुज्जवत्तं पब्भट्टं वि हत्ताणो ण विण्णादम् । [ ननु भूर्ज—। हा धिक् हा धिग् भोः । उर्वशीदर्शनविस्मितेन मया तद्भूर्जपत्रं प्रभ्रष्टमपि हस्तान्न विज्ञातम् । ]

**राजा**—किमसि वक्तुकामः ।

**विदूषकः**—वअस्स ! एदम्हि वत्तुकामो । मा भवं अंगाइं वि मुंचदु । दिढं क्खु तुई बद्धभावा उव्वसी । ण सा इदो गदुअ एदं

---

( उर्वशी वियोगदुःखं वियोगजन्यं दुःखं रूपयित्वा प्रदर्शयन्ती सख्या चित्रलेखया सह निष्क्रान्ता ) अत्र नायिकानिर्गमो स्थायिनः रतेः परिपोषाय । इह च विप्रलम्भः शृङ्गारः, सम्भोगस्योपबृंहणे विप्रलम्भस्य हेतुत्वात् । "न विना विप्रलम्भेन शृङ्गारः पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्धते" इति न्यायात् ।

**राजा**—( वियोगजन्यदुःखस्य दुःसहत्वात् सनिःश्वासम् )

सम्प्रति अस्तायां तु नयनचन्द्रिकायां तस्यां, चक्षुषः वैयर्थ्यम् वृथात्वम् । निष्प्रयोजने एव नयने इदानीं, तयोर्द्दश्याभावात् । अयमेवार्थो **भवभूति**नापि निबद्धः—

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥ इति ॥

( मालतीमाधवे ५।३० )

**विदूषकः**—( पत्रं प्रियाक्षरालीविभूषितं भूर्जपत्रं राजानं समाश्वासयितुं दर्शयितुमिच्छति । )

**ननु** इति शङ्कायां—भूर्ज-इत्यर्धोक्ते भूर्जपत्रादर्शनात् साशङ्कं मौनं धत्ते । (आत्मगतम्) अविदाविद भोः किमेतदाश्चर्यमापतितम् । उर्वशीदर्शनात् विस्मितेन चकितेन सम्भ्रान्तेन वा मया तत् उर्वशीलिखितं भूर्जपत्रं हस्तात् प्रभ्रष्टमपास्तं स्रस्तमपि न ज्ञातम् । अविदितमेव विस्मितस्य मे हस्तादपास्तं भूर्जपत्रमिति भावः ।

**राजा**—किमपि विदूषकमुखनिर्गतं शब्दं निशम्याह—किमसि वक्तुकामः । वक्तुमिच्छसीति भावः ।

**विदूषकः**—चातुर्येण नष्टं भूर्जपत्रं विहाय किमप्यन्यदेव वदति ।

वयस्य ! एतदेव वक्तुं इच्छामि । भवान् अङ्गानि स्त्रीयसहिष्णुतां धैर्यं वा मा विमुञ्चतु । धैर्यं परिष्वजस्व । उर्वशी त्वयि दृढं बद्धभावा बद्धप्रेमा । आसक्ता

अणुवंधं सिढिलीकरेदि । [ वयस्य ! एतदस्मि वक्तुकामः । मा भवानङ्गानि विमुञ्चतु । दृढं खलु त्वयि वद्धभावा उर्वशी । न सा इतो गत्वा एनमनुवन्धं शिथिलीकरोति । ]

**राजा**—ममाप्येतदेव मनसि वर्त्तते । तया खलु प्रस्थाने—

अनीशया शरीरस्य हृदयं स्ववशं मयि ।
स्तनकम्पक्रियालक्ष्यैर्न्यस्तं निःश्वसितैरिव ॥ १८ ॥

**विदूषकः**—( स्वगतम् ) वेवदि मे हिअअं केत्तिए वेलाए तस्स भुज्जवत्तस्स अत्तभवदा वअस्सेण णामं गेण्हिदव्वं त्ति ।

[ वेपते मे हृदयं कस्यां वेलायां तस्य भूर्जपत्रस्यात्रभवता वयस्येन नाम ग्राह्यमिति । ]

---

हि लग्युर्वशी । खलु निश्चये । सा इतो गत्वा एनमनुवन्धमासक्तिं प्रीतिं वा न शिथिलीकरिष्यति न्यूनां करिष्यति । इह शिथिलीकरोतीति भाविनि अर्थे लट् ।

**राजा**—समीचीनम् । मम मनसि अपि एतदेव अयमेव भावो वर्त्तते । तया खलु प्रस्थाने गमनवेलायाम्—चूर्णकस्थस्यास्य वाक्यार्थस्य वक्ष्यमाण-श्लोकेनान्वयः—

**अनीशयेति**—शरीरस्य स्वदेहस्यापि अनीशा अनीश्वरा तया स्वदेह-स्यापि न प्रभवन्त्या तया स्ववशं स्वतन्त्रं हृदयं मयि स्तनयोः कम्पः तस्य च क्रिया तया लक्ष्यैरुन्नेयैरनुमेयैर्वा निःश्वसितैः श्वासैर्न्यस्तं स्थापितमिव । शरीरस्या-नीशत्वमिन्द्राधीनत्वाद्वेत्यपरोऽपि पक्षः ।

"अनीशया इति" चूर्णकस्थस्य तयेतिपदस्य विशेषणम् । अथवा शरीरस्य अनीशत्वम् इन्द्राधीनत्वात् । किन्तु हृदयन्तु स्ववशं स्वाधीनमेवासीत् । ततः स्वाधीनं हृदयं मयि स्थापितमिति वा भावः । किन्तु—

मां प्रेक्ष्य कुसुमचापशरनिकरेण भृशं वाध्यमाना स्वीयदेहोपरि स्वामित्वमनु-पलभमाना मय्येव स्वस्य हृदयं स्थापितवती । कथं स्थापितवतीति शङ्कायाम् उत्प्रे-क्षते तावद्यत् तया वेगेन चलद्भिः श्वासैः इव स्थापितं स्वहृदयम् । ते च श्वासो-च्छ्वासाः कथं नामोन्नेया इति स्तनयोः कम्पनेनानुमेयमिदमभवत् यदभवन् तत्र वेगवत्तरा श्वासा इति । "न्यस्तमिवे"ति उत्प्रेक्षालङ्कारः । अनुष्टुब् वृत्तम् ॥ १८ ॥

**विदूषकः**—( स्वगतम् ) मे हृदयं वेपते कम्पते, भीतत्वात् । कुतो भयमित्याह—कस्यां वेलायां तस्य प्रियाक्षरालीयुतस्य भूर्जपत्रस्य अत्रभवता मान्येन वयस्येन राज्ञा नाम ग्राह्यम् । भूर्जपत्रं तु नष्टम् । अतः एतदेव मे भयं यत् गृहीते तु तन्नामनि कुतो देयम् तत् पत्रमिति अतः हृदयं मे वेपते ।

राजा—वयस्य ! केनेदानीं उन्मनसमात्मानं विनोदयामि । ( स्मृत्वा ) उपनय भूर्जपत्रम् ।

विदूषकः—( सर्वतो दृष्ट्वा सविषादम् ) हा कहं ण दिस्सदि । भो, दिव्वं क्खु तं भुज्जवत्तं गदं उव्वसीमग्गेण । [ हा ! कथं न दृश्यते । भोः ! दिव्यं खलु तद्भूर्जपत्रं गतमुर्वशीमार्गेण । ]

राजा—( सासूयम् ) सर्वत्र प्रमादी वैधेयः ।

विदूषकः—णं विचिणु ( उत्थाय ) इदो भवे । एत्थ वा भवे । [ ननु विचिनुहि । इतो भवेत्, अत्र वा भवेत् । ]

( इति विचेतव्यं नाटयति । )

( ततः प्रविशत्यौशीनरी चेटी च विभवतश्च परिवारः । )

औशीनरी—हञ्जे णिउणिए ! सच्चं किं लदाघरं विसन्तो अज्जमाणवअसहाओ दिट्ठो तुए महाराओ ? [ हञ्जे निपुणिके ! सत्यं

---

राजा—वयस्य ! सखे माणवक ! उन्मनसं विमनायमानं खिन्नं वा ममात्मानं इदानीं केन उपायेन विनोदयामि । कथं नाम खिन्नं मे मनः विनोदयितव्यम् इति पृच्छति । ( स्मृत्वा भूर्जपत्रं स्मृतिमुपनीय ) उपनय भूर्जपत्रम्—उपनय देहि आनय वा ।

विदूषकः—( सर्वतः सर्वत्र दृष्ट्वा सविषादम् सखेदम् ) हा इति शोके—विस्मयगर्भितेन शोकेन ब्रूते—कथं न दृश्यते ! कुत्र तद्गतम् । अहं तु न कुत्रापि गतवान् । भोः ! तद्भूर्जपत्रं दिव्यमलौकिकम् तेन च उर्वशीमार्गेण गतम् । अत्र दिव्यत्वेन तस्मिन् सचेतनत्वं परिकल्प्यते । इदं विदूषकस्य वाक्पाटवम् ।

राजा—( सासूयम्—तस्मिन् दोषमारोप्य—सक्रोधम् वा ) सर्वत्र प्रमादी असावधानो वैधेयो मूढः । विधेयस्याधिकारी वैधयः इत्यण् ।

"मूर्खवैधेयबालिशा" इत्यमरः । केचित् वैधेयपदेन नीचतां ख्यापयन्ति ।

विदूषकः—ननु विचिनुहि—मार्गय तद्भूर्जपत्रम् । ( उत्थाय ) इतः अत्र भवेत् वा तत्र भवेत् तत् भूर्जपत्रम् इति तद्वस्तु विचेतव्यं मार्गणीयं नाटयति दर्शयति ।

( ततः औशीनरी उशीनरस्य राज्ञः गोत्रापत्यं स्त्रीति औशीनरी काशिराजदुहिता नायकस्य महिषी चेटी दासी च तथा च विभवतः स्वरूपानुरूपः परिवारः रङ्गभूमिं प्रविशति । )

औशीनरी—हञ्जे इति चेटीं प्रति सम्बोधनम् । अयि निपुणिके ! किमेतत् सत्यं यत् त्वया आर्यमाणवकसहायः माणवकेन सह लतागृहं विशन् महाराजः

किं लतागृहं विशन्नार्यमाणवकसहायो दृष्टस्त्वया महाराजः ? ]

**चेटी**—अलीअं किं मए भट्टिणी विण्णविदपुव्वा ? [ अलीकं किं मया भट्टिणी विज्ञापितपूर्वा ? ]

**देवी**—तेण हि लदाविडवन्तरिदा सुणिस्सं दाव वीसंभमंतिदाइं जं तुए कहिदं सच्चं ण वेत्ति। [ तेन हि लताविटपान्तरिता श्रोष्ये तावद्विश्रम्भमन्त्रितानि यत्त्वया कथितं सत्यं न वेति। ]

**चेटी**—जं देवीए रुच्चदि। [ यद्देव्यै रोचते। ]

**देवी**—( परिक्रम्य पुरस्तादवलोक्य च ) णिउणिए! किं णु एदं वत्तं णवचीअरं विअ इदो दक्खिणमारुदेण आणीअदि ? [ निपुणिके! किं नु एतत्पत्रं नवचीवरमिवेतो दक्षिणमारुतेनानीयते ? ]

**चेटी**—( विभाव्य ) भट्टिणि! पडिवत्तणविभाविदक्खरं भुज्जवत्तं क्खु एदम्। हन्त, कहं देवीए एव्व णेउरकोडिलग्गम्( गृहीत्वा ) कहं वाचीअदु एदम्। [ भट्टिनि! परिवर्तनविभाविताक्षरं भूर्जपत्रं

---

दृष्टः ? अपीदं सत्यं यद्धि आर्यपुत्र इहैव वर्तत इत्यर्थः। 'हञ्जे' इति पदं शौरसेन्यामभिमतम्।

**चेटी**—मया भर्त्री देवी किं अलीकं मिथ्यैव विज्ञापितपूर्वा। किं मया यदुदितं तत् पूर्वं किं असत्यमासीत् कदापि। न हि—महाराजः इहैवास्तीति सत्यमेवेति तात्पर्यम्।

**देवी**—तेन हि अत एव, यत इदं सत्यमेवास्तीति कारणात् लताविटपे अन्तरिता गुप्ता अहं विश्रम्भे विश्वासपात्रे एकान्ते च मन्त्रितानि गुप्तविचारान् श्रोष्ये। यत् त्वया कथितं तत् सत्यं न वा इति परिक्षितुं अहमिहैवात्मानं सङ्गोप्य श्रोष्यामि यद्रहसि महाराजेनालप्यत इति।

**चेटी**—यद्देव्यै रोचते। यथा देवी प्रीणाति तथैवास्तु। अत्र देव्यै इति चतुर्थी "रुच्यर्थानां प्रीयमाणः" इत्यनेन रुचतेः योगे।

**देवी**—परिक्रम्यावलोक्य च इतस्ततः परिभ्रमन्ती विलोक्य च। निपुणिके! किं नु एतत् पत्रम् नवचीवरं मुनीनां परिधानमिव इतः अत्र दक्षिणमारुतेन दक्षिणदिशो वहता वायुना आनीयते। भूर्जपत्रमेतत्। चीयते इति "छिल्वरच्छत्वर–" ( उ. ३।१ ) इति सूत्रेण चीवरम्। "शाक्यभिक्षुप्रावरणमिति" सुभूतिः। नु इति प्रश्ने।

**चेटी**—भर्त्रि! परिवर्तनेन विभावितानि ज्ञातानि अक्षराणि यस्मिन्नेतादृग् भूर्जपत्रं खलु एतत्। वायुवेगेन चालितत्वात् ज्ञाताक्षरं भूर्जपत्रमित्यर्थः। खलु

खल्वेतत् । हन्त, कथं देव्या एव नूपुरकोटिलग्नम्! कथं वाच्यतामेतत् । ]

**देवी**—अवलोएहि दाव एदम् । जदि अविरुद्धं तदो सुणिस्सम् । [ अवलोकय तावदेतत् । यद्यविरुद्धं तदा श्रोष्ये । ]

**चेटी**—( तथा कृत्वा ) भट्टिणि! तं एदं कोलीणं विअम्भदि भट्टारअं उद्दिसिअ उव्वसीअक्खरो कव्वबन्धो त्ति तक्केमि । अज्ज माणवअप्पमादादो अम्हाणं हत्थं आगदम् । [ देवि! तदेतत्कौलीनं विजृम्भते । भट्टारकमुद्दिश्य उर्वश्यक्षरः काव्यबन्धः इति तर्कयामि । आर्यमाणवकप्रमादादावयोर्हस्तमागतम् । ]

**देवी**—णं गिहीदत्था होहि । [ ननु गृहीतार्था भव । ]

( चेटी वाचयति )

**देवी**—एदेण एव्व उवआरेण तं अच्छराकामुअं पेक्खमम्ह ।

---

निश्चये । हन्त! इति विस्मये । कथमेतत् देव्या एव नूपुराणां कोटौ अग्रभागे एव लग्नम् । कथं वाच्यतामेतत् । इह "कथम्" शङ्कागर्भितेच्छायाम् ।

**देवी**—अवलोकय वाचय तावत् । यद्यविरुद्धं यदि हृद्यं भवेत्, तदा श्रोष्ये ।

**चेटी**—( तथा कृत्वा-वाचयित्वा ) देवि! एतत् तु कौलीनं लोकापवादः विजृम्भते अस्ति । किंवदन्तीयमिति भावः ।

"कौलीनं पशुभिर्युद्धे कुलीनत्वापवादयोः" इति धरणिः । भट्टारकं महाराजमुद्दिश्य उर्वश्याः अक्षराणि यस्मिन् सः उर्वश्यक्षरः उर्वशीलिखितः काव्यबन्धः कवितामयो मदनलेखः अयमस्ति इति तर्कयामि अनुमिनोमि ।

"भट्टारको नृपे नाट्यवाचा देवे तपोधने" इति मेदिनी । भटति "भट परिभाषणे आज्ञापने" ( भा. प. से. ) भट्टं स्वामित्वं ऋच्छतीति भट्टारः "कर्मण्यण्" । भट्टार एव भट्टारकः "स्वार्थे कन्" च ।

आर्यमाणवकस्य प्रमादात् अनवेक्षणात् अनवधानाद्वा आवयोर्हस्तं प्राप्तमिदं भूर्जपत्रम् ।

"प्रमादोऽनवधानता" इति त्रिकाण्डी ।

**देवी**—ननु इति आज्ञायाम् । गृहीतो ज्ञातः अर्थो यया तादृशी भव । किमस्मिन् लिखितं तत्तावद् विज्ञापय ।

( चेटी वाचयति यदत्र लिखितमिति )

**देवी**—एतेनैव उपचारेण अनयैव पूजया तमप्सरःकामुकं प्रेक्षावहे ।

[ एतेनैवोपचारेण तमप्सरःकामुकं प्रेक्षावहे । ]

**चेटी**—जं देवी आणवेदि । [ यद्देव्याज्ञापयति । ]

( इति परिजनसहिते लतागृहं परिक्रामतः । )

**विदूषकः**—भो वअस्स ! किं एदं पवणवसगामि पमदवण-समीवगदक्कीडापव्वदपज्जंते दीसदी ? [ भो वयस्य ! किमेतत्पवन-वशगामी प्रमदवनसमीपगतक्रीडापर्वतपर्यन्ते दृश्यते ? ]

**राजा**—( उत्थाय ) भगवन् वसन्तसख मलयानिल !

वासार्थं हर सम्भृतं सुरभि यत्पौष्पं रजो वीरुधां

---

यदा कदापि राज्ञः समीपे गम्यते तदा किमपि पूजार्थं गृह्यते । "रिक्तहस्तेन नोपे-यात्, राजानं देवतां गुरुमिति" मनूक्तेः । अतः इदानीं एतद् भूर्जपत्रमेव गृहीत्वा तं अप्सरःकामिनं पश्यावः । नायकविषये पट्टमहिर्षीमुखात् अप्सरःकामुकमिति विशेषणं इह क्रोधविषयित्वात् साधु । तच्च परलुब्धत्वं अनर्थकारित्वं च सूचयति ।

**चेटी**—यद्देवी आज्ञापयति–तथैवास्तु इति शेषः ।

( इति परिजनसहिते चेटीदेव्यौ लतागृहं परिक्रामतः प्रविशतः । )

**विदूषकः**—भोः वयस्य ! किं एतत् भूर्जपत्रं पवनस्य वायोः वशात् गामी वायुवेगेनापह्रियमाणः प्रमदवनसमीपगतो यत् क्रीडार्थं पर्वतस्तस्य पर्यन्तभागे दृश्यते । किं वायुनापहृतं तद्भूर्जपत्रम्—इति आशङ्कते ।

प्रमदवनम्—विहारोचितस्थानम् । "विज्ञेयं प्रमदवनं नृपस्तु यस्मिन् शुद्धान्तैः सह रमते पुरोपकण्ठम्" इति हलायुधः ।

**राजा**—( उत्थाय ) भगवन् वसन्तसख ! मलयानिल ! दक्षिणवायो ! "भगवन्" इति सम्बोधनेन वायोः प्राध्येत्वं गम्यते ।

वसन्तसखेत्यत्र "राजाहःसखिभ्यष्टच्" इति सूत्रेण अकारान्तपदत्वम् ।

**वासार्थमिति—**

**भावस्तु**—सौगन्ध्यापेक्षया यदि त्वं कुसुमानां परागं हरसि तत्तु त्वं हर किन्तु यत् मदीयदयितालिखितलेखं हरसि तत्तु अन्याय्यम् । तत्र न कोऽपि तव लाभ इति । परञ्च यदि वायुर्विवेकहीनः स्यात् तदा कथं नाम तेनेदं विवे-चनीयम् । तदर्थमेवाह—न खलु भवान् विवेकभ्रान्तः । यतो ज्ञायते वायुना यत् विरहिणां कृते मदनलेखचित्रफलकादीन्येव समाश्वासनहेतवः ।

वीरुधां लतानां सुरभि सुगन्धि सम्भृतं एकत्र सञ्चितं यत् पौष्पं पुष्पसम्बन्धि रजः परागः तत् त्वं वासार्थं सुगन्धार्थं हर । तत्र हरणे तु तव सुगन्धलाभः, चास्माकं न कापि क्षतिः । किन्तु मिथ्या अकारणं निष्प्रयोजनमेव हृतेन अप-नीतेन मे मम दयितायाः प्रियायाः स्नेहस्वहस्तेन स्नेहसूचकेन स्वहस्तेन लिखितेन मदनलेखेन भवतः किं प्रयोजनम् ? न किमपीति भावः । अतः मादृशवियोगि-

किं मिथ्या भवतो हृतेन दयितास्नेहस्वहस्तेन मे ।

---

हृद्दाहकेनानेन कर्मणा ते को नाम लाभः । भवान् एवंविधैः अनङ्गलेखचित्रफल-कदर्शनप्रभृतिभिः विनोदानाम् शतैः धारितं धृतजीवनं जीवन्तं वा तथा च विशेषतः आलम्बिता कृता प्रार्थना येन तादृशं कामार्तं जनं अभिभवितुं पीडयितुं न जानीते इति अञ्जसा सत्यमेव । भवांश्च एतादृग्दयार्द्रहृदयो यत्कथमपि एतादृशैः विनोदैर्धृतदेहं जनं न पीडयतीति सत्यमेव । अतः भवतो मादृग्विधवधाधर्मो-धारणाय स्वीयदक्षिणत्वसंरक्षणाय च नापहरणीयो लेख इति प्रार्थ्यते ।

अत्र श्लोके चूर्णकस्थस्य मलयानिलस्य हेतोः भवन्निति सर्वनामव्यपदेशः । चूर्णकस्थं भगवन्निति पदं मलयानिलस्य महिम्नः द्योतनाय दीयते, यदि न चेत् प्रार्थ्यो जनो महान् तदा तु प्रार्थनमसाम्प्रतमेव स्यात् "याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा" इति न्यायात् ।

वासस्तु गन्धः । सामान्यव्यपदेशात् सुवास एव, "वासितं सुरभीकृते" इति विश्ववचनाच्च ।

अञ्जसा सत्यम् "तत्त्वे त्वद्धाञ्जसाद्वयम्" इत्यमरः । "अञ्जू व्यक्तौ" तस्मात् व्युत्पन्नत्वात् व्यक्तत्वं स्फुटत्वं सत्यत्वं वा अञ्जसापदवाच्यम् ।

अत्र प्रथमचरणे "यत्पौष्पं रजः" इत्यत्र तच्छब्दाभावात् "यत्तदोर्नित्य-सम्बन्धः" इति नियमविरुद्धत्वेऽपि "यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने सामर्थ्यात् पूर्ववाक्ये तच्छब्दस्यार्थः" इति दर्पणकृतां वचनप्रामाण्यात् "आत्मा जानाति यत्पापम्" इतिवत् साधुत्वात् इह अभवन्मतसम्बन्धाख्यो दोषो न विभावनीयः । किन्तु तत्रैव "वासार्थम् हर" इत्यत्र "हृ (हर) हरणे" इति धातोः स्वाव्यवहितोत्तरत्वेन श्रूयमाणस्य लोटि मध्यमपुरुषैकवचनव्यञ्जकस्य सिप्प्रत्ययस्य सत्त्वात् "त्वम्पदं" "हरेत्यस्य" कर्तृत्वेनाध्याह्रियते । तथा च द्वितीयचरणे "भवतः" तथा च तृतीयचरणे "भवान्" इति पदप्रदानात् एकत्र एकस्यैव बुद्धिस्थप्रकारावच्छिन्नस्य मध्यमान्यपुरुषद्वयेन सम्बोधितत्वात् भग्न-प्रक्रमतादोषापत्तिः । भग्नो विच्छिन्नः प्रक्रमः प्रस्तावः यस्मिन् इति भग्नप्रक्रमः । प्रस्तावश्चात्राकाङ्क्षितप्रकारकोऽर्थः । यद् येन प्रकारेण प्राक् निर्दिष्टं तस्य तत्प्रकारेणैव पश्चादनुक्तिरेव भङ्गः । दोषश्चायं राज्ञः सशोकावस्थां दर्शयन् गुणत्वं भजतां नाम ।

"दयितास्नेहस्वहस्तेनेत्यत्र" हस्तस्य हृतेनेति पदेन व्यपदिश्यमानेन हरण-व्यापारेण सहान्वयानुपपत्तौ, जाते च मुख्यार्थबाधे तद्युक्ते "हस्तलेखे" "शोणो धावतीतिवत्" अजहत्स्वार्था हस्तलेखे हस्तत्वारोपणात् प्रेमातिशयप्रकाशनरूप-प्रयोजनवती लक्षणा विधीयते । अनया लक्षणया च लेखे वस्तुत्वारोपात् तुल्यानु-रागेति पद्ये उक्तेन "समागतमिव मन्ये" इति वचनेन समञ्जसत्वमेव ।

अत्र च "समानशीलव्यसनेषु सख्यं" इति नियमात् कामुक एव कामुकस्य पीडां सुखं वा ज्ञातुं प्रभवति" यदि न चेदयं मलयानिलः कामुकः कथं वा पारयेद्विक्रमकामव्यथाम् ज्ञातुमिति सन्देहवारणाय समासोक्त्यलङ्कारभङ्ग्या कविवरो

जानीते हि भवान्विनोदनशतैरेवंविधैर्धारितं
कामार्तं जनमञ्जसाभिभवितुं नालम्बितप्रार्थनम् ॥ १९ ॥

व्यञ्जयति वायोः कामरसिकत्वम् । प्रथमं तु चूर्णक एव वसन्तसखेति विशेषण-प्रदानेन काममित्रेण सहास्य सख्यं प्रदर्शितम् । पश्चाच्च "वीरुधां रजो हरेति" वाक्ये रजसस्तावन्निश्चयतिनियमानुसारं पुष्पेषूत्पत्तिर्न खलु लतासु । तदा वीरुत्सु रजसारोपणेन तासु रम्यकामिनीत्वारोपः, जाते तु रजसि रमणीत्वप्राप्तेः । तदपि रजः पुनः सम्भूतं सञ्चितं तस्माच्च शासितयौवनत्वं तासु समारोप्यते । तथा च उत्तमत्वाच्च सुरभित्वमपि समीचीनमेव । अत इह वीरुधां स्त्रीलिङ्गत्वात्, मलयानिलस्य च पुंस्त्वात् रजोहरणक्रियया च, सम्यक्तया सङ्गच्छते पारस्परिकं कामिनीकामुकत्वम् । अनेन राज्ञश्च वायोश्च समानतया कामुकत्वं दृश्यते । कुतः प्रकृतनायिकायामपि देवाङ्गनात्वात् सुरभिरजोवत्त्वं, पूर्णयौवनत्वात् सम्भृतरजोवत्त्वं च आलिङ्गते । अविद्यमानायां तु अस्यां समासोक्तौ तृतीयचरणगतजानातेः सम्यक् सम्बन्धो न सम्पद्यते । अधुना कामुकत्वस्य समानत्वात् वायुः कामार्तं नाभिभवितुं जानीत इति स्वकीयानुभवात् साधु सङ्गच्छते, परञ्च जानातेरत्र आत्मनेपदप्रयोगस्तु निजानुभवस्मरणायैव विहित इति विद्वद्भिरुन्नेयः । तथाच "हिपदेन" प्रकाश्यमाना या निश्चयात्मकता सापि सम्यक् समासोक्त्यभावेऽनुसंहिता न भविष्यति । तेन चास्याः समासोक्त्याः जानातेरर्थोपपत्त्यै कारणत्वम् । ततश्च काव्यलिङ्गमलङ्कारो व्यज्यते । समासोक्तिलक्षणं तु "समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य च" इति कुवलयानन्दकृतम् । पुनश्च "धारितम्" अत्र धृतमित्यनूच्य ध्रियमाणार्थबोधनतया णिजन्तप्रयोगेण च विनोदनमात्रप्रभावेण यथाकथञ्चिद् धृतमित्यर्थं व्यनक्ति । अपि च कामार्तेति पदप्रदानेनामृतस्य मारणे शूरत्वं, न तु मृतमारणेति अर्थो बुध्यते । "शूराणां मृतमारणे न हि वरो धर्मः प्रयुक्तो बुधैरिति" नियमात् । पुनश्च यदि मृतस्यापि मारणमङ्गीकृतश्चेत् तथापि शरणागतस्यातीवासाम्प्रतम्-तद्धेतोरेव आलम्बितप्रार्थनमिति ग्रहणम् । अत्र वायौ चेतनत्वधर्मारोपपूर्वकसम्बोधनात् (Apostrophe) समासोक्तिरलङ्कारः इति दिक् ।

इह च कैश्चन चरमचरणे "कामार्तं जनमञ्जनां प्रति भवानालक्षितप्रार्थनः" इति पाठोऽङ्गीक्रियते । तेषां मते "अञ्जनां प्रति आलक्षितप्रार्थनः समीक्षिताभिलाषः" इत्यर्थप्रदानेन वायोः अपि कामुकत्वं प्रतिपाद्य स्वस्य अनुभवित्वात् कामिनां क्लेशजनकत्वमनुचितमिति विशेषार्थः । तथा चेदं ज्ञाप्यते यत् कामवशवर्तित्वं तु भवादृशामपि दृश्यते तदा तु मत्पक्षे नायं दोषावह इति । वायोरञ्जनाकामुकत्वं प्रसिद्धं पुराणेषु-कस्मिंश्चित् समये प्लवङ्गकुञ्जरस्य कुञ्जराख्यस्य तनया (पश्चाद्धनुमन्माता) अञ्जना शिशिरानिलविहरणपरायणा मनोहारिणि नगरोपकण्ठे विलसन्ती आस । तत्र च तस्याः स्रस्तांशुकायाः कमनीयाङ्गसम्पदा निमेषनिपातनिर्दयेऽपि स्वनयने सभाजयन् भगवान् गन्धवाहो मदनैकशरणामवस्थामवाप ।

**निपुणिका**—भट्टिणि ! एदस्स एव्व अण्णेसणं वट्टदि । [ देवि ! एतस्य एवान्वेषणं वर्तते । ]

**देवी**—पेक्खामि । [ प्रेक्षे । ]

**विदूषकः**—भो ! मिलाअमाणकेसरच्छविणा मोरपिच्छेण विप्पलद्धोम्हि । [ भोः ! म्लायमानकेसरच्छविना मयूरपिच्छेन विप्रलब्धोऽस्मि । ]

**राजा**—सर्वथा हतोऽस्मि मन्दभाग्यः ।

**देवी**—( सहसोपसृत्य ) अज्जउत्त ! अलं आवेगेण । एदं एव्व तं भुज्जवत्तम् । [ आर्यपुत्र ! अलमावेगेन । एतदेव तद्भूर्जपत्रम् । ]

**राजा**—( ससम्भ्रममात्मगतम् ) अये ! इयं देवी । ( प्रकाशम् ) स्वागतं देव्यै ।

**देवी**—दुरागदं दाणिं संवुत्तम् । [ दुरागतमिदानीं संवृत्तम् । ]

---

सुकुमारकुमारीभावपरिरक्षणानुरूपमाचरणाय तया निवेदितो मलयानिलः स्वसंसारावतरणश्रमकृतार्थतया सङ्गमय्य तस्यां मनोजवं मनोजजन्मानं मारुतिं प्रादुर्भावयामासेति पुरातनवचनसङ्गतिः ॥

श्लोकश्चायं शार्दूलविक्रीडितेन च्छन्दसा निबद्धः । लक्षणं तूक्तं प्रागेव ॥ १९ ॥

**निपुणिका**—भर्त्रि ! एतस्यैव भूर्जपत्रस्यान्वेषणं वर्तते ।

**देवी**—प्रेक्षे-यद्यदन्यद् क्रियते ।

**विदूषकः**—म्लायमाना मलिनीकृता केसराणां कुसुमकिञ्जल्कानां छविः कान्तिस्तेन मयूराणां पिच्छेन विप्रलब्धोऽस्मि वञ्चितोऽस्मि । मयूरेण स्वपिच्छद्वारा अपहृतं भवेदिति शङ्का ।

**राजा**—सर्वथा मन्दभाग्यः दुर्भागी अहं हतोऽस्मि त्रासितोऽस्मि ।

**देवी**—( सहसाऽतर्कितमेवोपसृत्य )-आर्यपुत्र । आवेगेन शोकेन अलं, कृतं शोकेन—एतदेव तद्भूर्जपत्रम् । शोकेनालमित्यस्य हेतुः । आवेगेनेति "अलंयोगे" तृतीया ।

**राजा**—( ससम्भ्रमम् सभयम्-आत्मगतमेव ) अये ! इयं देवी एतस्मिन् प्रसङ्गे देवीदर्शनमेव भयहेतुः । ( प्रकाशम् ) स्वागतं देव्यै इति समुदाचारं विधत्ते ।

"सम्भ्रमः साध्वसेऽपि स्यादिति" कोषः ।

**देवी**—राजानं उपहसति ।—इदानीं दुरागतं संवृत्तम् । मदागमनं असमीचीनं जातम् । इदं तु भवत्खेदकारित्वात् दुरागतमेव न तु स्वागतमिति भावः ।

**राजा**—( जनान्तिकम् ) वयस्य ! किमत्र प्रतिविधानम् ।

**विदूषकः**—( जनान्तिकम् ) लोत्तेण सूइदस्स कुंभिलअस्स अत्थि वा पडिवअणम् ? [ लोप्त्रेण सूचितस्य कुम्भीरकस्य अस्ति वा प्रतिवचनम् ? ]

**राजा**—( अपवार्य ) मूढ ! नायं परिहासकालः । ( प्रकाशम् ) नेदं पत्रं मया मृग्यते । तत्खलु मन्त्रपत्रं यदन्वेषणाय ममायमारम्भः ।

**देवी**—जुज्जइ अत्तणो सोहग्गं पच्छादेदुम् । [ युज्यत आत्मनः सौभाग्यं प्रच्छादयितुम् । ]

**विदूषकः**—भोदि ! तुवरेहि से भोअणम् । पित्तोवसमणेन सुत्थो होदु । [ भवति ! त्वरयस्वास्य भोजनम् , पित्तोपशमनेन स्वस्थो भवतु । ]

---

अत्र औशीनर्या पुरूरवसः उर्वशीविषयकानुरागोद्भेदनात्प्रत्यक्षनिष्ठुराभिधानं विहितम् , अतः इह वज्रं नाम प्रतिमुखसन्ध्यङ्गम् । यल्लक्षणं-"वज्रं प्रत्यक्षनिष्ठुर" मिति दशरूपके ।

**राजा**—( जनान्तिकम्-अपवार्य ) वयस्य माणवक ! किमत्र प्रतिविधानम् प्रतीकारः । इदानीं गोपायितुं स्वरहस्यं किं नाम कर्त्तव्यमिति परामृशति ।

**विदूषकः**—( जनान्तिकम्—अन्यैरश्रूयमाणम् ) लोप्त्रेण स्तेयेन चोरितेन वस्तुना सूचितस्य कुम्भीरकस्य चोरस्य किमपि प्रतिवचनम् अस्ति किम्–नास्तीति भावः । अत्रार्थापत्तिः, चोरसमीपे यदि चोरितं धनं लभ्येत चेत् स तु चोर एव निर्धीयते तथैव त्वमपि भूर्जपत्रेण विज्ञापितोऽधुना कथं प्रतिविधानं कर्तुं पारयिष्यसीति भावः ।

**राजा**—( अपवार्य ) मूढ ! नायं परिहासकालः—सत्यमेव त्वया किमपि प्रतिवचनं दर्शनीयम् आसीत् । ( प्रकाशम् ) देवि ! इदं भूर्जपत्रं मया न मृग्यते किन्तु मन्त्रपत्रं राजकीयकार्यपत्रं गवेषयितुं ममायं आरम्भः प्रयत्नः । नाहं मार्गयामि भूर्जपत्रमेनं किन्तु राजपत्रं तत् इति सङ्गोपयति रहस्यम् । अत्र दोष-प्रच्छादनात् "नर्मद्युतिर्नाम" सन्ध्यङ्गम् ।

**देवी**—युज्यते—आत्मनः सौभाग्यं प्रच्छादयितुम् एतादृक्कथनं स्वकीय-शुद्धतां निरपराधित्वं च प्रदर्शयितुं युक्तमेव ।

**विदूषकः**—भवति देवि ! भवतु यत्किमपि—अस्य राज्ञः भोजनमिष्टं त्वरयस्व आशु देहि । अस्यैव पत्रस्य कृते व्याकुलीभूयतेऽनेन अतः देहि पत्रमेन-मिति भावः । अयं च पित्तोपशमनेन स्वस्थो भवतु । दत्ते च भोजने यथा पित्तं शाम्यति तथैव प्रदानेनास्य पत्रस्य सुस्थो भविष्यति राजा इति सारः । अत्र चान्योक्तिः । भोजनमिषेण यथा पित्तस्य तथैव पत्रस्यैव शामकत्वं प्रतिपादितम् ।

देवी—णिउणिए ! सोहणं खु बम्हणेण आसासिदो वअस्सो । [ निपुणिके ! शोभनं खलु ब्राह्मणेनाश्वासितो वयस्यः । ]

विदूषकः—णं पेक्ख । आसासिदो वअस्सो चित्तभोअणेण । [ ननु प्रेक्षस्व । आश्वासितो वयस्यश्चित्रभोजनेन । ]

राजा—मूर्ख ! बलाद्पराधिनं मामापादयसि ।

देवी—णत्थि भवदो अवराहो । अहं एव्व अवराद्धा जा पडिऊलदंसणा भविअ अग्गदो चिट्ठामि । इदो गमिस्सम् । [ नास्ति भवतोऽपराधः । अहमेवापराद्धा या प्रतिकूलदर्शना भूत्वा अग्रतस्तिष्ठामि । इतो गमिष्यामि । ]

( इति कोपं नाटयित्वा प्रस्थिता )

राजा—अपराधी नामाहं प्रसीद रम्भोरु विरम संरम्भात् ।
सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः ॥२०॥

---

देवी—निपुणिके ! शोभनं सुष्ठुरीत्या विदूषकेन आत्मनः प्रियवयस्यः आश्वासितः ।

विदूषकः—ननु प्रेक्षस्व ! ननु इति अनुनये । प्रियवयस्यः चित्रेण विलक्षणेन भोजनसङ्कीर्तनेनाश्वासितः चित्ररूपिणा भोजनेनाश्वासितः ।

राजा—मूर्ख ! बलाद् मिथ्यैव माम् अपराधिनं कृतापराधं आपादयसि करोषि निश्चिनोषि वा ।

देवी—( राजानं प्रति ) नास्ति भवतोऽपराधः—किन्तु अहमेव अपराद्धाऽस्मि यत् प्रतिकूलमनिष्टं दर्शनं यस्याः सा एतादृशी भूत्वा भवतः अग्रतः तिष्ठामि । स्वापराधहेतुरयम्, यतः पतिव्रतया पत्युः प्रतिकूलं नाचरणीयम् । इहागमनं च पत्युरनिष्टम् तस्मात् कृतागस्त्वम् स्वीयमेव विज्ञापयति । अत एव इतः गमिष्यामि । ( इति उक्त्वा कोपं नाटयित्वा प्रदर्श्य प्रस्थिता चलिता । )

राजा—अपराधीति ।

हे रम्भोरु ! प्रसीद प्रसन्ना भव । कदलीस्तम्भसदृशे वृत्तानुपूर्वे ऊरू जङ्घे यस्याः सा एतादृशि प्रिये ! अहमेवापराधी नाम । संरम्भात् कोपात् विरम । क्रोधं हरेति भावः । सेव्यो जनः कुपितः तदा दासः कथं निरपराधः दोषशून्यः भवितुमर्हति । कथं स्याद्दासो निरपराधी यदि तस्याधिपतिस्तस्मै क्रुद्धः । प्रभोः कदापि समुत्पन्ने तु क्रोधे न दासस्य निरपराधत्वं निश्चेतव्यम् ।

सेव्यः—यस्य सेवा क्रियते, यो वा सेव्यत इति सेव्यः प्रभुः ।

इह "नाम" प्राकाश्यरूपेऽर्थे । अहमपराधी नाम इति अपराधित्वं प्रकाश्यते । अथवा यदि नामपदं अहंपदेन "अहं नामापराधीति" अन्वेति तदा

( इति पादयोः पतति )

**देवी**—( आत्मगतम् ) मा खु लहुहिअआ अणुणअं वहु मण्णे । किं दु दक्खिण्णकिदपच्छादावस्स भाएमि । [ मा खलु लघुहृदया अनुनयं वहु मन्ये । किन्तु दाक्षिण्यकृतपश्चात्तापस्य विभेमि । ]

( इति राजानमपहाय सपरिवारा निष्क्रान्ता )

**विदूषकः**—पाउसणदी विअ अप्पसण्णा गदा देवी । णं उट्ठेहि । [ प्रावृण्नदीवाप्रसन्ना गता देवी, ननूत्तिष्ठ । ]

---

"नाम" कुत्सारूपेऽर्थे । स्वस्यापराधित्वात् अन्यत्रकामुकत्वाच कुत्सितत्वं विज्ञाप्यते । "नाम" 'सम्भाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते' इति मेदिनी । नुश्चात्रानुनयार्थे—"नु स्यात् प्रश्ने विकल्पार्थेऽप्यतीतानुनयार्थयो"रिति विश्वः । इह च राज्ञः अनुनयात् पर्युपासनं नाम प्रतिमुखसन्ध्यङ्गम् ।

अत्र रम्भोरु—संरम्भात् इति एकानुपूर्व्या एवासकृदावृत्त्या छेकानुप्रासालङ्कृतिः "छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा" इति दर्पणोक्तलक्षणात् ।

इयं च आर्याजातिः—लक्षणं तु प्रागुक्तमेव ॥ २० ॥

इति पादयोः पतति—अनुनयार्थम् । इह तु "पादयोः पततीति" अत्र साम्नि निष्फले सति नतिर्नाम उपायः प्रयुक्तः इति ज्ञेयम्, कुतः अन्यासङ्गिनि प्रिये प्रमदानामीर्ष्याकृतं मानं "साम्ना भेदेन दानेन नत्युपेक्षारसान्तरै" रिति वचनादेभिः षडुपचारैः प्रसादनीयमिति अतः इह नतिः शठस्य नायकस्य कृते समीचीना ।

**देवी**—( आत्मगतम् ) लघुहृदया असंक्षोभ्यहृदया एतादृशैः कृत्रिमानुनयैरद्रुतहृदया अहं अनुनयं प्रणिपातादिकं बहु गुरु न मन्ये । अहं तावदीदृशैः प्रणिपातादिभिः आशु एवानुनेतुमशक्या इदं महाराजकृतं गुरु न चिन्तयामि किन्तु आर्यपुत्रस्य च्छन्दानुवर्तनरूपं यन्मम दाक्षिण्यव्रतं तज्जन्यो भावी यः पश्चात्तापः तस्मात् बिभेमि । यद्यप्यनुनयः न तावत् माम् द्रावयति किंतु भाविनोऽनुतापाद्भीताऽस्मि । अत्र लघुपदस्य हीनत्वं न वाच्यम्, किंतु लघुनाम असंक्षोभ्यम् । पुनरपि अत्र मन्यतेः लडन्तप्रयोगात् माशब्द एव ग्रहणीयः न तु माङ् ।

( इति राजानमपहाय त्यक्त्वा सपरिवारा परिजनैः सह निष्क्रान्ता । )

**विदूषकः**—प्रावृण्नदीवाप्रसन्ना गता देवी—प्रावृड् वर्षाऋतुः तत्कालीना नदी इव अप्रसन्ना देवी गता । अत्र अप्रसन्नेति पदे श्लेषः—देवीपक्षे अप्रसन्ना क्रुद्धा एव । नदीपक्षे आविला, अनिर्मलजला । यथा वर्षासु नदी अप्रसन्ना आविला भवति तथैव देव्यपि अप्रसन्ना क्रुद्धैव सती गता ।

अत्र च श्लेषप्राणितोपमालङ्कारः । ननु उत्तिष्ठ—ननु प्रार्थनायाम् ।

राजा—( उत्थाय ) वयस्य ! नेदमुपपन्नम् । पश्य—

प्रियवचनकृतोऽपि योषितां
दयितजनानुनयो रसादृते ।
प्रविशति हृदयं न तद्विदां
मणिरिव कृत्रिमरागयोजितः ॥ २१ ॥

---

राजा—( उत्थाय ) वयस्य ! इदमुपपन्नम् युक्तम् न, अनुचितमिदमिति भावः। औशीनर्या एतस्मिन् प्रसङ्गे इहागमनम् भूर्जपत्रस्य च तस्याः हस्ते प्राप्तिः, पुनश्च ममानुनयमनादृत्य तस्याः अप्रसन्नाया एव प्रतिनिवर्तनमादि यत्पूर्वं अभूत् तत् सर्वं सामान्यतस्तु असाम्प्रतमेव जातमित्यर्थः । चूर्णकस्थपश्येत्यस्यानुगामी श्लोकः कर्मत्वेनान्वेति । पश्य तर्कय मनाक्—

**प्रियवचनेति**—प्रियाणि प्रेमप्रदर्शकाणि च तानि वचनानि तैः कृतोऽपि कृत्रिमो मिथ्या रागः प्रेम तेन योजितः प्रयुक्तः दयितजनेन प्रियेण कृतः अनुनयः सान्त्वनम् रसात् अवितथरागात् ऋते विना तद्विदां कृत्रिमरागविदां योषितां स्त्रीणां हृदयं न प्रविशति हृदयग्राही न भवति यथा कृत्रिमेण रागेण रङ्गेण योजितः मिश्रितः मणिस्तद्विदां मणिकाराणां हृदयं न प्रविशति सन्तोषावहो न भवति ।

यथा कृत्रिमरागेण रक्तोऽयं मणिरथवा अकृत्रिमेणेति जानन्तो मणिकाराः कृत्रिमरागरक्तेन मणिना प्रसन्ना न भवन्ति तथैव कृत्रिमप्रीत्यभिज्ञाः स्त्रियोऽपि यथार्थरागविसंहतैर्प्रियवचनचाटुशतैः क्रियमाणेन प्रियजनानुनयेन न प्रसीदन्ति इति भावः ।

अत्रापि श्लेषः—कृत्रिमरागयोजित इत्यत्र रागपदम् श्लिष्टम्—योषित्पक्षे तस्य प्रेमवाचकत्वम् । मणिपक्षे अरुणिमा, रक्तत्वं वा रागपदवाच्यम् । तद्विदामित्यत्र तच्छब्देन कृत्रिमरागो गृह्यते । अत्रापि 'योजित' इति पदेन स अनुनयः न स्वयं स्वाभाविकतयोत्पद्यते किन्तु कथमपि कृत्रिमरागबलेन योजितो भवतीति विशेषार्थं द्योतयितुं णिजन्तप्रयोगात्लिङ्गनम् । अपिपदं गर्हायाम्—प्रियवचनानां निरर्थकता च प्रदर्शिता ।

योषितामित्यत्र दयितापदमप्रयुज्य योषित्पदग्रहणेन तस्यां प्रियस्यान्यनायिकाकामुकत्वात् प्रीतिराहित्यम् किन्तु सा तु तस्मिन् रज्यते एव अमुमर्थमुद्दिश्य 'योषति सेवते पतिम् इति योषित्' इति व्युत्पत्तिनिरुक्तं पदं प्रयुक्तम् । तथा च द्वितीयचरणे स्त्रीमनसि तु स्वस्य पत्यौ तदेवोच्चभावनासद्भावात् दयितपदस्वीकारः तथा च प्रेम्णः रागाद् वा ऋते इति प्रयोगमनादृत्य रसादिति पदस्वीकृतिरिह रस्यते रसयति चेति रसः रागस्य परा कोटिरिति व्युत्पत्तिलभ्यं विशेषार्थं द्योतयति ।

अत्र उपन्यासो नाम प्रतिमुखसन्ध्यङ्गम् । यस्य लक्षणं तावत् 'उपपत्तिकृतो योऽर्थः उपन्यासः स कीर्तितः' इति । अत्र असहजरागप्रदर्शनान्न सा प्रसादमेष्यतीत्युपपन्नार्थनिक्षेपाल्लक्षणसमन्वयः ।

**विदूषकः**—अणुऊलं एव्व एदं भवदो । ण हु अक्खिदुक्खिदस्स पमुहे दीवसिहा सहेदि । [ अनुकूलमेवैतद्भवतः । न खल्वक्षिदुःखितस्य प्रमुखे दीपशिखा सहते । ]

**राजा**—मैवम् । उर्वशीगतमनसोऽपि मे देव्यां स एव बहुमानः । किन्तु प्रणिपातलङ्घनादहमस्यां धैर्यमवलम्बिष्ये ।

**विदूषकः**—चिट्ठदु दाव धीरदा । बुभुक्खिदबम्हणस्स जीविदं अवलम्बदु भवम् । समओ खु ण्हाणभोअणे सेविदुम् । [ तिष्ठतु

---

अत्र ऋते योगे पञ्चमी—“अन्यारादि॰” इति सूत्रवचनात् ।

इह च श्लोकेऽर्धसमवृत्तं छन्दः । वृत्तं च अपरवक्त्रं नाम । तदुक्तं वृत्ते—“अयुजि ननरलगाः : समे नजौ जरौ” इतिः अस्य प्रथमतृतीयपादयोः नकारौ रेफलकारगकाराश्च तथा द्वितीयचतुर्थयोः नकारजकारौ जकाररेफौ च तद्वृत्तमपरवक्त्रं नाम । वृत्तमिदं अर्धसमम् वैतालीयान्तर्गतम् ॥ २१ ॥

**विदूषकः**—एतद् तस्याः इतो गमनं भवतः अनुकूलं इष्टमेव । न खलु अक्षिदुःखितस्य चक्षूरोगरुग्णस्य प्रमुखे सम्मुखे दीपस्य शिखा तेजः ज्योतिः सहते । यथा चक्षूरोगिणे दीपशिखा अहिता तथैव सा तुभ्यमहितैव । अत्रान्योक्तिः । खलुर्वाक्यभूषणम् । अक्षिदुःखितेत्यत्र प्राकृते पूर्वनिपातानियमात् दुःखिताक्षस्येतिस्थाने प्रकृतरूपमेव साधु । अत्र कर्तरि षष्ठी ।

**राजा**—मैवम् । मा भवन्तः इत्थं विचारं कुरुत । उर्वश्यां गतम् लग्नम् मनः यस्य एतादृशस्यापि मम देव्यां काशिराजदुहितरि स एव बहुमानः आदरः । किन्तु प्रणिपातोऽनुनयस्तस्य लङ्घनादुत्क्रमणात् अहमस्यां देव्यां धैर्यमवलम्बिष्ये । धैर्यं धारयिष्यामीति भावः । प्रणिपातप्रभृतिप्रसादनपरम्पर-प्रवीणानां समस्तानां इहास्तमितप्रभावाणामुपायानां निरुपायत्वे फलिते सति धैर्यावलम्बनपरे एव राज्ञि प्रतिपादिते “उपेक्षा धैर्यधारणमिति” वचनात् उपेक्षा नाम सन्ध्यङ्गमुक्तं भवति ॥ आत्मनः प्रसादमप्रदर्श्यापि औशीनर्या गमनं उर्वशीबद्धमनसो राज्ञः कृते तु अनुकूलमेवाभवदिति विदूषकाभिप्रायः । तमर्थं राजा निषेधति—वयस्य माणवक ! यत्त्वमात्थ यदौशीनर्या गमनं मेऽनुकूलमेव तन्न । यतः यद्यपि मे मनः उर्वश्यां बद्धं तथापि देव्यामौशीनर्यां मम तादृश एव बहुमानः अस्ति; किन्तु अधुना मया कृतस्यानुनयस्य झगिलवहेलनं तया कृतम् अनेनागसा दूषिता सा यद्यपीतः अप्रसन्ना परावृत्ता तथापि अहं तस्या अप्रसादं न परिगणयामि । अत एव यद्यपि तस्या इतो गमनं केनापि प्रकारेण ममानुकूलं न, तथापि कथमपि तन्मम न चिन्ताहेतुः । अनेन चाहं अक्षुब्धो भूत्वा अस्यां औशीनर्याः विषये, तस्याः अप्रसादविषये च अहं धैर्यमवलम्बिष्ये, मनागपि सचिन्तो न भवामीति भावः । परिच्छन्नभावोऽयं नायकगतं शठत्वं गमयति ॥

**विदूषकः**—तिष्ठतु तावद्धीरता । तव नाम धीरता अस्तु । अहं तु बुभुक्षितः

तावद्धीरता । बुभुक्षितब्राह्मणस्य जीवितमवलम्बतां भवान् । समयः खलु स्नानभोजने सेवितुम् । ]

**राजा**—( ऊर्ध्वमवलोक्य ) कथमर्धं गतं दिवसस्य । अतः खलु—

उष्णार्तः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरि कर्णिकारमुकुलान्याशेरते षट्पदाः ।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैष पञ्जरशुकः क्लान्तो जलं याचते ॥ २२ ॥

---

न धीरतां धारयितुं प्रभवामि । बुभुक्षितस्य क्षुधितस्य ब्राह्मणस्य जीवितं भोजनं अवलम्बतां भवान् इति उपहासः । समयः खलु स्नानं च भोजनं च स्नानभोजने तयोः सेवनस्य प्राप्तः ।

इदानीं भोजनवेला अतिक्रामति ।

**राजा**—( ऊर्ध्वं सूर्यस्थितिमवलोक्य )

कथं दिवसस्य अर्धं गतम्—कथं मध्याह्नः प्राप्तः इति । पुरा घटिकायन्त्राद्यभावात् गगने सूर्यस्थित्यैव वेलापरिज्ञानं भवति स्म । कथमिति विस्मये ।

यतः मध्याह्नः प्राप्तः अस्माद्धेतोः—किं क्रियते इति विवक्षा श्लोकेन प्रपूर्यते । खलु निश्चये ।

**उष्णार्त इति**—मध्याह्नसमयस्य वर्णनमिदम् । उष्णेन आर्तः पीडितः शिखी मयूरः तरोः वृक्षस्य शिशिरे शीतले मूलालवाले मूले कृतो जलाधारस्तस्मिन् निषीदति उपविशति । उष्णेन बाधितो मयूरः तरूणां जलाधारेषु शीतले जले उपविशतीति भावः । अनेन दिने बलवान् ऊष्मा जात इति गम्यमानत्वात् मध्याह्नवेलेयमिति अनुमीयते । षट्पदाः भ्रमराः कर्णिकारपुष्पाणां मुकुलानि कलिका निर्भिद्य विदीर्य आशेरते स्वपन्ति विश्राम्यन्ति वा । उष्णत्वात् भ्रमरा अपि निद्रां लभन्ते इत्यनेन मध्याह्नकालोऽनुमीयते । कारण्डवः पक्षिविशेषः तप्तं सूर्यातपादुष्णं वारि जलं विहाय परित्यज्य तीरस्थां नलिनीं कमलिनीं सेवते । नलिन्याः शीतलत्वात् तत्र सुखम् । अनेनापि मध्याह्नसमयोऽनुमीयते । एषः क्लान्तः तृषयोद्विग्नः पञ्जरशुकः पञ्जरस्थः कीरः क्रीडावेश्मनि लीलागृहे जलं याचते । मध्याह्नकाले तृषा बलवत्तरं बाधते अत एव जलं याचते । इति चिह्न-चतुष्टयप्रदानेन मध्याह्नसमय एष सम्प्राप्त इति निश्चीयते ।

शिखी—शिखा चूडा मयूराणां शिरोवर्तिनी । सा यस्यास्तीति शिखी मयूरः—"शिखावलः शिखी केकी" इत्यमरः । षट् पादाः येषां ते षट्पदा भ्रमराः ।

अत्र च स्वभावोक्तिरलङ्कारः । सर्वेषां स्वभावोऽयं यत् उष्णेन बाध्यमानाः शीतलं स्थलं विचिन्वन्ति ।

( इति निष्क्रान्तौ । )

॥ द्वितीयोऽङ्कः ॥

---

तथा च मध्याह्न इवेत्येवमिति निश्चयार्थं एक एव हेतुः चिह्नं वा पर्याप्तमासीत् । प्रतिपादिते शिखिनः मूलालवाले निषीदने मध्याह्नः सम्प्राप्त इति निश्चयो भवितुं अर्हति । तदापि बहुचिह्नप्रदानेन समुच्चयालङ्कारः । तल्लक्षणं यथा—"समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके । खलेकपोतिकान्यायात्तत्करः स्यात्परोऽपि चेदिति" साहित्यदर्पणे । अनेन अधुना विश्रामसमयः स्नानभोजनकालश्च समायातः अतश्चेतो गन्तव्यम् इति व्यज्यते । तथा च काव्येषु मध्याह्नवर्णनम् नूतनम् ।

( इति निष्क्रान्तौ )

राजविदूषकौ रङ्गभूमितः निःसृतौ ।

इति द्वितीयोऽङ्कः द्वितीयः परिच्छेदः । अङ्कलक्षणं तूक्तं प्रागेव ।

इति श्रीमत्प्रमोदमोदमानमानसरसाविभक्तभगवल्लीलाललितकीर्तनकुतूहलस्वानन्दसक्तभक्तगोष्ठीगरिष्ठाणां रामानुजार्यकैङ्कर्यधुरीणानां प्रखरकिरणकरप्रतिभतेजःप्रकरप्रभाकराणां कविपण्डितेन्द्रमण्डलालङ्कारहीराणां अजस्रप्रणामारुणितवन्दारुराजन्यवृन्दमुकुटमौक्तिकपूज्यपदारविन्दद्वन्द्वानां रसिकतारसनिधीनां तोताद्रिविज्ञानविभवपीठाधीशानामाचार्यवर्याणां न्यायवेदवेदान्तमीमांसाद्यखिलनिगमागममन्थानशेमुषीकाणां विज्ञानविभूषणपदधारिणां स्वामिनां इन्दूरपुराभरणानां श्रीकृष्णाचार्याणाम् तनूभवेन सहृदयताजलधिकौस्तुभेन एम्. ए. काव्यतीर्थसाहित्यविशारदाद्यनेकोपाधिसमुल्लसितेन सुरेन्द्रनाथशास्त्रिणा विरचितायां विक्रमोर्वशीसञ्जीविकायाम् कल्पलतासमाख्यायाम् व्याख्यायाम् द्वितीयाङ्कोन्मेषः ।



# तृतीयोऽङ्कः ।

( ततः प्रविशतो भरतशिष्यौ )

**प्रथमः**—सखे पेलव ! अग्निशरणाद्गच्छता महेन्द्रमन्दिरमुपाध्यायेन त्वमासनं ग्राहितः । अहमग्निशरणरक्षार्थं स्थापितः । ततः पृच्छामि गुरोः प्रयोगेण देवपरिषदाराधिता न वेति ।

**द्वितीयः**—गालव ! ण आणे कहं आराधिता भोदि । तस्सिं उण सरस्सईकिदकव्वबन्वे लच्छीसअंवरे उव्वसी तेसु तेसु रसन्तरेसु उम्माइआ आसि । किन्तु······[ गालव ! न जाने कथमाराधिता भवति । तस्मिन् पुनः सरस्वतीकृतकाव्यबन्धे

---

॥ तृतीयोऽङ्कः ॥

सविदूषकस्य राज्ञः द्वितीयाङ्कवस्तुजाते जाते तु मध्याह्नसमये रङ्गभूमितो निष्क्रमणानन्तरमिदानीं पेलवगालवनाम्नोः नाट्यशास्त्रपारदृश्वनो भरतमुनेः शिष्ययोर्मुखाभ्याम् राज्ञः पुनरुर्वशीसमागमसूचनाय तृतीयाङ्कं प्रारिप्सुस्तत्रभवान् कविराजस्तयोः प्रवेशं तावदाह—

( ततः द्वितीयाङ्कसमास्तौ भरतमुनेः शिष्यौ प्रविशतः )

**प्रथमः**—सखे पेलव ! महेन्द्रस्य मन्दिरं भवनं अग्निशरणात् होतव्याग्निगृहात् गच्छता उपाध्यायेन भगवता भरतेन त्वं आसनं स्वीयमृगचर्मासनम् ग्राहितः । अग्निशालातः इन्द्रभवनं गच्छता भरतेन तुभ्यं आसनं प्रदत्तमिति भावः । अहं च अग्निशरणस्याग्निशालायाः रक्षणार्थं स्थापितो नियुक्तः । ततः यतः अहमत्रैव स्थापितः न बहिर्गतः ततः नाहं जानामि किं जातमित्यतः पृच्छामि गुरोः भगवतः भरतस्य तेन कारितेन प्रयोगेण नाट्याभिनयेन देवानां परिषत् सभा आराधिता प्रीणिता सन्तोषिता न वा इति । अत्र पेलवस्य पट्टशिष्यत्वं गम्यते ।

ग्राहित इति णिजन्तप्रयोगः—गृहधातोर्णिच् ।

शरणपदस्य गृहत्वमपि वाच्यम् "शरणं गृहरक्षित्रो" रिति विश्वकोषः । गुरोः प्रयोगेणेत्यनेन गुरुप्रदिष्टेन प्रयोगेण न तु स्वयमभिनीतेन । वा इति विकल्पे । अत्र गौणे कर्मणि क्तः "गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छयेति" । यथा वान्यत्र "अयाचितारं नहि देवदेवं अद्रिः सुतां ग्राहयितुं शशाक" ।

**द्वितीयः**—गालव ! गालवपेलवौ तयोर्भरतशिष्ययोर्नामनी । न जाने कथमाराधिता भवति । देवपरिषदाराधिता न वेति नाहं जाने । किन्तु तस्मिन् प्रयोगे पुनः सरस्वत्या देव्या कृतः काव्ये बन्धो ग्रथनं यस्य तादृशि लक्ष्मीस्वयंवरे

लक्ष्मीस्वयंवरे उर्वशी तेषु तेषु रसान्तरेषु उन्मादितासीत् । ]
किन्तु······ । ]

**प्रथमः**—सदोषावकाश इव वाक्यशेषः ।

**द्वितीयः**—आम । ताए वअणं पमादक्खलिदं आसि ।
[ आम् । तस्या वचनं प्रमादस्खलितमासीत् । ]

**प्रथमः**—किमिव ।

**द्वितीयः**—लच्छीभूमिआए वट्टमाणा उव्वसी वारुणीभूमिआए वट्टमाणाए मेणआए पुच्छिदा । समाअदा तेल्लोक्कपुरिसा सकेसवा लोअवाला । कदमस्सिं दे हिअआहिणिवेसो त्ति ।
[ लक्ष्मीभूमिकया वर्तमाना उर्वशी वारुणीभूमिकया वर्तमानया मेनकया पृष्टा । समागताः त्रैलोक्यपुरुषाः सकेशवा लोकपालाः ।

---

तदाख्ये काव्ये उर्वशी तेषु तेषु काव्ये विद्यमानेषु रसान्तरेषु विविधेषु रसेषु उन्मादिता स्खलिता आसीत् । अभिनेतव्ये प्रयोगे उर्वशी सप्रमादा बभूवेति भावः ।

स्वयंवरः—पुरा हि रीतिरासीदीदृशी यत् कन्यका स्वीयं पतिं स्वयमेव वृणोति स्म । तत्र सर्वे कामयितारः कन्यायाः पितुर्गृहे सन्निमलन्ति । तेषु कमपि पुरुषं सा कन्यका स्वीयं भाविनं पतिं वृणोति । वरणानन्तरं सर्वे विवाहविधयः क्रियन्ते । नैतेषु विवाहविधिषु प्रकृतः स्वयंवरविधिरपि अन्यतमः । स्वयं व्रियते वरो यस्मिन्निति स्वयंवरः । अत्र पुनरवधारणे ।

लक्ष्मीः—विष्णोः पत्नी देवदानवैर्मथ्यमानात् सागरात् समुद्भूता चतुर्दशरत्नान्यतमा । वारुणी अपि अनयैव सह निर्गता ।

रसः—प्रतिकाव्यं भवति कश्चन रसो विलक्षणानन्दहेतुः केवलं सहृदयैरेव चर्व्यमाणः चमत्काराधायकः विभावानुभावसञ्चारिभावैर्व्युत्पाद्यमानो भावनाविशेषः । सविस्तरं पुस्तकान्ते वक्ष्यते । किन्तु·········। वाक्यमपूर्णम् ।

**प्रथमः**—ते वाक्यशेषः अपूर्णमिदं वाक्यम् दोषाय प्रमादाय अवकाशः सम्भवः तेन सहितः सदोषावकाशः इवास्ते । अपूर्णमिदं ते वचः किमपि स्खलितं सूचयतीति भावः ।

**द्वितीयः**—आम् निश्चये स्मरणे वा । तस्या उर्वश्या वचनं प्रमादेन असावधानतया स्खलितं सम्यगुचारितं नासीत् ।

"आम्—ज्ञान विनिश्चये" इति बोपालितः । प्रमादोऽनवधानता ।

**प्रथमः**—किमिव–कथम्भूतः स प्रमाद इति ।

**द्वितीयः**—लक्ष्म्याः भूमिका वेषः यस्याः सा तया लक्ष्मीभूमिकया वर्तमाना उर्वशी गृहीतवारुणीवेषया मेनकया पृष्टा । त्रैलोक्यपुरुषाः लोकत्रयगताः पुरुषाः

कतमस्मिंस्ते हृदयाभिनिवेशः इति ।]

**प्रथमः**—ततस्ततः ।

**द्वितीयः**—ताए पुरिसोत्तमे त्ति भणिदव्वे पुरूरवसि त्ति णिग्गदा वाणी । [ तस्याः पुरुषोत्तम इति भणितव्ये पुरूरवसीति निर्गता वाणी । ]

**प्रथमः**—भवितव्यतानुविधायीनि बुद्धीन्द्रियाणि । स तामभिक्रुद्धो मुनिः ?

---

केशवेन कृष्णेन सहिताः लोकपालाः देवाः इह समागताः । एषु कतमस्मिन् कस्मिन् ते हृदयस्य अभिनिवेशः संलग्नता ।

भावार्थः—यदा इन्द्रसभायां लक्ष्मीस्वयंवराख्यं वस्तु प्रयुक्तम् तदा उर्वश्या लक्ष्मीवेशपरिग्रहः कृतः । मेनकया च वारुण्याः । लक्ष्मीवारुण्यौ लक्ष्मीस्वयंवराख्यस्य प्रयोगस्य पात्रविशेषौ । स्वयंवरसमये वारुणी तत्र प्रयोगे लक्ष्मीं पृच्छति यत् अत्र सर्वे प्रहसितमाराः सुकुमाराः कुमाराः समागताः, अतः कं महानुभावं त्वं स्वीकारेणालञ्चिकीर्षसीति । तदेवाह—यत् लक्ष्मीरूपां उर्वशीं वारुणीरूपा मेनका पृष्टवती यदेषु कतमस्मिन् ते हृदयं सज्यत इति । "भूमिका रचनायां स्यात्" इति विश्वः ।

**प्रथमः**—ततस्ततः—प्रश्नानन्तरं किं जातमिति—

**द्वितीयः**—पुरुषाणामुत्तमो विष्णुस्तस्मिन् पुरुषोत्तमे मे हृदयम् सक्तम् इति भणितव्ये वक्तव्ये तस्या उर्वश्याः वाणी पुरूरवसि विक्रमे मम हृदयम् लग्नमिति निर्गता । भावस्तु—गृहीतनाटकवेषया लक्ष्मीरूपया उर्वश्या तत्र विष्णौ मे हृदयं सज्यते इति वक्तव्ये पुरूरवसीति अन्यदेव प्रोक्तम् । इति प्रमादः ।

अनेन नायिकाया पुरूरवसि अगाधं प्रेम व्यज्यते ।

**प्रथमः**—बुद्धीन्द्रियाणि बुद्धिश्च इन्द्रियाणि च तानि बुद्धीन्द्रियाणि बाह्यान्तःकरणानि भवितव्यतायाः भाविनः फलस्य अनुविधायीनि । भाविनं फलमेवानुसरन्ति इन्द्रियाणीति भावः । स मुनिः भरतस्तमभिक्रुद्धः । तस्यै क्रुद्धः किं गुरुरिति पृच्छा ।

तामभिक्रुद्ध इत्यत्र "क्रुधद्रुहेति" सूत्रानुसारं यं प्रति कोपस्तस्य चतुर्थीति न्यायेन तस्यै क्रुद्ध इति भवितव्यम् । किन्तु अभिपदस्य सन्निधानात् अभियोगे द्वितीयापि प्राप्ता । एकतः चतुर्थी प्राप्ता अन्यतो द्वितीया । उभयोर्मध्ये "कारकविभक्तेरुपपदविभक्तिर्बलीयसी । यथा—मुनित्रयं नमस्कृत्येति बलाबलाविचारतः उपपदविभक्तेः द्वितीयाया एव प्राशस्त्यम्" ।

द्वितीयः—सत्ता उवज्झाएण । महिन्देण उण अणुग्गहीदा । [ शप्ता उपाध्यायेन । महेन्द्रेण पुनरनुगृहीता । ]

प्रथमः—कथमिव ।

द्वितीयः—जेण मम तुए उवदेसो लङ्घिदो तेण ण दे दिव्वं ठाणं हविस्सदि त्ति उवज्झाअस्स सआसादो सावो । पुरंदरेण उण लज्जावणदमुहिं उव्वसिं पेक्खिअ एवं भणिदम्—'जस्सिं बद्धभावासि तुमं, तस्स मे रणसहाअस्स राएसिणो पिअं करणिज्जं । ता दाव तुमं पुरूरवसं जहाकामं उवचिट्ठ जाव सो दिट्ठिसंताणो होदि त्ति । [ येन मम त्वयोपदेशो लङ्घितस्तेन न ते दिव्यं स्थानं भविष्यति इति उपाध्यायस्य सकाशात् शापः । पुरन्दरेण पुनः लज्जावनतमुखीमुर्वशीं प्रेक्ष्यैवं भणितम्—'यस्मिन्बद्धभावासि त्वं, तस्य मे रणसहायस्य राजर्षेः प्रियं करणीयम् । तत्तावत्त्वं पुरूरवसं यथाकाममुपतिष्ठस्व यावत्स परिदृष्टसन्तानो भवति—इति । ]

प्रथमः—सदृशं पुरुषान्तरवेदिनो महेन्द्रस्य ।

---

द्वितीयः—उपाध्यायेन गुरुणा भरताचार्येण शप्ता तस्यै शापो दत्तः । महेन्द्रेण पुनरनुगृहीता, तस्यै दयार्द्रता प्रकाशिता । उपाध्यायेन शप्तेति पूर्ववाक्यात् विरोधप्रदर्शनार्थमुत्तरस्मिन् वाक्ये पुनरिति पदग्रहणम् "अत्र पुनर्भेदे" पुनरप्रथमे पक्षे मतम्—"अधिकारे च भेदे च तथा पक्षान्तरेऽपि च" इति मेदिनी ।

प्रथमः—कथमिव—उपाध्यायेन किं शप्तम्, तथा च महेन्द्रेण कथमनुगृहीतेति प्रश्नः ।

द्वितीयः—इत्थमुपाध्यायेन शप्ता—येन यस्मात् कारणात् त्वया ममोपदेशः लङ्घितस्त्यक्तः तेन तस्मात् कारणात् ते दिव्यं स्वर्गीयं स्थानं निवासं न भविष्यतीति उपाध्यायसकाशात् शापः । त्वमत्र स्वर्लोके स्थातुं नार्हसीति शप्तम् ।

पुरन्दरेण महेन्द्रेण च लज्जया अवनतं मुखं यस्याः सा तादृशीमुर्वशीं प्रेक्ष्य एवं भणितमुक्तम्—"यस्मिन् जने त्वं बद्धभावा आसक्ता असि तस्यैव मम रणे सहायकस्य राजर्षेः पुरूरवसः प्रियं करणीयम् । तत्र गत्वा तेन सहोषित्वा तस्य प्रियं सम्पादनीयम् । तत्तावत् त्वं पुरूरवसं तव कामयितारं यथाकामं यथेच्छं उपतिष्ठस्व सेवस्व यावत् सः त्वयि परिदृष्टसन्तानो भवति । यावता कालेन स त्वत्तः समुत्पन्नां सन्ततिं पुरः पश्येत् तावत् पर्यन्तं यथेच्छं त्वं तं भजस्वेति । उपाध्यायकृतनिग्रहेऽनुग्रहो महेन्द्रेणाकारि ।

प्रथमः—पुरुषाणामन्तरस्य अन्तःकरणस्य वेदिनः ज्ञानिनः महेन्द्रस्य सदृ-

**द्वितीयः**—( सूर्यमवलोक्य ) कधापसङ्गेण अवरद्धा अहिसेअवेला । ता उवज्झाअस्स पास्सवत्तिणो होम । [ कथाप्रसङ्गेनापराद्धाभिषेकवेला । तदुपाध्यायस्य पार्श्ववर्तिनौ भवावः । ]

( इति निष्क्रान्तौ )

विष्कम्भकः ।

( ततः प्रविशति कञ्चुकी )

**कञ्चुकी**—

सर्वः कल्पे वयसि यतते लब्धुमर्थान् कुटुम्बी
पश्चात्पुत्रैरपहृतभरः कल्पते विश्रमाय ।

---

दामेवायं निग्रहानुग्रहः । पुरुषाणां मनसि किं वर्तत इति परिज्ञानिना महेन्द्रेण अनुग्रहोऽयं स्वरूपानुरूप एव कृतः इति भावः ।

**द्वितीयः**—( वेलापरिज्ञानाय सूर्यमवलोक्य )

कथाप्रसङ्गेन वार्ताक्रमात् गुरोरभिषेकस्य स्नानस्य वेला अपराद्धा अतिक्रान्ता । अतः उपाध्यायस्य पार्श्ववर्तिनौ भवावः । तस्यैव समीपं गच्छावः इति भावः ।

( इति निष्क्रान्तौ )

**विष्कम्भकः**—एकस्य अङ्कस्य समाप्तौ अन्यस्य च प्रारम्भवेलायां रङ्गभूमौ यददृष्टं भूतं भावि वा तस्य प्रेक्षकाणां परिज्ञानायार्थोपक्षेपकाः प्रयोज्याः ॥ यदुक्तम्—

"द्विधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः ।
सूच्यमेव भवेत् किञ्चिद्दृश्यश्रव्यमथापरम् ॥"

तत्र च पञ्च अर्थोपक्षेपकाः—

"अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥"

**तत्र विष्कम्भकः**—

"वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः" ॥

वृत्तवर्तिष्यमाणानां भूतभविष्यमाणानामिति ।

"ततः विष्कम्भानन्तरं कञ्चुकी प्रविशति । कञ्चुकी तावत् वृद्धः पुरुषः कर्तव्याकर्तव्यविवेकज्ञः राज्ञः शुद्धान्तचारी । तल्लक्षणं यथा—

"अन्तःपुरचरो राज्ञो वृद्धो विप्रो गुणान्वितः ।
उक्तिप्रत्युक्तिकुशलः कञ्चुकीत्यभिधीयते ॥" इति धानञ्जये ।

**सर्व इति**—सर्वः कुटुम्बी गृहस्थः कल्पे समर्थे वयसि अर्थान् वस्तूनि विषयान् वा लब्धुं प्राप्तुं यतते । साधारणोऽयं नियमः यत् गृहस्थी तारुण्ये

अस्माकं तु प्रतिदिनमियं सादयन्ती प्रतिष्ठां
सेवा कारापरिणतिरभूत् स्त्रीषु कष्टोऽधिकारः ॥ १ ॥

( परिक्रम्य ) आदिष्टोऽस्मि सनियमया काशिराजदुहित्रा—यथा—
"व्रतसम्पादनाय मया मानमुत्सृज्य निपुणिकामुखेन पूर्वं याचितो

---

आवश्यकीयवस्तुसम्पादनाय यत्नं कुरुते । पश्चात् अतीते तु तारुण्ये, पुत्रैः अपहृतो गृहीतो भरः गार्हस्थभारः यस्य स तादृशः सन् विश्रामाय शान्त्यै कल्पते शान्तिं लभते इति भावः । प्राप्ते तु वार्धक्ये पुत्रेषु समारोपित-गार्हस्थ्यव्यवस्थः स्वस्थः सन् शान्तिं कामयते ।

किन्तु गृहीतकञ्चुकिकार्येऽस्मान् अस्माकमियं प्रतिदिनं दिने दिने नियमतः प्रतिष्ठां विश्रान्तिं सादयन्ती नाशयन्ती सेवा कारापरिणतिः कारागृहरूपा अभूत् । अस्माकन्तु न कदापि विश्रामो लभ्यते । सदैव कार्यव्यापृतत्वमेवास्माकम् । तेन च बन्धनगृहसदृशी जातेयं सेवा इति भावः । अतः सामान्यं वस्तूपस्थापयति—

अतः स्त्रीषु स्त्रीणां विषये अधिकारः कार्यकारित्वं कष्टः कष्टदायीति भावः । यतः जरत्तरत्वेऽपि विश्रान्तिर्न लभ्यते ।

सरलार्थस्तु—सर्वे गृहस्थाः तरुणे वयसि गार्हस्थ्यभारमुद्वहन्ति । वशं गते तु वार्धक्यस्य, पुत्रेषु भारं समारोप्य विश्राममाप्नुवन्ति किन्तु अस्माकन्त्वेतादृशी सेवा यत् अस्माकं विश्रान्तिं नाशयित्वा केवलं बन्धनायैवेयं सम्पन्ना । अतः स्वीयं खेदं प्रकाशयति यत् स्त्रीषु कष्टोऽधिकारः इति । सर्वः कुटुम्बी इति जातावेकवचनम् ।

कल्पे—समर्थे-शक्तिसम्पन्ने वयसि तरुणे इति भावः । "क्लृपू सामर्थ्ये-" इति धातोः ।

अर्थान् द्रव्याणि विषयान् वा—"अर्थो विषयार्थनयोर्धनकारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने" इति मेदिनी । सादयन्ती नाशयन्ती-"साद नाशने" इति धातोः । शतृप्रत्ययः । प्रतिष्ठा-प्रकर्षेण स्थितिरिति प्रतिष्ठा विश्रान्तिः । कारापरिणतिः—कारायां बन्धने परिणतिः परिणामः यस्याः सा बन्धनरूपा सेवा । "कॄ विक्षेपे" इति "कारा स्याद्बन्धनालये" इत्यमरः । स्त्रीषु इति विषयसप्तमी । कष्टः कष्टप्रदः इत्यर्थः । अनेन सेवकानां विश्रामवैमुख्यं प्रदर्शितम् । "सेवाधर्मः परमगहनो योगिनामप्यगम्यः" इत्युक्तमेव । मन्दा-क्रान्तावृत्तम् तल्लक्षणं यथा भट्टकेदारः—"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्" इति ।

यदि मगणभगणौ नगणतगणौ तगणश्च गुरुद्वयं च तदा मन्दाक्रान्ता नाम वृत्तम् । अत्र चरमचरणे अर्थान्तरन्यासोऽलङ्कारः ॥ १ ॥

( परिक्रम्य ) नियमेन सहितया सनियमया गृहीतव्रतया काशिराजस्य दुहित्रा कन्यया राजमहिष्या आदिष्टोऽस्मि समाज्ञापितोऽस्मि—यथा—"व्रतस्य सम्पा-

महाराजः। तदेव मद्वचनाद्विज्ञापय" इति यावदहमवसितसन्ध्याकार्यं महाराजं पश्यामि।

(परिक्रम्यावलोक्य च)

रमणीयः खलु दिवसावसानवृत्तान्तो राजवेश्मनि—

उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा बर्हिणो
धूपैर्जालविनिःसृतैर्वलभयः सन्दिग्धपारावताः।
आचारप्रयतः सपुष्पबलिषु स्थानेषु चार्चिष्मतीः
सन्ध्यामङ्गलदीपिका विभजते शुद्धान्तवृद्धो जनः॥ २॥

---

दनाय समाप्त्यै व्रतस्य अनुच्छेदार्थं मया मानं चित्तोन्नतिमाग्रहं वा उत्सृज्य परित्यज्य निपुणिकामुखेन पूर्वमेव महाराजो याचितः प्रार्थितः। मदापराधिनमपि महाराजं मम व्रतपूरणाय अहं स्वीयमानं विहाय निपुणिकाद्वारा प्रार्थितवती इत्यर्थः। तदेवार्थं मद्वचनात् विज्ञापय निवेदय" इति महिष्या आदेशः।

"मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे" इति हैमः। यावदिति—इति आदेशं गृहीत्वा अहं अवसितं समापितं सन्ध्याकार्यं येन तादृशं महाराजं पश्यामि। (परिक्रम्यावलोक्य च)

रमणीय इति—राजवेश्मनि राजप्रासादे दिवसस्य अवसानं समाप्तिस्तस्य वृत्तान्तो रमणीयः खलु। सायन्तनी वेला प्रासादे राजत इति सारः। कथं राजत इत्याह—

**उत्कीर्णा इवेति**—वासयष्टिषु पक्षिणां वासार्थं निर्मितेषु निखातेषु वा वंशदण्डेषु निशासम्बन्धिनी या निद्रा तया अलसा सतन्द्रा बर्हिणो मयूराः उत्कीर्णाः पाषाणे खचिता इव सन्ति। मयूराः निद्रावशात् निश्चलाः सन्तीति भावः। जालेभ्यो वातायनेभ्यः निःसृतैर्निर्गतैः सुगन्धिधूपैः वलभयः शिरोगृहाणि सन्दिग्धाः शङ्किताः पारावताः कपोताः यासु तादृश्यः अवभासन्ते। चन्द्रशालासु धूपसद्भावात् तत्र किं कपोताःसन्तीति अवभासते। इयं कवेः उत्प्रेक्षा।

आचारे नियमे प्रयतस्तल्लीनः पवित्रो वा शुद्धान्तस्थः अन्तःपुरस्थो वृद्धो जनः पुष्पैश्च बलिभिश्च युक्तेषु सपुष्पबलिषु स्थानेषु अर्चिष्मतीः ज्वालासहिताः सन्ध्यासमये माङ्गलिकाः दीपिकाः विभजते संस्थापयति। सकुसुमोपहारेषु स्थलेषु शुद्धान्तवृद्धो जनः दीपकान् स्थापयतीति भावः। विभजते विभक्तान् करोति तत्र तत्र स्थाने निवेशयतीत्यर्थः। "वलभी चन्द्रशालिका" इत्यमरः—तदाख्यशिरोगृहम् (Terrace)। प्रयतस्तत्परः पवित्रो वा "पवित्रः प्रयतः पूतः" इत्यमरः।

शुद्धान्तवृद्धो जनः इत्यत्र कैश्चित् पाश्चात्यैः 'जनः' इति पदस्य समस्तत्व एव समूहार्थावबोधकत्वमित्युक्त्वा पाठोऽयं दूषित इत्यङ्गीक्रियते किन्तु तत्तावदनुचितम्।

( नेपथ्याभिमुखमवलोक्य ) अये ! इत एव प्रस्थितो देवः—

परिजनवनिताकरार्पिताभिः परिवृत एष विभाति दीपिकाभिः ।
गिरिरिव गतिमानपक्षसादादनुतटपुष्पितकर्णिकारयष्टिः ॥ ३ ॥

---

एतादृशप्रयोगस्यापि कविसम्मानितत्वात् । "दिव्यो जनः" "वृद्धो जनो दुःखशतानि भुङ्क्ते" इत्येतेषां दर्शनात् । अपि चात्र वृद्धाः पुरुषाः इत्यभिप्रायः ।

अत्रोत्प्रेक्षालङ्कारः । अनुत्कीर्णानामपि मयूराणां उत्कीर्णतासम्भावनात् धूमे च कपोतसम्भावनात् ।

"शार्दूलविक्रीडितं वृत्तम्" ॥ २ ॥

( नेपथ्यस्य तिरस्करिण्याः अभिमुखं दृष्ट्वा )

अये इति विस्मये अन्वेष्टुमिष्टस्य वस्तुनो लाभादानन्दे वा । इत एव प्रस्थितो देवः इहैवायाति देव इति ।

**परिजनेति**—परिजनभूतानां परिचारिकाणां वनितानां स्त्रीणां करेषु हस्तेषु अर्पिताभिर्दत्ताभिः दीपिकाभिः परिवृतः वेष्टितः एष देवः पक्षाणां पतत्राणां सादः च्छेदस्तदभावात् पक्षच्छेदनस्य प्राक् गतिमान् जङ्गमः गिरिः पर्वत इव विचालितः दृश्यते । कीदृशः स गिरिः—अनुतटं परिपार्श्वं पुष्पिताः प्रसूनयुक्ता विद्यन्ते कर्णिकारलतानां यष्टयः यस्मिन् तादृशः इति ।

परिजनगृहीतदीपिकाभिः परिवेष्टितो राजा सपुष्पकर्णिकारयष्टिर्जङ्गमगिरिरिव दृश्यत इति भावः ।

दीपिका—मशाल इति भाषा ( or torch ) इति आङ्ग्लाः ।

पुरा हि गिरयः सपक्षाः आसन् ते च इतस्ततः उड्डयनञ्चाकुर्वन् । एकस्मात् स्थानात् स्थानान्तरे तेषां सहसा च समागमात् महती हानिः लोकानां बभूव । तेन क्रुद्धो महेन्द्रः तेषां पक्षान् अच्छिनत् इति पौराणिकी वार्ता । इह च पक्षसादाभावे गिरेः गतिमत्त्वं प्रोक्तम् तच्च युक्तमेव ।

अत्र चोपमालङ्कारः । राजा उपमेयः, गिरिरुपमानम् । उभयोः साधर्म्यं यथा—राजा दीपिकाभिः परिवृत आसीत् । गिरिश्च पीतेभ्यः पुष्पेभ्यः समेतः आसीत् । राज्ञा सह वनिता अप्यासन् । इह च पर्वते कर्णिकारतरूणां यष्टित्वारोपेण वनितासदृशत्वं चापि समारोपितम् । इव चोपमावाचकपदम् । तेन पूर्णोपमेयम् ।

कर्णिकारयष्टिरित्यत्र कर्णिकारतरूणामुपरि यष्टित्वेन ताद्रूप्यप्रतिपादनात् रूपकालङ्कारः । अत्र प्रसादाख्यो गुणः ।

अनेन राज्ञः गिरिसदृशत्वं महत्त्वं च व्यक्तम् । स्त्रीणाञ्च अङ्गयष्टिसमुल्लसितत्वं ध्वन्यते । राज्ञः शोभातिरेकश्च सूच्यते ।

पुष्पिताग्रा वृत्तम् । लक्षणन्तु यथाह भगवान् पिङ्गलः—"पुष्पिताग्रा नौर्यौन्जौ ज्रौग् । अर्धसममिदं वृत्तम् । यस्य प्रथमे पादे नकारौ रेफयकारौ च द्वितीये नकारजकारौ जकाररेफौ गकारश्च तद् वृत्तम् पुष्पिताग्रा नाम । यथा पूर्वार्धे तथैवोत्तरार्धमर्धसमेषु वृत्तेषु ॥ ३ ॥

यावदेनमवलोकनमार्गे स्थितः प्रतिपालयामि ।

( ततः प्रविशति यथानिर्दिष्टः सपरिवारो राजा विदूषकश्च )

**राजा**—( आत्मगतम् )

कार्यान्तरितोत्कण्ठं दिनं मया नीतमनतिकृच्छ्रेण ।
अविनोददीर्घयामा कथं नु रात्रिर्गमयितव्या ॥ ४ ॥

**कञ्चुकी**—( उपगम्य । ) जयतु जयतु देवः । देव ! देवी विज्ञापयति—'मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः । तत्र सन्निहितेन देवेन प्रतिपालयितुमिच्छामि यावद्रोहिणीसंयोगः' इति ।

**राजा**—विज्ञाप्यतां देवी यस्तव च्छन्द इति ।

---

**यावदिति** । यावत् तेनाहं अवलोकनमार्गे देवस्य दर्शनपथि स्थितः सन् एनं देवस्यागमनम् प्रतिपालयामि प्रतीक्षे ।

( ततः प्रविशति यथानिर्दिष्टः परिचारिकागृहीतदीपिकापरिवृतः सपरिवारः अनुचरसहितः राजा विदूषकश्च )

**राजा**—( आत्मगतम् )

**कार्यान्तरितेति**—कार्यैः राजकर्मभिः अन्तरिता विघ्निता अज्ञाता उत्कण्ठा प्रियाविरहजनितखेदः यस्मिन् इति तादृग् दिनं मया अनतिकृच्छ्रेण ईषत्कष्टेन सौकर्येण वा नीतमतिवाहितम् । किन्तु अविनोदेन कार्यलम्भलाभावेन उत्कण्ठया च दीर्घाः यामाः प्रहराः यस्याः सा रात्रिः कथं केन प्रकारेण गमयितव्या यापनीया ।

दिनं तु राजकार्यव्यापृतत्वात् अनायासेन व्यतीतम् किन्तु अन्यकार्यराहित्यात् प्रियोत्कण्ठासद्भावाच्च परमदीर्घेति प्रतीयमाना रात्रिः कथं नु अतिवाहितव्येति खेदः ।

न च अनतिकृच्छ्रेणेत्यत्र विधेयांशस्य शङ्का कार्या । कुतः । प्रधानस्यापि नञार्थस्य समासे गुणीभावात् । कृच्छ्रपदार्थस्य कष्टस्येष्टत्वप्रदर्शनात् साधुत्वमेव । कामस्य द्वितीयेयं दशा उत्कण्ठेति । इयञ्चार्या जातिः ॥ ४ ॥

**कञ्चुकी**—( उपगम्य समीपमागत्य )

जयतु जयतु देवः—स्वामिनः मङ्गलकाङ्क्षिणां सर्वेषां सज्जनानां समुदाचारपद्धतिरियम् । देव स्वामिन् ! देवी काशीराजदुहिता विज्ञापयति निवेदयति यत् मणिहर्म्यम् तदाख्यः प्रासादस्तस्य पृष्ठे उपरि चन्द्रः सुदर्शनः सुभगतया लक्ष्यते । तत्र मणिहर्म्यप्रासादे सन्निहितेन उपस्थितेन देवेन सह यावच्चन्द्रस्य रोहिण्या सह संयोगो भवति तावत् प्रतिपालयितुमिच्छामि तत्रैव स्थातुमभिवाञ्छे ।

रोहिणी दक्षस्य कन्या परमप्रियतमा चन्द्रस्य पत्नी । रोहिणी तदाख्यं नक्षत्रम् ।

**राजा**—विज्ञाप्यतां कथ्यतां देवी यस्तव च्छन्दः अभिप्रायस्तत्तथैव भविष्यति । अहं नूनमागमिष्यामि मणिहर्म्यप्रासादे इति भावः ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

**राजा**—वयस्य ! किं परमार्थत एव देव्या व्रतनिमित्तोऽयमारम्भः स्यात् ?

**विदूषकः**—तक्केमि संजादपच्चादावा अत्तभोदी वदव्ववदेसेण तत्तभवदो पणिपादलंघणं पमज्जिदुकामा त्ति । [ तर्कयामि संजातपश्चात्तापा अत्रभवती व्रतव्यपदेशेन तत्रभवतः प्रणिपातलङ्घनं प्रमार्ष्टुकामेति । ]

**राजा**—उपपन्नं भवानाह । तथा हि—

अवधूतप्रणिपाताः पश्चात्सन्तप्यमानमनसोऽपि ।
निभृतैर्व्यपत्रपन्ते दयितानुशयैर्मनस्विन्यः ॥ ५ ॥

---

"अभिप्रायवशौ छन्दौ" इत्यमरः ।

**कञ्चुकी**—यदाज्ञापयति भवान् तदेवाहं निवेदयिष्यामीति भावः ।

(इति निष्क्रान्तः अपगतः ।)

**राजा**—वयस्य माणवक ! किं परमार्थतः सत्यमेव देव्याः अयमारम्भः प्रयत्नः व्रतनिमित्तः व्रतसम्पादनायैव स्यात् ? मां वशयितुमयमारम्भः उत वा सत्यं व्रतायैवेति शङ्का ।

**विदूषकः**—अहं तावत् तर्कयामि विचारयामि अनुमिनोमि वा यत् संजातः पश्चात्तापः यस्या एतादृशी अत्रभवती मान्या देवी व्रतस्य व्यपदेशेन मिषेण तत्रभवतस्तव प्रणिपातो नमस्क्रिया चाटुकारित्वं प्रसादनं वा तस्य लङ्घनमस्वीकारः तमपराधं प्रमार्ष्टुकामा प्रोञ्छितुं वाञ्छतीति भावः ।

त्वया कृतानि प्रसादनान्यवमत्य त्वयि कृतं तिरस्कारं समाधत्तुमिच्छतीत्यर्थः । इत्यहं सम्भावयामि ।

**राजा**—उपपन्नं युक्तं तावत् भवानाह । तथा हि—

**अवधूतेति**—अवधूताः अवमानिताः प्रणिपाताः प्रियकृतप्रसादनानि याभिस्तास्तिरस्कृतप्रणिपाताः पश्चात् तिरस्करणानन्तरं सन्तप्यमानानि भृशं पीडितानि मनांसि यासां ताः मनस्विन्यः चतुराः स्त्रियः निभृतैः केनापि छलेन कृतैः अतः विनयेन प्रकटीकृतैः दयितविषयकैः अनुशयैः अनुतापैः व्यपत्रपन्ते लज्जिताः सत्यः स्वमपराधं अनुसन्धातुमिच्छन्ति ।

निभृतैर्विनीतैः—"निभृतविनीतप्रश्रिताः समाः" इत्यमरः । रङ्गनाथस्तु गुप्तैरिति लिखति ।

अनुशयः—"अनुतापोऽनुबन्धो वा" "दीर्घद्वेषानुतापानुबन्धेष्वनुशयः पुमान्" इति विश्वलोचनः ।

तदादेशय मणिहर्म्यपृष्ठस्य मार्गम् ।

**विदूषकः**—इदो इदो एदु भवम् । इमिणा गंगातरंगसिसिरेण फलिअमाणिसिलासोवाणेण आरोहदु भवं सव्वदा रमणीअं मणिहम्मपिट्ठअलम् । [ इत इत एतु भवान् । अनेन गङ्गातरङ्गशिशिरेण स्फटिकमणिशिलासोपानेनारोहतु भवान्सर्वदा रमणीयं मणिहर्म्यपृष्ठतलम् । ]

( राजा आरोहति । सर्वे सोपानारोहणं नाटयन्ति । )

**विदूषकः**—( निरूप्य ) पच्चासण्णेण चंदोदएण होदव्वम् । जह तिमिरेण अदिरेचीअमाणं पुव्वदिसामुहं आलोहिअप्पहं दीसदि । [ प्रत्यासन्नेन चन्द्रोदयेन भवितव्यम् । यथा तिमिरेणातिरिच्यमानं पूर्वदिशामुखमालोहितप्रभं दृश्यते । ]

**राजा**—सम्यग्भवान् मन्यते ।

उदयगूढशशाङ्कमरीचिभिस्तमसि दूरतरं प्रतिसारिते ।

---

मानिनीनां कामिनीनाम् स्वभावोऽयमिति स्फुटतया व्यञ्जितम् । इयं चार्याजातिः ॥ ५ ॥

तत् अत एव मणिहर्म्यपृष्ठस्य मार्गं आदेशय दर्शय ।

**विदूषकः**—इत इतः अनेन मार्गेण भवानेतु आगच्छतु अनेन पुरो दृश्यमानेन गङ्गायास्तरङ्गैः शिशिरेण शीतलेन स्फटिकमणिशिला तन्निर्मितेन सोपानेन आरोहणेन आरोहतु भवान् सर्वदा रमणीयं मनोहारि मणिहर्म्यस्य पृष्ठतलम् उपरितनां अलिन्दभूमिम् । "आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहिणी" इत्यमरः ।

( राजा आरोहति । सर्वे सोपानेन आरोहणं नाटयन्ति । )

**विदूषकः**—चन्द्रोदयेन प्रत्यासन्नेन अचिरम्भाविनैव भवितव्यम् शीघ्रमेवेदानीं चन्द्रोदयो भविष्यतीत्यर्थः । यथा तिमिरेणान्धकारेण अतिरिच्यमानं रहितं पूर्वदिशामुखं आलोहितप्रभं ईषद् रक्तकान्तिकं दृश्यते ।

**राजा**—भवान् सम्यग् युक्तमेव मन्यते विचारयति ।

**उदयगूढेति**—उदये उदयाचले गूढः च्छन्नः अन्तर्हितो वा शशाङ्कः चन्द्रमाः तस्य मरीचिभिः किरणैः तमसि अन्धकारे दूरतरं अत्यन्तदूरं प्रतिसारिते निष्कासिते द्राविते सति, हरिः अश्वः वाहनं यस्य सः हरिवाहनः इन्द्रः तस्य तेन पालिता वा या दिग् प्राची तस्याः मुखम् अलकानां केशानां संयमनात् मुखादपसारणात् इव मे लोचनं हरति आकर्षति ।

अलकसंयमनादिव लोचने हरति मे हरिवाहनदिङ्मुखम् ॥६॥

कस्या अपि कामिन्या मुखचन्द्राद् दूरीकृते तु केशपाशे यथा वा तस्याः मुखं लोचनहारि भवति तथैव ऐन्द्रीदिङ्मुखम् चन्द्रमरीचिभिः दूरीकृते तमसि मम नयनयुगमपहरतीति भावः ।

अनेन नायकस्य विविधविलासिनीभुजङ्गमत्वं प्रदर्श्यते । हरिवाहनदिङ्मुखम् केशापसारणेन कामुकस्य चित्ताकर्षकं भवतीति व्यञ्जनात् समासोक्तिः ।

अलकसंयमनादिवेति उत्प्रेक्षालङ्कारः । उपमा च ध्वन्यते । यथा अलकसंयमनात् रमणीयरमणीमुखं चेतो हरति तथैवेदं दिङ्मुखमिति ।

कालिदासमते अलकानां मुखोपर्यागमनात् वदनारविन्दसौदर्यसौन्दर्यापगमात् केशनियमनेन मुखस्य चित्तहारित्वम् नागरिकाणाम् । चतुर्थनादे च अनुप्रासालङ्कारः । माधुर्याख्यो गुणः । वृत्तं चापि सुशोभनं रसानुकूलम् ।

इह च "हरिवाहनदिङ्मुखम्" इति पदप्रदानेन प्राचीदिङ्मुखमित्युपयोगतिरस्कारेण च हरिवाहनेनेन्द्रेण परिपालिताया उर्वश्या मुखं यथा मे लोचनं हरति तथैवेदं दिङ्मुखमिति च ध्वन्यते । अनेन चन्द्रोदये कामिन्या वदनपद्मं अतीव मनोहारि शोभनं च भवतीति सूच्यते । शशाङ्कस्योदयगूढत्वप्रदानेन उदयाचलस्य प्राच्यां सद्भावात् ऐन्द्रीमुखं चन्द्रमाश्चुम्बतीति व्यक्तम् । अनेन च शशाङ्कदिशोर्नायकनायिकाभावो गम्यते । इतरत्रापि "इदमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः" इति अप्पयदीक्षिताः । तत्र च रहोभावार्थं नायिकानायकयोर्मध्ये परेषामवस्थानमसुन्दरमिति न्यायेनैव अन्तरायभूतं तमः पूर्वमेव दूरतरं प्रतिसारितम् । न केवलं दूरमेवापसारितम् किन्तु दूरतरं, कुतः गते त्वन्यस्मिन् दूरतरं, केनापि अदृश्यत्वादश्रव्यत्वाच्चादधिकविस्रब्धत्वम् ।

उदयगूढशशाङ्कमरीचिभिरित्यत्र रङ्गनाथेन "उदयगूढा उदयाचलेन च्छन्नाः" इति समासव्यासकरणेन उदयगूढत्वं मरीचिभिः साकं अन्वितमिति प्रकटमेव । तत्तावदसमीचीनम्—कुतः—गूढासु मरीचिषु तमोनिःसारणमसम्भवम् । उदयगूढपदस्य शशाङ्कपदेनाव्यवहितत्वात् तेनैव सहान्वयः साधुः । ततश्च शशाङ्केन सह उदयगूढस्य विशेष्यविशेषणभावात् शशाङ्कस्य ऐन्द्रीदिङ्मुखस्य अधिकसन्निहितत्वं भवति । तेनोदयगूढः शशाङ्क इत्यन्वय एव साधुः । एवं कृतेऽपि उदयगूढस्यापि शशाङ्कस्योर्ध्वमुखीभिर्मरीचिभिस्तमसोऽपाकरणं भवितुमर्हत्येव । यथाह वान्यत्र तत्रभवान् कविः—

सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान् परिवर्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥

हरिवाहनः इन्द्रः "जम्भभेदी हरिहयः" इत्यमरः । हरिवाचकहयस्येदं लक्षणम्—

"त्वक्केशबालरोमाणि सुवर्णाभानि यस्य तु ।
हरिसवर्णतोऽश्वस्तु पतिकौशेयसप्रभः ॥" इति शालिहोत्रम् ।

**विदूषकः**—हीही भो, एसो खण्डमोदअसरिसो उदिदो राआ ओसधीणम्। [ हीही भोः! एष खण्डमोदकसदृश उदितो राजा ओषधीनाम्।]

**राजा**—( सस्मितम्। ) सर्वत्रौदरिकस्याभ्यवहार्यमेव विषयः। ( प्राञ्जलिः प्रणम्य ) भगवन् ऋक्षराज!

---

तादृक् हरिः हयो वाहनं यस्येति स इन्द्रः।

सन्ध्यासमयवर्णनमिदं काव्यशोभाप्रदम्। यतः कविभिः प्रातःसन्ध्यादिस्वभाववर्णनं काव्याभरणभूतं सम्मतम्।

आङ्ग्लेष्वप्येतन्मन्यते यत् भगवान् शीतरश्मिः पर्वतान्तरितो भवति। यथाह तत्रभवान् मिल्टन ( Milton ) पण्डितः—

> " *The sun to me is dark,*
> *And silent is the moon,*
> *When she deserts the night*
> *Hid in her vacant interlunar cave.*"

वृत्तञ्च द्रुतविलम्बिताख्यम्। 'द्रुतविलम्बितमाह नभौभरा'विति लक्षणयोगात्॥ ६॥

**विदूषकः**—हीही इति विस्मये। भोः इति सम्बोधनम्। खण्डेन सितया निर्मिता मोदकास्तत्सदृशः स्वच्छः ओषधीनां नक्षत्राणां राजा अधिपतिश्चन्द्रः उदितः। "हीही चित्रे स्माता"मिति सागरः।

ओषधिः—ओषो दीप्तिर्धीयते यत्रेति ओषधिः नक्षत्रम्।

अनेन खण्डमोदकसदृशेत्युपमानेन विदूषकस्य भोजनप्रियत्वं व्यज्यते।

**राजा**—( सस्मितम्—ईषद्विहस्य )

सर्वत्र औदरिकस्य भोजनप्रियस्य अभ्यवहार्यं भोज्यमेव विषयः। भोजनप्रियाय सर्वत्र भोज्यमेव दृश्यते नान्यदिति भावः।

उदरे एव प्रसित इति औदरिकः "उदराट्ठगाद्यूने" इति ठक्प्रत्ययः।

( प्राञ्जलिः अञ्जलिं बध्वा प्रणम्य ) अञ्जलिस्तु यदुक्तम् "पताकाहस्ततलयोः संश्लेषादञ्जलिर्मतः।" देवतागुरुविप्राणां नमस्कारेष्वयं क्रमः।

भगवन् ऋक्षाणां नक्षत्राणां राजा इति ऋक्षराजः चन्द्रः तत्सम्बुद्धौ हे ऋक्षराज! राजाहःसखिभ्यष्टच्। "ऋषति-ऋषी गतौ" ( तु. प. से. ) "स्नुव्रश्चिकृत्यृषिभ्यः कित्" । "ऋक्षस्तु स्यात् नक्षत्राच्छभल्लयो"रिति हैमः।

रविमाविशते सतां क्रियायै सुधया तर्पयते पितॄन्सुरांश्च ।
तमसां निशि मूर्च्छतां निहन्त्रे हरचूडानिहितात्मने नमस्ते ॥ ७ ॥

विदूषकः—भो बम्हणसंकामिदक्खरेण दे पिदामहेण अब्भणुण्णादो सि । ता आसणगदो होहि जेण अहं वि सुहासीणो होमि । [ भोः ब्राह्मणसंक्रामिताक्षरेण ते पितामहेनाभ्यनुज्ञातोऽसि । तदासनगतो भव येनाहमपि सुखासीनो भवामि । ]

---

रविमिति—सतां सज्जनानां वेदविहितकर्मकर्तॄणां क्रियायै दर्शपूर्णमासपिण्डपितृयज्ञाद्यनुष्ठानसिध्यर्थं रविं सूर्यम् आविशते प्रविशते, पितॄन् तदाख्ययोनिविशेषस्थदेवान् सुरांश्च देवान् सुधया अमृतेन तर्पयते प्रीणयते, निशि रात्रौ मूर्च्छतां घनीभूतानां प्रवर्धमानानां तमसां निहन्त्रे नाशकाय, हरस्य शिवस्य चूडायां जटाजूटे निहितः स्थापितः आत्मा स्वरूपं कला वा येन तस्मै ते तुभ्यं नमः ।

भगवन् सुधांशो! भवान् साधूनां कार्यसिद्ध्यै रवितेजसि गूढो भवति । एकैककलाक्षयेण अमावास्यायां समस्तकलाहीनो भवति चन्द्रः । दर्शाख्यहोमस्य अमावास्यायां विहितत्वात् । मीमांसाप्रकरणमिदम् । "चन्द्रमा वा अमावास्यायां आदित्यमनुप्रविशति । सोऽन्तर्धीयते तं न निर्जानन्तीति" ऐतरेयब्राह्मणश्रुतत्वादिन्दोः सूर्यसङ्गमः प्रमाणीक्रियते । पुनश्च भवान् पितॄन् देवांश्च तर्पयति । यदुक्तं, "प्रथमां पिबते वह्निः·········हुतमग्निषु यज्ञेषु पुनराप्यायते शशी, दिने दिने कलावृद्धिः पौर्णमास्यां तु पूर्णता ।" तथा च भवान् अन्धकारनिहन्ता । अपि च भवान् शिवशिरसि स्थापितैककलो भवन् हरसेवकः । एतादृशे भवते नमः इति भावः । अत्र राज्ञः सोमवंशीयत्वात् चन्द्रदेवताविषयकरतिप्रतिपादनेन प्रेयोऽलङ्कारो रत्याख्यो भावश्च व्यज्यते । अनेन राज्ञः धार्मिकत्वं च सूच्यते ।

औपच्छन्दसकवृत्तम् ॥ अर्धसममिदं वृत्तम् । यत्रायुक्पादे सगणद्वयं जकारो गुरुद्वयं च तथा च युक्पादे सगण-भगण-रगण-भगणास्तद्वृत्तं तदाख्यम् ॥ ७ ॥

विदूषकः— भो इति । ब्राह्मणद्वारा सङ्क्रामितानि प्रेषितान्यक्षराणि येन तादृशा तव पितामहेन चन्द्रेणाभ्यनुज्ञातोऽसि अनुमतोऽसि । तवाभिलषितेषु सहमतो भगवान् सुधांशुरिति भावः । तथा च स्वीयाभिमतत्वं मदीयब्राह्मणमुखेन प्रकाशितम् ।

अत आसनगतो भव । अत्रोपविश इत्यर्थः । येन भवतां आसीनत्वेनाहमपि सुखासीनः सुखेनोपविष्टः भवामि । उपवेष्टुमर्हति भवान् येनाहमप्युपविशामीति भावः । राज्ञः चन्द्रवंशीयत्वाच्चन्द्रस्य तस्य पितामहत्वम् ।

राजा—( विदूषकवचनं परिगृह्योपविष्टः परिजनं विलोक्य ) अभिव्यक्तायां चन्द्रिकायां किं दीपिकापौनरुक्त्येन । तद्विश्राम्यन्तु भवत्यः ।

परिजनः—जं देव आणवेदि । [ यद्देव आज्ञापयति । ]

( इति निष्कान्तः । )

राजा—( चन्द्रमवलोक्य ) वयस्य ! परं मुहूर्तादागमनं देव्याः । तद्विविक्ते कथयामि स्वामवस्थाम् ।

विदूषकः—भो, ण दीसदि एसा । किं दु ताए तारिसं अणुराअं पेक्खिअ सक्कं क्खु आसाबंधेण अत्ताणअं धारिदुम् । [ भोः ! न दृश्यत एषा । किं तु तस्यास्तादृशमनुरागं प्रेक्ष्य शक्यं खल्वाशाबन्धेनात्मानं धारयितुम् । ]

राजा—एवमेतत् । बलवान् पुनर्मम मनसोऽभितापः ।

---

राजा—( विदूषकस्य वचनं परिगृह्य स्वीकृत्य उपविष्टः । परिजनं विलोक्य । ) अभिव्यक्तायां स्फुटायां चन्द्रिकायां कौमुद्यां दीपिकानां पौनरुक्त्येन द्विरावृत्त्या प्रकाशस्य सत्तया किं प्रयोजनम् । सत्यां तु चन्द्रिकायां दीपिकाः निष्प्रयोजना इति भावः । तत् हेतोः भवत्यः दीपवाहिन्यः दास्यः विश्राम्यन्तु विरमन्तु । अनेन राज्ञः विरहजन्यं विविक्तप्रियत्वं गम्यते ।

परिजनः—यद्देव आज्ञापयति । ( इति परिजनो निष्क्रान्तः । )

राजा—( चन्द्रमवलोक्य ) वयस्य मित्र ! देव्याः आगमनं मुहूर्तात् परं किञ्चित् समयानन्तरं भविष्यति । अतः विविक्ते निर्जने एकान्ते वा स्वामवस्थां दशां कथयामि ।

विदूषकः—भोः ! एषा तव प्रियतमा इह तु न दृश्यते । किन्तु तस्याः उर्वश्याः तादृशं गहनमनुरागं प्रेक्ष्य आशाबन्धेन समागमस्याशाविशेषेण आत्मानं धारयितुं स्थिरयितुं शक्यम् ।

एतदेव—"गुर्वपि हि विरहदुःखं आशाबन्धः सदैव सादयति" । एवमेव कियत्सुन्दरमभिहितं शेक्सपीयरमहाकविना !

"Hope is a lover's staff; walk hence with that and manage it against despairing thoughts."

राजा—एवमेतत् यत्त्वयोच्यते तत्सत्यम् ।

पुनः किन्तु मम मनसोऽभितापः पीडा बलवान् खलु । पुनरिति विकल्पे ।

इह प्रियोर्वशीसमुपोढरागस्य विदूषकवाक्योपबृंहितमदनाभिनिवेशस्य नायकस्य प्रेयसीसमागमाशाऽवगम्यते । किञ्चिल्लक्ष्यालक्ष्यभावेन ईषदुद्भिन्नस्य बीजस्यान्वेषणाद् गर्भसन्धिरित ऊर्ध्वं दर्शनीया । क्वचित् पताकाभावेऽपि न किञ्चिदपि हीयते इति ज्ञेयम् । गर्भसन्धिलक्षणं यथा—

"गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।

द्वादशाङ्गः पताका स्यान्न वा स्यात् प्राप्तिसम्भवः ॥" इति रूपके ।

नद्या इव प्रवाहो विषमशिलासङ्कटस्खलितवेगः ।
विघ्नितसमागमसुखो मनसिशयस्त्वनुगुणो भवति ॥ ८ ॥

**विदूषकः**—जहा परिहीअमाणेहिं अंगेहिं सोहसि तहा अच्छरेहिं समागमं दे पेक्खामि । [ यथा परिहीयमाणैरङ्गैः शोभसे तथाप्सरोभिः समागमं ते प्रेक्षे । ]

---

अत एव प्रतिमुखसन्धौ लक्ष्यालक्ष्यरूपतया स्तोकोद्भिन्नस्योर्वशीविषयकानुरागबीजस्य अस्मिन्नङ्के सविशेषोद्भेदपूर्वकः सान्तरायो लाभः, पुनर्देव्यागमनेन विच्छेदः, पुनः प्राप्तिः पुनर्विच्छेदः पुनश्च तस्यैवान्वेषणं वारंवारं सोऽनिर्धारितैकान्तफलप्राप्त्याशात्मको गर्भसन्धिरितः प्रवर्तते ।

**नद्या इवेति**—विषमाः निम्नोन्नताः शिलाः प्रस्तराः तासां सङ्कटेन सङ्घर्षेण स्खलितो भग्नः वेगः गतिः यस्य सः नद्या प्रवाह इव विघ्नितं विमुखीभूतं समागमजन्यं सुखम् यस्येति सः मनसिशयः मम कामस्तु अनुगुणप्रेमानुवर्ती एवास्ति ।

**भावार्थस्तु**—यथा नद्याः प्रवाहः विषमपाषाणेषु भग्नो भवति तथैव ममापि कामः समागमसुखान्तरितत्वेन भग्नोऽपि सन् अनुगुणः प्रीतिजनक एवास्ते इति भावः । यद्यपि समागमसुखाभावतो मम कामो विघ्नितस्तथापि मम प्रीतिस्तु अस्खलिता एवेति भावः । यद्यपि प्रीत्युच्छेदस्य कारणं विद्यते तथापि प्रीतिस्तु अस्खलिता एवास्ते । यथा नद्या प्रवाहः पाषाणेषु स्खलितोऽपि सन् पुनः अनुगुणः समो भवति ।—एतदेवाह रवीन्द्रनाथठक्कुरकविप्रवराः—

"Trust love even if it brings sorrow. Do not close up your heart." (Tagore)

अत्रोपमालङ्कारः । नदीप्रवाहवेगयोर्विषयविषयिणोः स्खलितप्रसरत्वं साधर्म्यम् । तथा च विघ्नितसमागमस्य प्रीतिप्रातिगुण्ये कारणत्वम् । ततश्च विद्यमानेऽपि प्रातिगुण्यस्य कारणे कार्याभावस्तेन च विशेषोक्तिरलङ्कारः, तल्लक्षणं च—"कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे । हृदि स्नेहक्षयो नाभूत्स्मरद्वीपे ज्वलत्यपि ॥" तथा च आनुगुण्यस्य कारणप्रातिकूल्येपि कार्यनिष्पत्तिस्तस्माच्च विभावनालङ्कारः । "विभावना विनापि स्यात् कारणं कार्यजन्म चेदिति" कुवलयानन्दे । उभयोश्च सङ्करः । अनेन नायकस्य प्रेमातिशयत्वं द्योत्यते तथा च प्रेम्णः लोकविरोधित्वं गम्यते यतः प्राप्तिविघ्नेऽपि पुनः पुनरनुसन्धानम् ।

मनसि शेते इति मनसिशयः कामः सप्तमी अलुक्समासः । अनुगुणः अनुकूलः प्रेमानुबन्धी एव । आर्या जातिः ॥ ८ ॥

**विदूषकः**—यथा परिहीयमाणैः क्षीणैरपि अङ्गैः शोभसे तथा अत एव अप्सरोभिः उर्वशीप्रमुखाप्सरोभिः ते तव समागमं मेलनं प्रेक्षे । अचिरादेव भावी समागमः इति सारः ।

**राजा**—(निमित्तं सूचयन्)

वचोभिराशाजननैर्भवानिव गुरुव्यथम् ।
अयमास्पन्दितैर्बाहुराश्वासयति दक्षिणः ॥ ९ ॥

**विदूषकः**—ण क्खु अण्णहा बम्हणस्स वअणं भोदि । [न खल्वन्यथा ब्राह्मणस्य वचनं भवति । ]

(राजा सप्रत्याशस्तिष्ठति ।)

(ततः प्रविशत्याकाशयानेन कृताभिसरणवेषा उर्वशी चित्रलेखा च ।)

**उर्वशी**—(आत्मानं विलोक्य) सहि, रोअदि दे मे अअं मोत्ता-

---

राजा—( निमित्तं शकुनं सूचयन् )

**वचोभिरिति**—आशाजननैराशाकारकैर्वचोभिः उक्तिभिः यथा दक्षिणः मदीयेच्छानुसारी भवान् मामाश्वासयति तथैव अयं दक्षिणोऽपसव्यः बाहुः आस्पन्दितैः स्फुरणैः गुरुव्यथम् असह्यवेदनं मामाश्वासयति मम समाधानं विदधाति । यथा त्वं सुमधुरवचोभिः विरहव्यथाविधुरं मां संस्थापयसि तथैव प्रियासङ्गमरूपभाविशुभसूचकस्पन्दनैरयं दक्षिणो मे बाहुर्मां समाश्वासयति ।

दक्षिणदेहाङ्गस्य स्पन्दनं शुभसूचकमिति सम्मतं शकुनविद्भिः । शुभशकुनानां शुभमेव फलं, यतः "आवेदयति प्रत्यासन्नमानन्दं अग्रजातानि शुभानि निमित्तानि" इति । "पुंसां सदा दक्षिणदेहभागे, स्त्रीणां तु वामावयवे प्रजातः ......स्पन्दः फलानि प्रदिशत्यवश्यम् ।"

इह च दक्षिणपदे श्लेषः । विदूषकपक्षे परच्छन्दानुवर्तित्वम् दक्षिणत्वं बाहुपक्षे च वामेतरत्वम् । अत्र चोभयोः सादृश्यं आश्वासनाख्यव्यापारसाधर्म्यात् । किन्त्वत्रास्य न विशेषचमत्काराधायकत्वम् । अत्र तत्त्वार्थकथनात् मार्गो नाम गर्भसन्ध्यङ्गमुक्तं भवति । अनुष्टुब् वृत्तम् ॥ ९ ॥

**विदूषकः**—ब्राह्मणस्य वचनं अन्यथा मिथ्या न भवति इति स्वीयमहिमानं शुभशकुनोपबृंहितं द्रढयति ।

( राजा सप्रत्याशः उर्वशीसमागमं प्रतिपालयन् तिष्ठति । )

( ततः आकाश एव यानं तेन मार्गेण, कृतः अभिसरणवेषः अभिसारिकायाः वेषो यया सा तादृशी उर्वशी चित्रलेखा च प्रविशति । )

या स्वयं स्वकामयितारमभिसरतीति अभिसारिका—"हित्वा लज्जां समाकृष्टा मदनेन मदेन वा । अभिसारयते कान्तं स्वयं वा साभिसारिका" ॥ अथवा "कान्तार्थिनी तु या याति सङ्केतं साभिसारिका ॥" इति ।

**उर्वशी**—( आत्मानं विलोक्य ) अवसिते तु तासां नेपथ्यविधाने कान्तानां वैशिष्ट्यं स्पृहा यदात्मनो रूपनिभालनं कुर्वते ।

हरणभूसिदो णीलंसुअपरिग्गहो अहिसारिआवेसो । [ सखि ! रोचते ते मेऽयं मुक्ताभरणभूषितो नीलांशुकपरिग्रहोऽभिसारिकावेषः । ]

**चित्रलेखा**—णत्थि मे वाआविहवो पसंसिदुम् । इदं तु चिंतेमि । अवि णाम अहं एव्व पुरूरवा भवेअं त्ति । [ नास्ति मे वाग्विभवः प्रशंसितुम् । इदं तु चिन्तयामि । अपि नामाहमेव पुरूरवा भवेयमिति । ]

**उर्वशी**—सहि, असमत्था क्खु अहम् । तुमं आणेहि तं सिग्घम् । णेहि मं तस्स वा सुहअस्स वसदिम् । [ सखि ! असमर्था खल्वहम् । त्वमानय तं शीघ्रम् । नय मां तस्य वा सुभगस्य वसतिम् । ]

---

सखि ! ते रोचते ममाऽयं वेषः मुक्ताभरणभूषितः मुक्तानि परित्यक्तानि आभरणानि यस्मिन् तथापि अत एव वा भूषितः स्वाभाविकाङ्गसौष्टवशालित्वात् सुन्दरः नीलांशुकस्य नीलवस्त्रस्य परिग्रहः स्वीकारो यस्मिन् एतादृश अभिसारिकायाः वेषः ते रोचते न वा इति प्रश्नः ।

**अत्र** उर्वशी कृष्णाभिसारिका । अतः अनया सर्वं कृष्णमेव परिधेयम् । यदि किञ्चिदपि दीप्तं वस्तु परिगृहीतं चेत् परिज्ञेया एव भविष्यति । अतो मुक्ताभरणभूषितः इत्यत्र मुक्ताफलानां आभरणैर्भूषित इति कर्तुमसाम्प्रतमेव साधारणधिया मुक्ताफलानां दीप्तिमत्त्वात्कृष्णाभिसारिकावेषविरोधित्वात् । अनेन कृष्णाभिसारिकायाः नीलांशुकधारणं निरलङ्कारत्वं च प्रकटितम् । कवीन्द्रैः श्रीमद्रवीन्द्रनाथठक्कुरमहोदयैरभिसारिकावर्णने सम्यगिदं भणितं यत्—

"When I go alone at night to my love-tryst, birds do not sing, the wind does not stir, the houses on both sides of the street stand silent.......It is the jewel at my breast that shines and gives light. I do not know how to hide it."

परिग्रहस्तु स्वीकारः "परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्त्रस्थभास्करे" इत्यजयः ।

तथा च सुन्दरीणां प्रायशः स्वभावोऽयं यत् विहिते तु कस्मिंश्चिदपि चारुणि नेपथ्ये ताभिः सखीषु परस्परपरामर्शः क्रियते यत् तद्रुचिरं दृश्यते न वेति । इति स्वभावपरिख्यापनम् ।

**चित्रलेखा**—कीदृक्सुन्दरोऽयं वेष इति प्रशंसितुं मे वाग्विभवः वर्णनशक्तिः नास्ति । वाचां विभवः ऐश्वर्यं सामर्थ्यं वा नास्ति । इदं तु चिन्तयामि कल्पयामि यदहमेव तव प्रियः पुरूरवा विक्रमो भवेयम् ततः परिशीलयितुं प्रभविष्यामि ते वेषसौष्ठवम् । इह "अपि नामेति" सम्भावनायाम् ।

अनेन चित्रलेखायाः हास्यकारकस्वभाववत्त्वं सूचितम् ।

**उर्वशी**—अहं असमर्था खलु । विरहव्यथां सोढुं न प्रभवाम्यहमतः त्वं तं मम प्रियं शीघ्रं वेलातिपातं विनैवानय । अथवा मां तस्य सुभगस्य प्रियस्य वसतिं निवासस्थानं नय प्रापय ।

अनेन विरहकातरत्वं सूचितम् नायिकायाः । तथा च औत्सुक्यं च व्यज्यते ।

**चित्रलेखा**—णं पडिबिंबिअं विअ जामिणीजमुणाए केलास-सिहरसस्सिरीअं दे पिअदमस्स भवणं उवगदम्ह। [ननु प्रतिबिम्बितमिव यामिनीयमुनायां कैलासशिखरसश्रीकं ते प्रियतमस्य भवनमुपगते स्वः।]

**उर्वशी**—तेण हि प्पहावेण जाणाहि कहिं सो मम हिअअचोरो किं वा अणुचिट्ठदि त्ति। [तेन हि प्रभावेण जानीहि कुत्र स मे हृदयचोरः किं वानुतिष्ठतीति।]

**चित्रलेखा**—(आत्मगतम्।) भोदु। कीडिस्सं दाव एदाए सह। (प्रकाशम्) हला, दिट्ठो मए उवहोगक्खमे अवआसे मणोरह-लद्धं पिआसमागमसुहं अणुभवं तो चिट्ठदि त्ति। [भवतु। क्रीडिष्ये तावदेतया सह। सखि! दृष्टो मयोपभोगक्षमेऽवकाशे मनोरथलब्धं प्रियासमागमसुखमनुभवंस्तिष्ठतीति।]

---

**चित्रलेखा**—यामिनीयमुनायां रात्रिस्थयमुनायां प्रतिबिम्बितमिव, कैलास-पर्वतस्य शिखरेण समाना तुल्या श्रीः शोभा यस्य तत् कैलाससदृशशोभा-शालिनं ते प्रियतमस्य पुरूरवसः भवनमुपगते प्राप्ते स्वः।

प्रतिबिम्बितमिवेत्यत्रोत्प्रेक्षालङ्कारः, कैलासेत्यत्र शोभायाः समानत्वादुपमाल-ङ्कृतिश्चोभयोश्च संसृष्टिः।

**उर्वशी**—तेन हि अत एव प्रभावेण अप्सरसां प्रभावविशेषेण जानीहि कुत्र कस्मिन् स्थाने स मे हृदयचोरः हृदयापहारी प्रियतमो वर्तते तथा च किं वा अनुतिष्ठति करोति। कुत्र किं कुर्वन् मे प्रिय आस्ते इति जानीहि स्वप्र-भावेणेत्यर्थः।

अनेन मम हृदयं अविज्ञातमेव गृहीतमिति बोधेन नायकस्य गाढं प्रणयं व्यनक्ति।

**चित्रलेखा**—(आत्मगतम्) भवतु अस्तु। एतया मम प्रियसख्या सह क्रीडिष्ये उपहासं करिष्ये। (प्रकाशम्) सखि! मया उपभोगक्षमे उपभोग-योग्येऽवकाशे स्थाने मनोरथलब्धमिच्छानुसारप्राप्तं प्रियासमागमसुखं रतिसुखमनु-भवन् तिष्ठति ते प्रियतमः इति दृष्टः।

अनेनान्यनायिकाकामुकत्वं दर्शयन्ती चित्रलेखा उर्वशीगतप्रीतिलाघवम् प्रकट-यन्ती उपहसति तावत् प्रियसखीम्। यतः अत्र पत्नीभार्याललनाप्रमदादि-पदान्यधिक्षिप्य प्रियापदाङ्गीकारेण प्रीतिपात्रत्वं तस्या व्यक्तम्, उर्वश्यां च तादृ-क्प्रीत्यभाव इति दर्शितम्—किन्तु उपहासोऽयम्। अत्र सव्याजवचनाश्रयात् "उदाहरणम् नाम" गर्भसन्ध्यङ्गम्, "तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम्"।

**उर्वशी**—अवेहि । हिअअं मे ण पत्तीअदि । हला चित्तलेहे, हिअए काउण किंवि जप्पसि । पिअसमागमस्स अग्गदो एव्व अणेण अवहरिदं मे हिअअम् । [ अपेहि । हृदयं मे न प्रत्येति । सखि चित्रलेखे ! हृदये कृत्वा किमपि जल्पसि । प्रियसमागमस्याग्रत एवानेनापहृतं मे हृदयम् । ]

**चित्रलेखा**—एसो मणिहम्मप्पासादगदो वअस्समेत्तसहाओ राएसी । ता उवसप्पम्ह । [ एष मणिहर्म्यप्रासादगतो वयस्यमात्रसहायो राजर्षिः । तदुपसर्पावः । ]

( उभे अवतरतः । )

**राजा**—वयस्य, रजन्या सह विजृम्भते मदनबाधा ।

---

**उर्वशी**—अपेहि-दूरमपसर-गच्छ गच्छ-भवतु वा इति भावः । मे हृदयं न प्रत्येति विश्वसिति—मदीयागमनं प्रतीक्षमाणः प्रियासमागमसुखमनुभवस्तिष्ठतीति मे हृदयं न यथार्थत्वेन मनुते । सखि चित्रलेखे ! हृदये कृत्वा हृदये किमप्यन्यन्निधाय त्वं परिहासेन जल्पसि । प्रियेण पुरूरवसा सह समागमस्य अग्रतः सम्मेलनात् पूर्वमेव तेन दिवि विद्यमानाया मम हृदयमपहृतं समाकृष्टम् । सहसैव मम चेतसि तावदीदृशो बलवत्स्नेहसमुद्बोधो जातः, अतः प्रियसमागमात्पूर्वमेव मम मनोवृत्तेः पारवश्यादिदमनुमिनोमि यत्तेनाव्यभिचरितमनसा मामेव नूनं निदिध्यायता भवितव्यम् । दर्शनादूर्ध्वं तु सामान्यतः चित्तद्रवो भवत्येव किन्तु मम मनः तत्समागमात्पूर्वमेवापहृतमतः ध्रुवं निश्चिनोमि यदयं बलवद्विक्षोभः तस्यैकान्तिकानुसरणस्यैव फलम् । सखि ! इदं तवैव कल्पनं प्रतिभाति, यतो नेदं सन्देहपदं यत् स अस्मिन् क्षणे ममैकस्मरणपरायणोऽस्ति यतः "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इति न्यायात् तस्यैव प्रणयप्रभावादपहृतहृदया तं प्रति प्रस्थितास्मीति आकूतम् ॥

· इयं तावद्गाढप्रणयस्य शक्तिरेव यद्दृढा मनोवृत्तिः मनोभावविनिमयव्यापारेण ( By force of mental transformation ) निजालम्बनेऽपि तादृशीमेव वृत्तिं समुद्बोधयतीति सहृदयैरेव विभावनीयम् ॥

**चित्रलेखा**—एष मणिहर्म्यप्रासादगतः तदाख्यप्रासादे स्थितः वयस्यमात्रसहायः विदूषकातिरिक्तरहितः राजर्षिः विक्रमो विद्यते । अनेन एकान्तसेवित्वं मदनवशंवदत्वं च सूचितम् । तत् अनेन कारणेन उपसर्पावः तत्र उपैवः ।

( उभे चित्रलेखोर्वश्यौ अवतरतः गगनात् भूमिमवतरतः । )

**राजा**—वयस्य सखे माणवक ! रजन्या सह विजृम्भते वर्धते मदनबाधा । कामपीडा रजन्या सह वर्धते । यथा यथा रजनी प्रौढत्वं प्राप्नोति तथैव कामपीडाऽपि आधिक्यं व्रजति ।

रजन्यां अन्यत्र व्यापृतचित्ताभावात् रजन्याश्चोद्दीपकत्वात् कामबाधाया वृद्धिः स्वाहजिकी ।

अत्र सहोक्तिरलङ्कारः । यदाह—"सहोक्तिः सहभावश्चेद् भासते जनरञ्जनः ।

**उर्वशी**—अणिब्भिण्णत्थेण इमिणा वअणेण आकंपिदं मे हिअअम् । अन्तरिदा सुणुम्ह आलावम् । जाव णो संसअच्छेदो होदि । [ अनिर्भिन्नार्थेनानेन वचनेनाकम्पितं मे हृदयम् । अन्तरिते शृणुव आलापम् । यावदावयोः संशयच्छेदो भवति । ]

**चित्रलेखा**—जं दे रोअदि । [ यत्ते रोचते । ]

**विदूषकः**—णं इमे अमिअगब्भा सेवीअंतु चंदवादा । [ नन्वेतेऽमृतगर्भाः सेव्यन्तां चन्द्रपादाः । ]

**राजा**—वयस्य ! एवमादिभिरनुपक्रम्योऽयमातङ्कः ।

पश्य—

कुसुमशयनं न प्रत्यग्रं, न चन्द्रमरीचयो
न च मलयजं सर्वाङ्गीणं, न वा मणियष्टयः ।

---

**उर्वशी**—अनिर्भिन्नः अस्फुटः अर्थः यस्य तादृशेन अनिर्भिन्नार्थेनाव्यक्तार्थेनानेन वचनेन मे हृदयं आकम्पितम् किञ्चित्कम्पितमिव जातम् । किमस्य गम्यं तात्पर्यमिति व्यक्तेरभावात् व्याकुलतामाप्तं मे हृदयम् । अतः अन्तरिते अदृष्टे भूत्वा अनयोरालापं पारस्परिकं संवादं शृणुवः । यावत् आवयोः संशयच्छेदो संशयनाशः भवेत्—अस्माकं संशयो विनश्येत् तावत् शृणुवः ।

**चित्रलेखा**—यथा ते रोचते तथैव कुरु ।

**विदूषकः**—ननु अनुज्ञाने ! एते अमृतं गर्भे येषां ते अमृतगर्भाः अमृतमया अमृतपूर्णाः चन्द्रपादाः चन्द्रकिरणाः सेव्यन्ताम् । ते हि चन्द्रस्य शीतलत्वात् सामान्येन राज्ञः सन्तापं शमयितुं प्रभविष्यन्तीति विदूषको मत्वा वयस्यमनुशास्तीति भावः ।

**राजा**—वयस्य ! अयमातङ्कः सन्तापो रोगो वा एवमादिभिः एतादृशैरुपायैः अनुपक्रम्यः असाध्यः । चन्द्रादिसेवनाद्युपायैः साधयितुं अशक्योऽयं ताप इति । उपक्रान्तुं साधयितुं अशक्यः इति अनुपक्रम्यः अचिकित्स्यः इति । "उपक्रमः स्यादुपधाचिकित्सारम्भविक्रमे" इति विश्वः ।

**कुसुमेति**—चूर्णकस्थ "पश्येति" पदस्य कर्मेदम् ।

प्रत्यग्रं नूतनं कुसुमानां शयनमास्तरणं मम मनसिजस्य रुजं पीडामपोहितुं दूरीकर्तुं अलं समर्थं न । कुसुमास्तरणयोगेन मम मदनबाधा शान्ता न स्यात् । चन्द्रस्य मरीचयः किरणा अपि मदनपीडां नाशयितुं न प्रभवन्ति । सर्वाङ्गीणं सर्वत्र शरीरे लिप्तं मलयजं चन्दनमपि कामबाधां बाधितुं न पारयति । तथा च मणीनां यष्टयो हारा अपि शक्ता न तापं हर्तुं मदीयम् **किन्तु** सा अपूर्वा दिव्या स्वर्गस्था दिवि भवा भव्या उर्वशी मदीयं विरहतापं परिमार्ष्टुं समर्थाऽस्ति । अथवा रहसि निर्जने आरब्धा तदाश्रयिणी उर्वशीसम्बन्धिनी कथा तं मदनतापं [illegible] शमं कुर्यात् अल्पतां वा नयेत् ।

मनसिजरुजं सा वा दिव्या ममालमपोहितुम्
रहसि लघयेदारब्धा वा तदाश्रयिणी कथा ॥ १० ॥

सरलार्थस्तु—अप्रतीकारामिमां मदनव्यथां व्यपोहितुं न च मृदुशीतलं नूतनकुसुमास्तरणं शक्नोति, न चापि चन्द्रसेवनम्, न चन्दनचर्चनम् नापि च मुक्ताहारसेवनं किन्तु यदि केनाप्युपायेन रुगियं परिहार्या तदा सा स्वर्गीयोर्वशी एव तद्वियोगदूनं मां समुज्जीवयितुं प्रभवति अथवा तद्गुणख्यापिनी कथा वा ममेमां बाधां कथञ्चिल्लघयितुं शक्ता भवेत् इत्यर्थः ।

प्रत्यग्रम्-प्रति नवं अग्रं यस्येति प्रत्यग्रम् । मलयाचले समुत्पन्नमिति मलयजं चन्दनम्, चन्दनस्य तत्रोत्पत्तेः । सर्वाङ्गीणम्—सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणं खश् प्रत्ययः । मणियष्टयः-मुक्ताहाराणां शीतलताङ्गीकारः कविसम्प्रदायः यथा भवभूतिनापि—"अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः" । "यष्टिः शस्त्रान्तरे चैव हारे द्वारात्परेऽपि च ।" इति विश्वः । दिवि भवा दिव्या । अलं समर्था । अपोहितुं दूरीकर्तुम् । सैवाश्रयो यस्याः सा तदाश्रयिणी ।

अत्र प्रत्यग्रविशेषणप्रदानेन कुसुमानां सद्योऽवचितत्वं शीतलत्वाधिक्यं च सूचितम् । चन्द्रमरीचय इत्यत्र मरीचिपदग्रहणेन जाड्यनाशकत्वं विशेषेण व्यक्तम्—म्रियते तमोऽस्मिन्निति मरीचिरिति व्युत्पत्तेः "मृकणिभ्यामीचिः" ( उ. ४।७० )। चन्दनस्य सर्वत्र देहे लेपेन तापशान्तेरवश्यम्भावः । तेनापि तापस्यास्याशान्तिरेव । मणियष्टय इत्यत्र यष्टिपदग्रहणेन मौक्तिकसराणां निबिडत्वं बाहुल्यं च गमितम् । अनेन तापस्य विशेषतया आधिक्यं द्योतितम् प्रीतिबाहुल्यं च सूचितम् ।

अत्र तुल्ययोगितालङ्कारः । यदुक्तं "वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता" ।

अत्र प्रतिषेधार्थकस्य नञः पुनरावृत्तावपि नानवीकृतत्वम् । यतः नकारस्य प्रतिकोटितापस्य आधिक्यप्रदर्शनाय नितान्तमपेक्षा । प्रसादाख्यो गुणः । अत्र प्रथमचरणे नास्ति किंचन समुच्चयार्थकं विकल्पसूचकं वाव्ययम्, अतः न्यूनपदतादोषः; पुनश्च द्वितीयचरणे आदौ चकारं प्रयुज्योत्तरत्र विकल्पसूचकं वेतिपदम्, अतस्तत्र प्रक्रमभङ्गः । तृतीयचरणे "वा" पदम् निरर्थकं विकल्पाभावात्; सैवेत्यस्यावधारणस्य चावश्यं प्रयोज्यत्वेपि विरोधसूचकस्य च "किन्तु" पदस्याप्यदर्शनादत्र न्यूनपदताख्यदोषः । एवं प्राप्तस्य समस्तदोषकदम्बस्य परिहारः एवं विधेयः । आदावत्र प्रथमः कल्पः तावत् यदत्र प्रथमार्धे सर्वत्र समुच्चयो विधेयः । एवं कर्तुं प्रथमचरणे "न चन्द्रमरीचयः" इत्यत्र "न चेन्दुमरीचयः" इति पाठो विधेयः; द्वितीयचरणे च "न मौक्तिकयष्टयः" इत्यनेन परिवर्तनेन दोषः समाधेयः । अथवा "न वा मणियष्टयः" इत्यत्र वापदम् "वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे । समुच्चये चेति" मेदिनीवचनमनुरुध्य समुच्चयार्थकं मत्वा कथञ्चिद्दोषोऽपनेतव्यः । द्वितीयस्तावद्गरीयान् कल्पः अयं प्रतिभाति यत् पूर्वार्धे सर्वत्रैष सहृदयसम्मतः विकल्पार्थोऽङ्गीकर्तव्यः । अस्मिन् मते एवं पाठपरिवर्तनं समञ्जसम्—

उर्वशी—हिअअ ! जं दाणीं सि मं उज्झिअ इदो संकंतं तस्स फलं तुए उवलद्धं । [ हृदय ! यदिदानीमसि मामुज्झित्वा इतः संक्रान्तं तस्य फलं त्वयोपलब्धम् । ]

विदूषकः—आम । भो ! अहं पि जदा सिहरिणीं रसालं अ ण लहे तदा तं एव्व चिंतयंतो आसादेमि सुहं । [ आम । भो ! अहमपि यदा शिखरिणीं रसालं च न लभे तदा तदेव चिन्तयन् आसादयामि सुखम् । ]

---

प्रथमचरणे "न चन्द्रमरीचयः" इत्यत्र "न वेन्दुमरीचयः" इति विधातव्यम् द्वितीयचरणे च "मलयजमपि प्रत्यङ्गं नो, न वा मणियष्टयः" इति कृते समाधानं भवितुमर्हति । किन्तु तृतीयचरणे "वा" पदम् केवलं "उपमायां विकल्पे वा" इत्यमरवचनात् विरुद्धमतिकृदेव, स च दोषः कथमपि वेतिपदं अवधारणार्थकं मत्वा अनवेक्षणीयः "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः ॥ तथापि अवश्यंदेयस्य विरोधगमकस्य 'किन्तु' पदस्याभावान्न्यूनपदत्वं त्वस्त्येव इति दिक् ॥

अत्र च हरिणीवृत्तम् । यदुक्तं भगवता पतञ्जलिना "हरिणी न्सौ म्रौ स्लौ गृतुसमुद्रऋषयः ।" यस्य पादे नगणसगणमगणरगणसगणाः लघुगुरू च भवेयुस्तद्वृत्तं हरिणी नाम । अत्र षड्भिः चतुर्भिः सप्तभिश्च यतिः ॥ १० ॥

उर्वशी—हृदयेति—हे हृदय ! मामुज्झित्वा परित्यज्य यदिदानीं इतः अस्मिन् राजनि सङ्क्रान्तं लग्नमसि तस्य फलं प्रियमुखेन त्वयि स्वीयप्रेमप्रकाशनरूपं त्वया उपलब्धम् प्राप्तमित्यर्थः । हे हृदय ! माम् विहाय यद्राजानमाश्रितवदसि तस्य त्वदर्थप्रीतिज्ञानरूपफलं त्वयाधिगतमेवेति भावः । उज्झित्वेति—ओहाक् त्यागे तृतीयगणधातोः त्वाप्रत्ययः । इतः—अत्र सप्तम्यर्थे तसिल् "सार्वविभक्तिकस्तसिल्" ।

विदूषकः—आमेति—आमेति आनुकूल्ये समर्थने वा । अहमपि यदा शिखरिणीं भोज्यविशेषं रसालं पक्वाम्रफलं न लभे प्राप्नोमि तदा तदेव शिखरिणीरसालादिकं चिन्तयन्नेव सुखम् आसादयामि लभे ।

शिखरिणी—एलालवङ्गकर्पूरादिविविधसुगन्धिद्रव्यमिश्रितो दुग्धेन सह गालितसितासङ्गतः पक्वकदलीफलान्तःसारः शिखरिणीत्युच्यते ।

विदूषको राजानं कथयति यत् यदा शिखरिणीरसालादि मदीयं प्रेयः वस्तु नाहं प्राप्नोमि तदा तस्य चिन्तनेनैव मे मनः विनोदयामि तथैव त्वमपि स्वीयमनःसागरशशिलेखामुर्वशीमनधिगच्छन् तस्याः ध्यानेनैव स्वमनः प्रसादयेति पूर्वोक्तं वस्तु समर्थयति ।

**राजा**—सम्पद्यते इदं भवतः ।

**विदूषकः**—तुमं वि तं अइरेण पाविहिसि । [ त्वमपि तामचिरेण प्राप्स्यसि । ]

**राजा**—सखे ! एवं मन्ये ।

**चित्रलेखा**—सुणु असंतुट्ठे । [ शृणु असन्तुष्टे ! ]

**राजा**—

इदं तस्याः रथक्षोभादंसेनांसं निपीडितम् ।
एकं कृति शरीरेऽस्मिन्, शेषमङ्गं भुवो भरः ॥ ११ ॥

---

**राजा**—भवतः एतत्सर्वं खाद्यं सम्पद्यते प्राप्यते । भवत्प्रेयः वस्तु सर्वं सुलभमिति भावः । मद्धृदयाभिलाषस्तु कृच्छ्रसम्पाद्य इति तारतम्यं दर्शयति ।

**विदूषकः**—त्वमपि तामुर्वशीमचिरेण शीघ्रमेव प्राप्स्यसि । अत्र विच्छिन्नस्य बीजस्य पुनः समुद्भेदसम्भावनं विहितमिति स्मरणीयम् ।

**राजा**—सखे वयस्य ! एवं मन्ये—इदं तर्कयामि यत्—इति आगामिना श्लोकेन सम्बध्यते ।

**चित्रलेखा**—"एवं मन्ये इति" राज्ञः पूर्वोक्तिं "शीघ्रमेव तां लप्स्ये" इति तर्कयामीत्यर्थावबोधिकां मत्वा "शृणु असन्तुष्टे" इति वाचमुदाजहार । किमतः परमुच्यते इति कुतूहलम् ।

**राजा—इदमिति**—रथक्षोभात् उच्चावचप्रदेशेषु रथचक्रोद्घातात् इदं मदीयमंसं तस्याः उर्वश्याः अंसेन स्कन्धदेशेन निपीडितम् सङ्घर्षितम् । अतः अस्मिन् समग्रे शरीरे एकमङ्गं कृति कृतार्थम्, तथा च तद्व्यतिरिक्तं शेषमङ्गं भुवः पृथिव्याः भरः भारभूतं निरुपयोगि एवास्ते ।

केशिना गृहीतां उर्वशीं परित्रातुं गतस्य राज्ञः तं विद्राव्य प्रत्यागच्छतः एकस्मिन्नेव रथे समारूढस्य स्कन्धदेशः रथक्षोभात् तस्याः स्कन्धात् परस्परं सङ्घर्षमाप्तवान् । तदुपरि राजा मनुते यथा तदेवाङ्गं धन्यं इतरत्तु भुवि भारभूतमेव ।

अनेन राज्ञः मनसि तद्विषयको बहुमानो व्यक्तः । यतः नायकनायिकयोः पारस्परिकाङ्गसंस्पर्शजन्यं सुखं विलक्षणमेव भवतीति अनुभवमात्रगम्यम् । यथा च—"असावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः, अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः" इति भवभूतिः ।

कृतमनेनेति कृति कृतार्थम्, यथा वा शाकुन्तले—

"वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती"। अत्रांसस्य कृतार्थत्वस्य तर्क्यमाणत्वात् इह "रूपं" नाम गर्भसन्ध्यङ्गमुक्तं भवति । यदाह दर्पणकारः—"रूपं वितर्कवद्वाक्यम्" । वितर्कवत् तर्क्यमाणमिति दाधीचपण्डितः । अनुष्टुब् वृत्तम् ॥११॥

**उर्वशी**—किं दाणीं अवरं विलंबिस्सं। (सहसोपगम्य) हला चित्तलेहे! अग्गदो वि मए ट्ठिदाए उदासीणो महाराओ। [किमिदानीमपरं विलम्बिष्ये। (सहसोपगम्य) सखि चित्रलेखे! अग्रतोऽपि मम स्थिताया उदासीनो महाराजः।]

**चित्रलेखा**—(सस्मितम्) अदितुवरिदे! असंक्खित्ततिरक्करिणी असि। [अतित्वरिते! असंक्षिप्ततिरस्करिण्यसि।]

(नेपथ्ये)

इदो इदो भट्टिणी। [इत इतो भट्टिनी।]

(सर्वे कर्णं ददति। उर्वशी सख्या सह विषण्णा)

**विदूषकः**—अयि भो! उवट्ठिदा देवी। ता सुमुद्दिदमुहो होहि। [अयि भो! उपस्थिता देवी। तत्सुमुद्रितमुखो भव।]

**राजा**—भवानपि संवृताकारमास्ताम्।

---

**उर्वशी**—इदानीं तत्समीपमुपगन्तुं किमर्थमहं विलम्बं करोमि। (सहसा उपगम्य–तस्य पुरः गत्वा) सखि चित्रलेखे! अग्रतोऽपि स्थितायाः पुर एव विद्यमानायाः मम महाराजः उदासीनो मयि अनवहितचेताः आस्ते। मां न लक्षयतीति भावः।

स्थितायाः इति "षष्ठी चानादरे" इत्यनेन लघूकरणे षष्ठी।

**चित्रलेखा**—(सस्मितमुपहस्य) अयि अतित्वरिते अधीरे! असंक्षिप्ततिरस्करिणी असंहृतालक्ष्यप्रयोगा असि। अन्यैरलक्ष्या भवेयमित्युद्दिश्य प्रयुक्ता तिरस्करिणी तदाख्यः प्रयोगविशेषः यया सा एतादृशी त्वमसि–अत महाराजस्त्वां द्रष्टुं अक्षमः खलु, तेन च त्वामवधारयितुं न शक्त इति भावः। नेपथ्ये—

इत इतः भट्टिणी—राज्ञी चन्द्रपूजनार्थं कृतपरिग्रहा तत्रैवायाति।

(सर्वे कर्णं ददति शृण्वन्ति। उर्वशी सह सख्या चित्रलेखया विषण्णा खिन्ना–इदानीमहं राजानं मिलितुं न शक्नोमि निर्जनलाभावात् इति हेतुः।)

**विदूषकः**—अयि भो! (राजानं प्रति) उपस्थिता आयाता देवी। तत् इति हेतोः सुमुद्रितमुखो भव संवृतमुखः भव, मौनं भजस्वेति भावः। अतः परं मा वादीः इत्यर्थः। राज्ञी श्रोष्यति कुपिष्यति चेति हेतुः। अत्र पुनर्बीजस्य ह्रासः।

**राजा**—भवान् अपि संवृतो मुद्रितः आकारो मुखं यस्य तादृशो भव। त्वमपि तूष्णीमास्स्वेति भावः।

**उर्वशी**—हला ! किं एत्थ करणिज्जं । [ सखि ! किमत्र करणीयम् । ]

**चित्रलेखा**—अलं आवेएग । अंतरिता दाणीं सि तुमं । विहिदणिअमवेसा राअमहिसी दीसदि । ता एसा चिरं ण चिट्ठिस्सदि त्ति । [ अलमावेगेन । अन्तरितेदानीमसि त्वम् । विहितनियमवेषा राजमहिषी दृश्यते । तदेषा चिरं न स्थास्यति इति । ]

( ततः प्रविशति धृतोपहारपरिजना देवी । )

**देवी**—( चन्द्रमालोक्य ) एसो रोहिणीजोएण अहिअं सोहदि भअवं मिअलंछणो । [ एष रोहिणीयोगेनाधिकं शोभते भगवान् मृगलाञ्छनः । ]

**चेटी**—णं संपज्जिसदि भट्टिणीसहिदस्स भट्टिणो विसेसरमणीअदा । [ नूनं सम्पत्स्यते भट्टिनीसहितस्य भर्तुर्विशेषरमणीयता । ]

---

**उर्वशी**—सखि ! किमत्र करणीयम्—अस्माभिरधुना किं कर्तव्यमिति विचिकित्सति । अत्र क्षणेनैव देवी आगमिष्यति इत्यतः जनितभीतेर्गम्यमानत्वात् विद्रवाख्यं गर्भसन्ध्यङ्गम् । यदुक्तं दर्पणे "शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः" ॥ अत्र भीतिजनितसम्भ्रमरूपो विद्रवः ।

**चित्रलेखा**—अलमावेगेन सम्भ्रमेण । त्वमिदानीमन्तरिता अलक्ष्या असि । विहितः कृतः नियमव्रतोपवासादिसमुचितो वेषः यया सा एतादृशी महिषी राज्ञी दृश्यते । देव्या नियमोचितो वेषः कृतः अतः सा चिरं न स्थास्यति शीघ्रमेवेतो गमिष्यति देवी । पश्चात् आवां द्रक्ष्यावो राजानम् ।

( ततः प्रविशति धृतो गृहीतः उपहारः पूजावस्तु परिजनेन यस्याः सा देवी )

**देवी**—( चन्द्रमालोक्य ) एषः नभसि वर्तमानो भगवान् मृगलाञ्छनः चन्द्रः रोहिणीयोगेन तदाख्यनक्षत्रसम्बन्धेन अधिकं विशेषेण शोभते । रोहिणी नक्षत्रविशेषः । रोहिणी चन्द्रप्रियेत्युच्यते । भगवत्पदेन पूज्यत्वं व्यज्यते । मृगः लाञ्छनं चिह्नं यस्येति मृगलाञ्छनः । चन्द्रे दृश्यमानो यः कालिमा स कविभिः चन्द्रे मृगोऽयमिति कथ्यते ।

अत्र मृगलाञ्छनपदेन योऽयः कश्चन नायकः स्वनायिकया सह वर्तमानो विशेषेण शोभते, जनानां सुतरामाल्हादकश्च भवतीति वस्तु समासोक्तिभङ्ग्या ज्ञाप्यते ।

**चेटी**—नूनं निश्चये । भट्टिनी राजमहिषी तया सहितस्य भर्तुः राज्ञः विशेषरमणीयता विलक्षणमनोहारिता नूनं सम्पत्स्यते भविष्यति । यथा रोहिणीसम्बन्धेन चन्द्रमाः सुतरां शोभमानो दृश्यते तथैव त्वया पार्श्वगतया समलङ्कृतो राजाऽपि नूनं अधिकमेव शोभिष्यते इति चेटी देवीमाह ।

( इति परिक्रामतः । )

**विदूषकः**—भो, णं जाणामि सोत्थिवाअणं वि देदि । आदु भवंतं अंतरेण चंदव्वदव्ववदेसेण मुक्करोसा अज्ज मे अक्खीणं सुहदंसणा देवी । [ भो! ननु जानामि स्वस्तिवाचनमपि ददाति । उत भवन्तमन्तरेण चन्द्रव्रतव्यपदेशेन मुक्तरोषा अद्य मेऽक्ष्णोः सुखदर्शना देवी । ]

**राजा**—( सस्मितम् ) उभयमपि घटते । तथापि भवता यत्पश्चादभिहितं तन्मां प्रतिभाति ।

यदत्रभवती—

सितांशुका मङ्गलमात्रभूषणा पवित्रदूर्वाङ्कुरलाञ्छितालका ।
व्रतापदेशोज्झितगर्ववृत्तिना मयि प्रसन्ना वपुषैव लक्ष्यते ॥ १२ ॥

---

"अभिषिक्ता तु राज्ञासौ देवीत्यन्या तु भोगिनी । भट्टिनीत्यपरैरन्या नीचैर्गोस्वामिनीति सा" इति शब्दार्णवे । अनेन राज्ञः अभिषिक्तासु राज्ञीषु भट्टिनीतिपदं चेटीभिः प्रयोज्यम् ।

( इति परिक्रामतः—देवीचेट्यौ राजानमुपसर्पतः । )

**विदूषकः**—राज्ञीं प्रसन्नां दृष्ट्वा किमस्येति कारणं विचारयन्नाह—

ननु इति वितर्के । जानामि यत् सा किमपि स्वस्तिवाचनं उपहारः भक्ष्यं दास्यतीति उत अथवा भवन्तमन्तरेण भवन्तं उद्दिश्य चन्द्रव्रतस्य व्यपदेशेन मिषेण मुक्तो रोषः क्रोधो यया तादृशी सती अद्य मे अक्ष्णोः नयनयोः सुखं सुखकारकं दर्शनं यस्याः तादृशी देवी प्रतिभाति । भावस्तु—सा किञ्चित् भक्ष्यं दित्सुरिति हेतोः मम नयनयोः सा प्रीतिकरा अथवा भवद्विषयको यस्तस्याः क्रोधस्तं व्रतव्याजेन परित्यजन्ती अत एव सुखदर्शना प्रतिभातीति न जाने इति वितर्कः किन्तु अद्य सा प्रियदर्शनेति निश्चितम् ।

स्वस्तिवाचनम् ब्राह्मणेभ्यो दीयमानं मोदकादि [—उपहारः स्वस्ति+वच्+ल्युट् ( अन ) ] ।

**राजा**—( सस्मितम् ) तथा उभयमपि घटते । उभावपि वे वितर्कौ सङ्गच्छेते । तयोरन्यतर एव सम्भवेत् । किन्तु मह्यं तु इत्थं प्रतिभाति यत् भवता पश्चादनन्तरमभिहितं उक्तं तदेव कारणम् । तया व्रतव्याजेन मुक्तरोषया भवितव्यमिति ते तर्कः मह्यं प्रसन्नतरः प्रतिभाति ।

यतः अत्रभवती मान्या सा एतादृशी लक्ष्यते—

**सितांशुकेति**—सितं धवलं अंशुकं उत्तरीयं यस्याः सा मङ्गलमेव मङ्गलमात्रं हरिद्राकुङ्कुमादि एव भूषणं अथवा मङ्गलसूत्राख्यं भूषणं यस्याः सा तथा च पवित्रं

**देवी**—( उपगम्य । ) जेदु जेदु महाराओ । [ जयतु जयतु महाराजः । ]

**परिजनः**—जेदि जेदि देवो । [ जयति जयति देवः । ]

**विदूषकः**—सोत्थि भोदीए । [ स्वस्ति भवत्यै । ]

**राजा**—स्वागतं देव्यै । ( तां हस्तेन गृहीत्वोपवेशयति । )

**उर्वशी**—ठ्ठाणे इअं वि देवीसद्देण उच्चारीअदि । ण हि किंवि परिहीअदि सचीदो ओजस्सिदाए । [ स्थाने इयमपि देवीशब्देनोच्चार्यते । न हि किमपि परिहीयते शचीतः ओजस्वितया । ]

---

यद्दूर्वायाः अङ्कुरं तेन लाञ्छितं भूषितमलकं यस्याः सा देवी व्रतस्यापदेशेन मिषेण उज्झिता परित्यक्ता गर्ववृत्तिः मानिता यस्य तेन वपुषा शरीरेणैव सा मयि प्रसन्ना मुक्तकोपा लक्ष्यते प्रतिभाति ।

यतः तया धवलमुत्तरीयं परिधत्तम्, केवलं मङ्गलमयान्येव भूषणानि धृतानि, केशेषु दूर्वाङ्कुरमेव न्यस्तमिति कारणैः प्रतीयमानेन परित्यक्तमानेन देहेनैव सा मयि प्रसन्नेति दृश्यते ।

अत्र पूर्वार्धस्य उत्तरार्धे हेतुत्वात् काव्यलिङ्गमलङ्करणम् "हेतोः वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" । वपुषैव लक्ष्यते अर्थात् सा मनसा तु प्रसन्नैवेति दण्डापूपिकान्यायेन अर्थस्य प्रतीयमानत्वात् अर्थापत्तिः । अत्र माधुर्याख्यो गुणः ।

सितांशुकेत्यनेन निर्मलवस्त्रत्वात् व्रतौचित्यं सौभाग्यं च सूचितम् । मङ्गलमात्रभूषणेत्यनेन सामान्यत्वं व्यक्तम् । पवित्रदूर्वाङ्कुरेत्यनेन स्वल्पमण्डना वर्तते तेन चाधिकसौन्दर्यं दृष्टिपथमवतरतीति व्यङ्ग्यम् । अनेनैव सौन्दर्येण कोपस्य परित्यागात् तस्याः राज्ञि दाक्षिण्यम् द्योत्यते । अत्र सितांशुकादिषु केवलमेकस्यैव प्रदानात् व्रतचारित्वं सूचितं भवेत् किन्तु तदर्थमेव विशेषणत्रयप्रदानात् समुच्चयालङ्कारोऽपि । यदुक्तम्—"समुच्चयोयमेकस्मिन् सति कार्यस्य साधके । खलेकपोतिकान्यायात्तत्करः स्यात्परोऽपि चेत् ।" वंशस्थं वृत्तम्—जगणतगणजगणरगणसत्त्वे वंशस्थाख्यं वृत्तम् ॥ १२ ॥

**देवी**—( उपगम्योपसृत्य ) जयतु जयतु महाराजः । मङ्गलवचनमिदम् ।

**परिजनः**—जयति जयति देवः । अयमपि पूर्ववत् ।

**विदूषकः**—भवत्यै स्वस्ति । अत्र स्वस्तियोगे चतुर्थी ।

**उर्वशी**—स्थाने युक्तमेवैतत् यदियं देवीतिपदेनोच्चार्यते राज्ञा कथ्यते । कुत इत्याह—इयं राज्ञी शचीतः इन्द्राण्याः किमपि ईषदपि ओजस्वितया सौन्दर्येण तेजसापि वा न परिहीयते न्यूना अस्ति । रूपतेजोमाहात्म्येन न कथमपि इन्द्राण्या सा हीना विद्यते अत एव देवीतिपदेन बोध्यः; राज्ञः अस्यां बहुमानो युक्तः एव । स्थाने "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः ।

चित्रलेखा—साहु असूहापरंमुहं मंतिदं । [साधु असूयापराङ्मुखं मन्त्रितम् । ]

देवी—अज्जउत्तं पुरोकदुअ को वि वदविसेसो मए संपादणीओ । ता मुहुत्तं उवरोधो सहीअदु । [आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया सम्पादनीयः । तन्मुहूर्तं उपरोधः सह्यताम् । ]

राजा—मा मैवम् । अनुग्रहः खलु नोपरोधः ।

विदूषकः—ईरिसो णं सोत्थिवाअणएहिं दे बहुसो उवरोधो होदु । [ईदृशो ननु स्वस्तिवाचनकैस्ते बहुशः उपरोधो भवतु । ]

राजा—किंनामधेयमेतद्देव्या व्रतम्? (देवी निपुणिकामवलोकयति ।)

निपु०—भट्टा! पिअप्पसादणं णाम । [भर्तः! प्रियप्रसादनं नाम । ]

---

चित्रलेखा—त्वया साधु एवोचितमेव असूया स्पर्धा तस्याः पराङ्मुखं विपरीतं स्पर्धारहितं मन्त्रितं विचारितम् । असूया हि नाम गुणेषु दोषाविष्करणमिति सिद्धान्तकौमुदी । उर्वशी राज्ञि अनुरक्ता । देवी च तस्य पत्नी । तेन सपत्नीभावेन साहजिकी एवासूया खलु, किन्तु तथापि असूयाविरहितं तयोक्तम् यत् सा रूपेणाहीना कथमपि शचीत इति । अनेन नायिकायाः दाक्षिण्यमुदारता च सूच्यते ।

देवी—आर्यपुत्रं पुरस्कृत्य अग्रे निवेश्य मया कोऽपि कश्चन व्रतविशेषः सम्पादनीयः करणीयः । अतः मुहूर्तं कञ्चित्कालं उपरोधः तदर्थं मया कृतः प्रतिबन्धः रुध्यताम् ।

राजा—मा मा एवम् । उपरोधोऽयमिति मा मा उच्यताम् । अयं तावदनुग्रहः न तु उपरोधः प्रतिबन्धः इति । अनेन राज्ञः विनयित्वं दाक्षिण्यं च व्यक्तम् ।

विदूषकः—विदूषकस्तु राज्ञी मह्यमपि किमपि उपहाररूपेण दास्यतीति मन्यमानः तां सादरं सानुनयं भणति "ईदृशः खलु उपरोधः यदि स्वस्तिवाचनकैः मोदकाद्युपहारैः सहितो भवेत् तदा तु बहुशोऽस्तु । विदूषकस्य मोदकप्रियत्वात् स सर्वैः स्वार्थपरत्वमेवावलम्बते ।

राजा—देव्या एतद्व्रतम् किंनामधेयमस्तीति पृच्छा । किं नु खलु एतद्व्रतस्य नाम?

(देवी उत्तरप्रदानाय निपुणिकामवलोकयति ।)

निपु०—भर्तः! प्रियप्रसादनं नाम । प्रियः प्रसाद्यते अनुनीयते अनेनेति प्रियप्रसादनम् । प्रपूर्वक–सद् धातोः ल्युट् । यस्य व्रतस्य आचरणेन प्रियः सदैवानुकूलो भवेत् तादृशमिदं व्रतम् ।

**राजा**—( देवीं विलोक्य )—यद्येवम्—

अनेन कल्याणि ! मृणालकोमलं
व्रतेन गात्रं ग्लपयस्यकारणम् ।
प्रसादमाकाङ्क्षति यस्तवोत्सुकः
स किं त्वया दासजनः प्रसाद्यते ॥ १३ ॥

---

**राजा**—( देवीं विलोक्य ) यदि व्रतमिदमेवमेतादृशं प्रियस्य प्रसादनार्थमाचरितं चेत्—

**अनेनेति**—हे कल्याणि मङ्गलानुभावे शोभने वा ! अनेन उपर्युक्तेन व्रतेन व्रताचरणेन मृणालं कमलनालं तद्वत् कोमलं सुकुमारं तवेदं गात्रं अकारणम् कारणेन विनैव ग्लपयसि क्षीणं करोपि । कुतः—यः दासजनः उत्सुकः उत्कण्ठितो भूत्वा तव प्रसादमनुग्रहमाकाङ्क्षति वाञ्छति स एव त्वया किं किमर्थं प्रसाद्यते । यस्तवैवानुग्रहपरिशीलनेन जीवति सः पुरुषः त्वया किमर्थं प्रसाद्यते ? तवानुग्रहमाकाङ्क्षमाणोऽयं दासजनस्त्वया प्रसादनार्हो नास्तीति भावः ।

सरलार्थस्तु—अयि मङ्गलमुखि ! यो जनस्तव प्रसादमनिशं कामयते तस्य प्रसादने यत्नस्य कैमर्थ्यमेव । तेन च वृथैवायं तव परिश्रमः प्राप्तस्यैव लाभायानुष्ठितत्वात् । ततश्च व्रताचरणेन व्यर्थमेव सुकुमारां तवाङ्गयष्टिं खेदयसीति । यतः—"लभेत वा प्रार्थयिता न वा श्रियम्, श्रिया दुरापः कथमीप्सितो भवेत् ।" ( शाकु. ३–१६ ) । यदि ते प्रसादमहमिच्छामि तदा सम्भवमिदं यदहं तन्न लभेयम् किन्तु त्वयेप्सितो दुरापः कथं भविष्यतीति भावः । अथवा यदुक्तं कुमारे—"न रत्नमन्विष्यति मृग्यते हि तत्" न ते प्रसादं कस्यापि लब्धुं यत्नः साम्प्रतम्, किन्तु जनास्ते प्रसादाय लालायन्ते इति ।

अनेन राज्ञस्तस्यां बहुमानः आनुकूल्यं च व्यज्यते । कल्याणि—अत्र बह्वादिभ्यश्च ङीप्—कल्याणमस्यै भवतीति । ग्लपयसि क्षयार्थस्य ग्लैधातोः णिजन्तस्य लटि प्रयोगः । न विद्यते कारणं यस्येति अकारणं नञ्बहुव्रीहिः क्रियाविशेषणं च । गात्रपदमत्र समग्रशरीरे न तु अवयवे यतः "गात्रं गजाग्रजङ्घादिभागेऽप्यङ्गे कलेवरे" इति विश्वलोचनः ।

अत्र च मृणालवत्कोमलमित्यत्र उपमालङ्कारः । तेन च तस्याः अङ्गसौष्ठवं मार्दवं तेन व्रताचरणानौचित्यं व्यज्यते । तथा च पूर्वार्धं प्रति उत्तरार्धस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः । व्रतचर्यायाः गात्रत्रासहेतुत्वात् अकारणत्वं च तस्याः उत्तरार्धगतवस्तुतश्च कार्यकारणभावः । अनयोश्च संसृष्टिः । तथा च अन्यासु संक्रान्तप्रेम्णां नायकानां कीदृशी व्यवहारपदवी स्वीयभार्यासु भवतीति कथनात् अन्यसंक्रान्तचेतसां स्वभाववर्णनात्, स्वभावोक्तिश्च ।

अत्र माधुर्याख्यः शब्दगुणः ॥ यदुक्तं "संयोगपरह्रस्वातिरिक्तवर्णघटितत्वे

**उर्वशी**—(सवैलक्ष्यस्मितम्) महंतो खु एदस्स इमिस्सिं बहुमाणो। [महान् खल्वेतस्यैतस्यां बहुमानः।]

**चित्रलेखा**—अइ मुद्धे! अण्णसंकंतप्पेमाणो णाअरा भारिआए अहिअं दक्खिणा होंति। [अयि मुग्धे! अन्यसंक्रान्तप्रेमाणो नागरा भार्यायामधिकं दक्षिणाः भवन्ति।]

**देवी**—एदस्स वदस्स अअं पहावो जं एत्तिअं वददि अज्ज-उत्तो। [एतस्य व्रतस्यायं प्रभावो यदेतावद् वदत्यार्यपुत्रः।]

**विदूषकः**—विरमदु भवं। ण जुत्तं दे सुहासिदं प्पच्चक्खिदुं। [विरमतु भवान्। न युक्तं ते सुभाषितं प्रत्याख्यातुम्।]

**देवी**—दारिआओ! आणेध ओवहारिअं जाव हम्मगदे

---

सति पृथक्पदत्वं माधुर्यम्" तथा चापरुषवर्णघटितत्वात् सुकुमारता नाम शब्द-गुणः। तथा चात्र प्रसादाख्यः अर्थगुणः यदाह पण्डितेन्द्रः "यावदर्थकपदत्वरूप-मर्थवैमल्यं प्रसादः"। तथा च परमभावगाम्भीर्यपरिपूर्णत्वात् भावगौरवं च।

वंशस्थवृत्तम्। जगणतगणजगणरगणानामस्तित्वात्॥ १३॥

**उर्वशी**—(सवैलक्ष्यस्मितम्—राज्ञस्तया सहैतादृशव्यवहारमवलोक्य वि-स्मिता सती सस्मिता आह) एतस्यामस्य राज्ञो महान् खलु बहुमानः आदरः।

**चित्रलेखा**—अयि मुग्धे अनभिज्ञे! अन्यासु संक्रान्तं लग्नं प्रेम येषां तादृशाः अन्यनायिकामुग्धहृदया नागराश्चतुरा नायकाः भार्यायामधिकं सुतरां दक्षिणाः अनुकूलाश्चाटुवादिनो भवन्ति। येषां चेतः अन्यललनासु लग्नं ते स्वीयगृहिण्याः सुतरां छन्दानुवर्तिनो भवन्तीति भावः। अनेन तादृशां स्वभावो-द्घाटितः। तथा च तस्या बहुमानेऽपि स्वप्रियसख्यां उर्वश्यां तस्य तादृश एव प्रणय इति बोधनेन उर्वश्याः मनसि शान्तिसम्पादनायालमिदं वाक्यम्।

**देवी**—सासूयेयं किञ्चित् स्वव्रतप्रभावं प्रख्यापयति—एतस्यैव व्रतस्य अयं प्रभावः सामर्थ्यं यदेतावत् मधुरं आर्यपुत्रो वदतीति। अत्र नायिकया संरब्ध-वचसः प्रयुज्यमानत्वात्तोटकं नाम गर्भसन्ध्यङ्गमुक्तं भवति।

**विदूषकः**—नृपं प्रति–विरमतु भवान् व्रतनिषेधात् इति शेषः। देवीं प्रति–न युक्तं तवेदं सुभाषितं "आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया सम्पाद-नीयः" इति मधुरभाषितं प्रत्याख्यातुं विरुद्धं वक्तुम्। सः इत्थं मधुरं वक्ति त्वं च तत्प्रत्याचरसि तत् तवेदं युक्तं न, यतः तस्य उत्साहभङ्गो कदाचिद्भवेत्।

**देवी**—दारिकाश्चेट्यः! यूयमानयत उपनयत औपहारिकं देवोद्देशेन

चंदवादे अच्चेमि । [ दारिकाः ! आनयतौपहारिकं यावद् हर्म्य-गतांश्चन्द्रपादानर्चयामि । ]

**परिजनः**—जं देवी आणवेदि । एसो उवहारो । [ यद्देवी आज्ञापयति । एष उपहारः । ]

**देवी**—उवणेध ( नाट्येन कुसुमादिभिश्चन्द्रपादानभ्यर्च्य ) हञ्जे ! इमेहिं उवहारेहिं मोदएहिं अ अज्जमाणअवं कंचुइं अच्चेध । [ उपनयत हञ्जे ! एतैरुपहारैर्मोदकैश्च आर्यमाणवकं कञ्चुकिनं चार्चयत । ]

**परिजनः**—जं देवी आणवेदि । अज्ज माणवअ ! एदं उववादिदं सोत्थिवाअणअं । [ यद्देवी आज्ञापयति । आर्य माणवक ! एतदुप-पादितं स्वस्तिवाचनकम् । ]

**विदूषकः**—( मोदकशरावं गृहीत्वा ) सोत्थि भोदीए । वहुफलं एदं वदं होदु । [ स्वस्ति भवत्यै । बहुफलं एतद्व्रतम् भवतु । ]

**चेटी**—अज्ज कंचुइ ! इदं तुह । [ आर्ये कञ्चुकिन् ! इदं तव । ]

---

यत्किमपि उपहाररूपेण दातव्यं, यावदहं हर्म्यगतान् प्रासादगतान् भगवतश्चन्द्र-मसः पादान् किरणानि चरणांश्च अर्चयामि पूजयिष्यामि । अत्र पादपदं श्लिष्टम् ।

तथा च "अर्चयामि" अस्य पूजां करिष्यामि इति भविष्यदर्थः । यतः "यावत् पुरानिपातयोर्लट्" ( ३।३।४ ) इति यावच्छब्दयोगे भविष्यति काले लट् ।

**परिजनः**—यद्देवी आज्ञापयति—( आनीयोपहारम् ) एष उपहारः ।

**देवी**—उपनयत आनयत ! ( नाट्येनाभिनीय कुसुमादिभिरुपहारैश्चन्द्र-पादान् चन्द्रमरीचीन् अभ्यर्च्य पूजयित्वा । )

हञ्जे इति चेटीनां सम्बोधनम् । एतैरुपहारैर्मोदकैः मिष्टान्नेन आर्यमाणवकं तथा च कञ्चुकिनं अर्चयत सम्भावयत ।

**परिजनः**—यद्देवी आज्ञापयति । आर्यमाणवक ! एतत्ते उपपादितं समर्पित-मानीतवान् स्वस्तिवाचनकं मोदकोपहारः । मया तव कृतं उपहारः उपनीतः ।

**विदूषकः**—( मोदकशरावं मोदकेन पूर्णं शरावं गृहीत्वा—अत्र मध्यमपदलोपी समासः ) स्वस्ति भवत्यै । अत्र स्वस्तियोगे चतुर्थी । बहु प्रचुरं फलं यस्य तादृग् व्रतमिदं ते भवतु इति मङ्गलमाशास्ते ।

**चेटी**—आर्य कञ्चुकिन् ! इदं तव, त्वदर्थमयमुपहारः इति भावः ।

**कञ्चुकी**—( गृहीत्वा ) स्वस्ति देव्यै ।

**देवी**—अज्जउत्त ! इदो दाव । [ आर्यपुत्र ! इतस्तावत् । ]

**राजा**—अयमस्मि ।

**देवी**—( राज्ञः पूजामभिनीय प्राञ्जलिः प्रणम्य च ) एसा देवदामिहुणं रोहिणीमिअलंछणं सक्खीकरिअ अज्जउत्तं अणुप्पसादेमि । अज्जप्पहुदि अज्जउत्तो जं इत्थिअं कामेदि, जा अज्जउत्तसमागमप्पणइणी, ताए सह अप्पदिबंधेण वत्तिदव्वं । [ एषा देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्यार्यपुत्रमनुप्रसादयामि । अद्यप्रभृति आर्यपुत्रो यां स्त्रियं कामयते, या आर्यपुत्रसमागमप्रणयिनी तया सहाप्रतिबन्धेन वर्तितव्यम् । ]

---

**कञ्चुकी**—( गृहीत्वा ) स्वस्ति देव्यै । अत्र सेव्यसेवकभावात् कञ्चुकिना देवीपदग्रहणम् । विदूषकेण तु भवतीति पदं उचितमुपयुक्तं, यदुक्तम्—"परपत्नी तु या स्त्री स्यात् असम्बन्धात्तु योनितः । तां ब्रूयात् भवतीत्येवं सुभगे भगिनीति च" इति मनूक्तेः भवतीतिपदप्रयोगः साधुः । तथा च राज्ञो मित्रं विदूषकः ।

**देवी**—आर्यपुत्र ! इतस्तावत्—आगत्य मां सम्भावयेत्यर्थः ।

**राजा**—अयमस्मि-आगतोऽस्मि—

**देवी**—( राज्ञः पूजां अभिनीय विधाय प्राञ्जलिः सती राजानं प्रणम्य ) एषा अहं देवतास्वरूपं मिथुनं युगलं रोहिणी चन्द्रकान्ता च मृगलाञ्छनश्च चन्द्रस्तन्मयं मिथुनं साक्षीकृत्य साक्षिस्थाने कृत्वा आर्यपुत्रमनुप्रसादयामि मयि प्रसन्नं करोमि । अद्यप्रभृति आर्यपुत्रः यां स्त्रियं कामयते अभिलषति, या च आर्यपुत्रेण सह समागमसम्बन्धस्तस्मिन् प्रणयः प्रीतिरस्याः अस्तीति तया सह अप्रतिबन्धेन अविरुद्धतया मया वर्तितव्यमिति । सरलार्थस्तु-रोहिणीचन्द्रमिथुनं समक्षीकृत्य अहमिदं शपे यदद्यप्रभृति यस्यामार्यपुत्रः प्रेमानुबन्धी या चार्यपुत्रेण समागन्तुकामा ( तया सह ) असूयां परित्यज्याविरुद्धतया साम्येन वर्तिष्य इति । अत्र नायकस्य रहस्योद्भेदात् क्षिप्तिर्नाम गर्भसन्ध्यङ्गमुक्तं भवति विश्वनाथमतेन । परं च "गर्भबीजसमुद्भेदादाक्षेपः परिकीर्तितः" इति वचनात् धनञ्जयमतेनाक्षेपो नाम सन्ध्यङ्गं प्रोक्तम् । अस्याङ्गस्य विशेषतः प्राधान्यमस्ति वस्तुपरिपोषायेत्यवधेयम् ।

साक्षीकृत्येति "साक्षाद्द्रष्टरि संज्ञायामिति मतुबर्थे इनिः" ।

अनेनातः परं नाहमार्यपुत्रस्य परालल्नाभिलाषे परिपन्थिनी भविष्यामि इति संसूच्य औदार्यं नाम नारीभूषणं ख्यापितम् ।

**उर्वशी**—अम्महे ! ण आणामि किंपरं से वअणम् । मम उण विस्सासविसदं हिअअं संवुत्तम् । [अम्महे ! न जानामि किंपरमस्या वचनम् । मम पुनर्विश्वासविशदं हृदयं संवृत्तम् । ]

**चित्रलेखा**—सहि ! महाणुभावाए पदिव्वदाए अब्भणुण्णादो अणंतराओ दे पिअसमागमो भविस्सदि । [सखि ! महानुभावया पतिव्रतयाभ्यनुज्ञातोऽनन्तरायस्ते प्रियसमागमो भविष्यति । ]

**विदूषकः**—(अपवार्य-) छिन्नहत्थो पुरदो वज्झे पलाइदे भणादि "गच्छ धम्मो भविस्सदि" त्ति । (प्रकाशम्) भोदि ! किं

---

**उर्वशी**—अम्महे इति आश्चर्ये । न जानामि किंपरं कस्यार्थस्य बोधकं अस्याः वचनमिदम् । कमर्थं गमयतीदं वचनमिति ज्ञातुमसमर्थास्मि किं यथार्थमिदं वचनमुत वक्रोक्तिपरमिति सन्देहः । किन्तु विश्वासात् चित्ते विश्रम्भात् विशदम् प्रसन्नम् मे हृदयं संवृत्तं संजातम् । अत्र शङ्काजनितसम्भ्रमस्य गम्यमानत्वात् शङ्कारूपो विद्रवः ।

**चित्रलेखा**—सखि ! महान् अनुभावः प्रभावो यस्याः सा तया प्रभविष्ण्या पतिव्रतया पतिपरायणया स्वामिहितकामया महिष्या ते प्रियेण सह समागमः सम्मेलनं न विद्यते अन्तरायो विघ्नो यस्मिन् तादृशः निष्प्रत्यूहः भविष्यतीति अभ्यनुज्ञातः सम्मतः । यां काञ्चनापि स्त्रियं राजाभिलषति तां सा अनुमन्यते इति भावः, न सा तया सपत्नीत्वेन विरुद्धा भविष्यतीति किन्तु पतिमनुसरन्ती तया सह दाक्षिण्येन भविष्यति इति प्रतिजानीते ।

**विदूषकः**—(अपवार्य—'रहस्यं तु यदन्यस्य परावृत्य प्रकाशितम्' अन्यैर्यथा न श्रूयते तथा) छिन्नः निष्फलः हस्तः कौशलं यस्य तादृशः मोघीभूतकलाकौशलो धीवरः पुरतस्तस्मिन् सावधानेऽपि वध्ये मत्स्ये पलायिते जालात् परिभ्रश्य जले मग्ने सति "मया परित्यक्तोऽसि, यथासुखं गच्छ, मया धर्मोऽनुष्ठितः" इति विचार्य यथाकथञ्चिद् स्वहानिविषये आत्मानं सन्तोषयति तथैव देवी सुरललनालालित्यलुब्धमानसं राजानं तस्या निवारयितुं असमर्था सती अहमार्यपुत्रस्याभीप्सितप्रमदापरिपन्थिनी न भविष्यामीति पातिव्रत्येन धर्मानुचरणमिषेण यथाकथमपि आत्मानं तोषयति इति भावः । विदूषकस्यायं सोल्लुण्ठोपहासः ।

अनेन राज्ञस्तस्यां सुराङ्गनायां गाढः प्रणयो व्यज्यते । तथा च राज्ञश्चपलत्वं सूचितम् । वध्यपदप्रदानेन राज्ञः देव्यायत्तत्वं द्योत्यते । अत्र च धीवरस्य मत्स्यापगमाप्रक्रान्तवस्तुव्याजेन प्रस्तुतवस्तुज्ञापनेनाप्रस्तुतप्रशंसालङ्कारः । यदुक्तम्—"अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु या स्तुतिः" ।

(प्रकाशम्) भवति ! किं तत्रभवान् राजा तव तादृशः प्रियोऽभिमतः

तारिसो पिओ तत्तभवं? [ छिन्नहस्तः पुरतो वध्ये पलायिते भणति "गच्छ धर्मो भविष्यती"ति । भवति! किं तादृशः प्रियः तत्रभवान्? ]

**देवी**—मूढ! अहं खु अत्तणो सुहावसाणेण अज्जउत्तस्स सुहं इच्छामि । एत्तिएण चिन्तेहि दाव पिओ ण वेत्ति । [ मूर्ख! अहं खलु आत्मनः सुखावसानेनार्यपुत्रस्य सुखं इच्छामि । एतावता चिन्तय तावत्प्रियो न वेति । ]

**राजा**—दातुमसहने प्रभवस्यन्यस्यै, कर्तुमेव वा दासम् ।
नाहं पुनस्तथा त्वयि, यथा हि मां शङ्कसे भीरु ॥१४॥

**देवी**—भोदु मा वा । जधाणिद्दिट्ठं संपादिदं पिअप्पसादणं व्वदम् । आअच्छध परिजणा, गच्छम्ह । [ भवतु मा वा ।

---

यतोऽन्यसङ्क्रान्तचित्तेऽपि तस्मिन् मानं विहाय तस्य तादृशाभीप्सितार्थसम्पादने महती ते उत्कण्ठा? अथवा तादृशः अन्यनायिकासंसक्तमानसः स किं ते प्रिय इति सर्वं उभयथापि सोल्लुण्ठनोक्तिः ।

**देवी**—मूढ! अहं खलु आत्मनः स्वस्य सुखावसानेन सुखाभावेनापि आर्यपुत्रस्य सुखं व्यपगतमनसिजसन्तापं सम्पादयितुं इच्छामि । अनेन मदीयव्यवहारेण त्वमेव चिन्तयावगच्छ यत् स मे प्रियो न वेति कीदृशं च तस्मिन् मे प्रेमेति । अत्र राजाविदूषकयोरभिसन्धानात् अधिबलं नाम गर्भसन्ध्यङ्गम् । अत्र सुराङ्गनायै असूयन्ती सत्यपि देवी स्वार्थत्यागमिषेणात्मनः संरम्भं गोपायितुं विदूषकं राज्ञः सम्मुखे अभिसन्दधातीत्यतः मुख्यमधिबलाख्यं गर्भसन्ध्यङ्गं सिद्धम् । "अधिबलमभिसन्धिः" इति दशरूपके ।

अनेन तस्याः धीरस्वभाववत्वं, क्षमाशीलत्त्वं, मानराहित्यं, जितेन्द्रियत्वं परं पतिपरायणत्वं च वस्तु गम्यते ।

**राजा—दातुमिति**—अयि असहने अक्षमे! त्वं मामन्यस्यै अन्यस्त्रियै दातुं प्रभवसि अथवा स्वस्य वा दासं कर्तुं प्रभवसि पुनः (किन्तु) तथापि अयि भीरु भयशीले! नाहं त्वयि तथा विरक्तचेताः यथा मां त्वं शङ्कसे । अहं त्वत्सेवनपर एव नान्यसंलग्नमानसः । त्वं तु सर्वं कर्तुं प्रभवसि । इयमुक्तिर्नायकस्य शठत्वं गमयति ।

अनेन राज्ञा स्वापराधगोपनं कृतम् । अन्यनायिकापहृतचेतसामीदृशः स्वभावोऽपीति वर्णनात् स्वभावोक्तिः गम्यते । अत्र पुनरिति पदं किन्त्वर्थे ।

इयमार्याजातिः ॥ १४ ॥

**देवी**—भवान् परासक्तमना भवतु न वा । निष्प्रयोजनमिदम् । यथानिर्दिष्टं यथाप्रदर्शितं प्रियप्रसादनं तदाख्यं व्रतम् सम्पादितम् सम्यक्तया अनुष्ठितम् ।

यथानिर्दिष्टं सम्पादितं प्रियप्रसादनं व्रतम् । आगच्छत परिजनाः, गच्छामः । ]

**राजा**—प्रिये ! न खलु प्रसादितोऽस्मि यदि सम्प्रति विहाय गम्यते ।

**देवी**—अज्जउत्त ! ण लंघिदपुव्वो संपदं णिअमो । ( इति सपरिजना निष्क्रान्ता ) [ आर्यपुत्र ! न लङ्घितपूर्वः साम्प्रतं नियमः । ]

**उर्वशी**—हला ! पिअकलत्तो राएसी । न उण हिअअं णिवत्तेदुं सक्कणोमि । [ सखि ! प्रियकलत्रो राजर्षिः । न पुनर्हृदयं निवर्तयितुं शक्नोमि । ]

**चित्रलेखा**—कधं त्थिरासो णिवत्तीअदि ! [ कथं स्थिराशो निवर्त्यते ! ]

**राजा**—( आसनमुपसृत्य ) वयस्य ! न खलु दूरं गता देवी ।

---

परिजनाः ! आगच्छत—किमस्माकं तेन, वयं तु गच्छामः । अनेन राज्ञ्या केवलं दाक्षिण्येनैव व्रतचर्या कृता, न तु परमार्थत इति सूच्यते ।

**राजा**—प्रिये ! यदि त्वं सम्प्रति मामिहैवेदानीं विहाय गच्छसि तर्हि अहं न प्रसादितोऽस्मि । अनेन राज्ञीकृतकोपायावसरो मा भूत् इति वाञ्छया केवलं राज्ञः चाटुकारिता, याथार्थ्ये तु यदीयं शीघ्रमेवेतः अपसरेत्तदा साधु स्यादिति मनोवृत्तिस्तु स्फुटा एव ।

**देवी**—साम्प्रतमिदानीं नियमो मे लङ्घितपूर्वः पूर्वस्मिन् समये कदापि उच्छिन्नो नास्ति । अत्र चावस्थानेन मे व्रतभङ्गो भविष्यति प्रातिकूल्यात् । अतो नाहं शक्तात्र स्थातुमतः परमित्यर्थः । अत्र महिष्या वचनस्य संरब्धत्वात्तोटकं-नाम सन्ध्यङ्गम् यदुक्तं नाट्यशास्त्रे-"संरम्भवचनप्रायं तोटकम्" ।

( इति परिजनैः सह निष्क्रान्ता प्रस्थिता । )

**उर्वशी**—प्रियसखि ! राजर्षिरयं प्रियं कलत्रं यस्य सः प्रियदारः अस्ति । तथापि अहं तस्मात् मे हृदयं निवर्तयितुं परावर्तयितुं न शक्नोमि ।

**चित्रलेखा**—स्थिराशः स्थिरप्रेमानुबन्धः कथं निवर्त्यते ? अशक्यो हि स्थिरप्रेमप्रसरस्य हृदयस्य इष्टवस्तुनो निरोधः ।

सामान्यवाक्यमिदम् । अत्र स्थिराश इति पदं तथाविधव्यक्तिसामान्यपरं, न तु पूर्ववाक्यस्थहृदयविशेषणम् इति पुंल्लिङ्गत्वेऽपि न च्युतसंस्कारत्वदोषापत्तिः ।

**राजा**—( आसनमुपसृत्य आगत्य ) वयस्य माणवक ! नाहं चिन्तयामि यद्देवी दूरं गता । अनेन तथाश्राव्यं वस्तु विविदिषुरयं प्रतिभाति । नन्वर्थेनात्र प्रश्नः ।

**विदूषकः**—भण वीसद्धो जं सि वत्तुकामो। असज्झो त्ति परिच्छिदिअ आदुरो विअ वेज्जेण अइरेण मुक्को तत्तभवं भोदीए। [भण विश्रब्धो यदसि वक्तुकामः। असाध्य इति परिच्छिद्य आतुर इव वैद्येनाचिरेण मुक्तस्तत्रभवान् भवत्या।]

**राजा**—अपि नाम सा उर्वशी—

**उर्वशी**—(आत्मगतम्) किदत्था भवे। [कृतार्था भवेत्।]

**राजा**—गूढं नूपुरशब्दमात्रमपि मे कान्तं श्रुतौ पातयेत्
पश्चादेत्य शनैः करोत्पलवृते कुर्वीत वा लोचने।

---

**विदूषकः**—राज्ञोऽभिप्रायं ज्ञात्वा कथयति—यत्किमपि वक्तुकामः असि तत् विश्रब्धः विश्वस्तः सन् भण कथय। असाध्योऽयमस्य रोग इति परिच्छिद्य निश्चित्य आतुरो रोगी यथा वैद्येनाचिरेण शीघ्रमेव परित्यज्यते तथैव त्वमपि भवत्या देव्या मुक्तः परित्यक्तः। वक्तुकाम इत्यत्र "तुङ्काममनसोः" इत्यनेन मकारलोपः।

अनेन कामुकानां कामावस्था असाध्या भवति, राजा च तादृशीं अवस्थां प्रतिपन्न इति बुध्यते। अत्रोपमालङ्कारः।

**राजा**—उर्वशीं दिदृक्षुः सन् तद्विरहसन्तप्तः तामेव ध्यायन् स्मरति। अपि नाम प्रश्ने।

**उर्वशी**—राज्ञः कियान् प्रणयस्तस्यामिति जिज्ञासुः सा आत्मगतं विचचार। यदि उर्वशी तव विचारसरणीमारोहति चेत् कृतार्था धन्या भवेत्। अनेन तस्या औत्सुक्यं ध्वन्यते।

**राजा—गूढमिति**—अपि नाम सा उर्वशीति चूर्णकेनान्वितं पद्यमिदम्। गूढं गुप्ततया अविज्ञातमेव वा मे श्रुतौ कर्णपुटे कान्तं मनोहारि नूपुराणां शब्दमात्रमेव पातयेत्। किमुर्वशी स्वनूपुरकलशिञ्जितेन मे कर्णपुटम् अनुग्राहयेत्?। अथवा भविष्यति (किं सा इयती कृपया संविष्टचेताः) यत्सा पश्चात् मम पृष्ठभागे एत्य शनैः शनैः तस्या करौ एवोत्पले तेन वृते समाच्छादिते मम लोचने कुर्वीत। अथवा अस्मिन् हर्म्ये प्रासादे अवतीर्य आकाशादधो गत्वा साध्वसवशात् भीता अत एव मन्दायमाना मन्दगतिः पदात्पदं प्रतिपदं बलात्कारेण तस्या चतुरया सख्या चित्रलेखया मम उपान्तिकं समीपमानीयेत वा।

कथमपि तया सह समागमः अत्र सम्भवः किमु इति विचारयति।

अत्र गूढपदप्रदानेन गुप्तागमनस्य बोधकत्वात् सहसैव तस्या लाभादानन्दातिशयो भावी इति ध्वन्यते। तथा च गूढमनेन देव्यां इहैव कुत्रापि समाच्छन्ना-

हर्म्येऽस्मिन्नवतीर्य साध्वसवशान्मन्दायमाना बलात्
आनीयेत पदात्पदं चतुरया सख्या ममोपान्तिकम् ॥ १५ ॥

**चित्रलेखा**—हला उव्वसि ! इमं दाव से मणोरहं संपादेहि । [ सखि उर्वशि ! इमं तावदस्य मनोरथं सम्पादय । ]

**उर्वशी**—( ससाध्वसम् ) कीडिस्सं दाव । [ क्रीडिष्ये तावत् । ]

---

यामपि अविज्ञातैव सा भविष्यतीति सुरक्षितत्वमपि ज्ञायते । तथा च कामिनीनां परिहासशीलत्वात् नायकं सहसैव चकितं विधातुं प्रयत्नो भवतीति स्वभावस्यापि बोधो भवति । तथा च यदि समक्षतया संलापादिना मेलनमसंभवत् गूढेनापि चेतः समाश्वासयितुं शक्यम् । तथा च नूपुराणां शब्दमात्रमपि श्रुतिपथनन्तरे-दित्यनेन औत्सुक्यातिरेकः ध्वन्यते । कान्तं तु तावन्मात्रस्याप्यनुप्राप्यत्वात् विशेषतया चित्तप्रसादकं भवेदिति हेतुनोक्तम् । श्रुतौ पातयेदित्यनेन उर्वशीरूपो विषयो येन केनापि इन्द्रियेण गोचरो भवेत्तत्रापि मनसः सावधानता भविष्य-तीति व्यङ्ग्यम् । अनेन राज्ञो नितान्तं तत्परत्वं व्यज्यते । पश्चात्पदेनापि गूढपदेन व्यङ्ग्यं व्यज्यते । शनैःपदेन मृदुलबोधनपूर्वकं तज्जन्यः आल्हादातिशयो बोध्यते । साध्वसवशात् इत्यनेन तस्या अत्यन्तसौकुमार्यं सूच्यते । यतः सा परवशा सती गतिं मन्दां चकार न तु स्वमनोवृत्त्या, ततश्च मनस्युद्विग्नताया अभावो नास्तीति द्योत्यते । मन्दायमानेतिपदेन हंसगतित्वज्ञापनपुरःसरं नायिकाभूषणं प्रदर्शितम् । बलादिति अनेन कोऽपि लज्जातिशयो गम्यते । पदा-त्पदं तमेवार्थं पोषयति । चतुरया इत्यनेन चित्रलेखायाः कार्याकार्यज्ञत्वं प्रदर्श्य सद्दूतीत्वं प्रकाश्यते । ममोपान्तिकमित्यनेनेन अतीव सान्निध्यं लिप्सुः सः स्वबल-हीनत्वं व्यञ्जयन् स्मरस्य परां कोटिमधिरूढत्वं व्यनक्ति ।

अत्र करोत्पलावृते लोचने इत्यत्र करस्य उत्पलत्वकल्पनया पुनश्चावरणसा-मर्थ्याभावाच्चोत्पले, उत्पलस्य पुनः करत्वकल्पनया दृक्कमलेन पश्यतीतिवत् परिणामालङ्कारः । यदुक्तं "विषयात्मतयाऽऽरोप्ये प्रकृतार्थोपयोगिनि । परिणामो भवेत्" । अत्र च एकस्यैव वस्तुनः उर्वशीसमागमसौख्यस्य लाभात् वस्तुत्रय-प्रदानात् समुच्चयश्च ।

अत्र पूर्वार्धे कर्तरिप्रयोगस्य सद्भावात् उत्तरार्धे च कर्मणिप्रयोगप्रदानेन न मनागपि भग्नप्रक्रमतादोषापत्तिः यतः औत्सुक्येन विस्मृतस्वत्वस्य नायकस्य मुखे भावात् न दोषस्तथा सख्या बलादानीयेत अत्र या काचनापि सहृदयगम्या कमनीयता समायाता तत्र रसिका एव प्रमाणम् ।

अत्र शार्दूलविक्रीडितम् वृत्तम् ॥ १५ ॥

**चित्रलेखा**—सखि उर्वशि ! इमं पूर्वश्लोकानुवर्णितं अस्य मनोरथं सम्पा-दय । तत्समीपं गत्वा तं सम्भावयेत्यर्थः ।

**उर्वशी**—( ससाध्वसम्–सभयम् । ) क्रीडिष्ये तावत्—तस्य प्रत्यक्षा अभूत्वैव तिरोहितैव लोचनावृतिकरणेन तस्योपहासं करिष्यामि ।

( इति पृष्ठेनागत्य राज्ञो लोचने संवृणोति । )

( चित्रलेखा विदूषकं संज्ञां लम्भयति । )

**राजा**—( स्पर्शं रूपयित्वा ) सखे ! न खलु नारायणोरुसम्भवा वरोरूः ।

**विदूषकः**—कथं भवं अवगच्छदि ? [ कथं भवानवगच्छति ? ]

**राजा**—किमत्र ज्ञेयम्—

**राजा**—

अन्यत्कथमिव पुलकैः कलितं मम गात्रकं करस्पर्शात् ।
नोच्छ्वसिति तपनकिरणैश्चन्द्रस्येवांशुभिः कुमुदम् ॥ १६ ॥

---

अत्र ललितं नाम नायिकालङ्कारो विद्यते । "सुकुमारतयाङ्गानां विन्यासो ललितं भवेत् ।"

( इति विचार्य पृष्ठत आगत्य राज्ञो लोचने संवृणोति निमीलयति । )

**चित्रलेखा**—स विदूषकं तूर्णीं स्थातुं संज्ञां इङ्गितेन वस्तु लम्भयति प्रापयति ।

**राजा**—( स्पर्शं रूपयित्वा—उर्वशीहस्तस्पर्शजन्यसौख्यमनुभाव्य ) सखे ! नेयं किं नारायणस्य ऊरुः सम्भवो यस्याः सा नारायणोरुदेशसमुत्पन्ना वरोरूः अपि तु सैव नान्या तादृशसुखस्पर्शवती भवितुमर्हतीति भावः ।

**विदूषकः**—कथं भवान् अवगच्छति जानाति ।

**राजा**—किमत्र ज्ञेयम्-स्पष्टमेवैतत् ।

**राजा—अन्यदिति**—अन्यत् यदीदमन्यथा चेत् यदि नास्ति सा वरोरूः तदा मम गात्रकं शरीरं करस्य स्पर्शात् कथमिव केन प्रकारेण पुलकैः कलितं जातम् । सा यदि न स्यात् कथं नाम मे शरीरे रोमहर्षः सम्पन्नः । अथवा—यदि सा न स्यात् कथं किमुद्दिश्य मम गात्रकं करस्पर्शमात्रेणैव पुलकैः कलितं युक्तं सत् अन्यदिव जातम् अनिर्वाच्यावस्थां प्राप्तम् । तमेवार्थं दृष्टान्तेन विशिनष्टि-चन्द्रस्य अंशुभिः किरणैरिव तपनकिरणैः सूर्यस्य उष्णैः रश्मिभिः कुमुदं नोच्छ्वसिति विकासं नाप्नोति । यथा शीतलैः सुधांशोः मरीचिभिः कुमुदं विकसति न तथा रविगभस्तिभिर्भवतीति भावः ।

अनेन तदन्यस्त्रीकरस्पर्शस्तपनकिरणसदृशः अस्तीति व्यञ्जयन् नायिकायां बहुमानः प्रदर्शितः । यतः तस्याः करस्पर्शः चन्द्रस्येवांशुसदृशः । अत्र चदि आल्हादने तस्मात् चन्द्रस्य व्युत्पत्तेः नितान्ताल्हादकत्वं ध्वनयति । स्वस्य कुमुदत्वप्रख्यापनेन चन्द्रपारतन्त्र्यम् प्रकाशमानः नायिकायत्तजीवितत्वं ध्वन्यते । तथा च रोमहर्षादीनां वर्णनात् सात्विकानां भावानाम् प्रख्यापनं कृतम् ।

**उर्वशी**—अम्महे ! वज्जलेवघडिदं विअ मे हत्थजुअलं ण समत्थाम्हि अवणेदुम् । [ अम्महे ! वज्रलेपघटितमिव मे हस्तयुगलं न समर्थास्म्यपनेतुम् । ] ( इति मुकुलिताक्षी चक्षुषो हस्तावपनीय ससाध्वसा तिष्ठति । )

( राजा हस्ताभ्यां गृहीत्वा परिवर्तयति । )

**उर्वशी**—( कथञ्चिदुपसृत्य ) जेदु जेदु महाराओ । [ जयतु जयतु महाराजः । ]

---

अत्र पूर्वार्धस्य द्वितीयार्थग्रहणे अतिशयोक्तिरलङ्कारः । यतः प्रस्तुतस्य शरीरस्य अन्यत्वकल्पना कृता यदुक्तम्—"प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् । कार्यकारणयोश्चैव पौर्वापर्यविपर्ययः" तत्राप्यतिशयोक्तिः । अथवा अभेदे-भेदप्रख्यापनेनातिशयोक्तिः । तथा चात्रानुमानालङ्कारः । रोमहर्षस्य सत्त्वात् सैवेति अनुमीयते । तथा च उत्तरार्धे दृष्टान्तालङ्कारः । यतः पूर्वार्धोत्तरार्धप्रतिपाद्ययोः वस्तुनोः बिम्बप्रतिबिम्बभावः । यदाहुः "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।" स च चन्द्रस्येवांशुभिरिति प्रदानात् उपमागर्भितः, नञर्थेन च प्रतिपादनात् वैधर्म्येण-अत एवात्र वैधर्म्येणोपमागर्भितदृष्टान्तालङ्कारः । एतेषां च स्वतन्त्रतया चमत्काराधायकत्वेन संसृष्टिरलङ्कारः ।

ततश्चात्र संचिन्त्यमानस्यार्थस्य लाभेन क्रमो नाम सन्ध्यङ्गमुक्तं भवति । लक्षणं तु यथा दर्पणे "भावतत्त्वोपलब्धिस्तु क्रमः स्यात् ॥" अनुमा नाम सन्ध्यङ्गमप्यत्र क्रमेण संसृज्यते ।

अत्र सुकुमारता नाम गुणः यदुक्तं रसगङ्गाधरे "अपरुषवर्णघटितत्वं सुकुमारता" । अनुप्रासश्च ।

इयं चार्याजातिः ॥ १६ ॥

**उर्वशी**—अम्महे इति आश्चर्ये । वज्रस्य लेपस्तेन घटितं कल्पितमिव मे हस्तयुगलं नयनयोरपनेतुं समर्था नास्मि । नायकस्याङ्गस्पर्शात् अस्यै अपि कोऽपि महान् प्रमोदः समजनि । वज्रलेपघटितमेवेत्यस्य सम्भावनातः उत्प्रेक्षालङ्कृतिः ।

इति उक्त्वा मुकुलिताक्षी निमीलितनयना राज्ञः चक्षुषः हस्तौ अपनीय दूरीकृत्य ससाध्वसा तिष्ठति । अनेन व्रीडा नाम सहजो नायिकालङ्कारो दर्शितः । भीरुत्वं च प्रोक्तम् । यदुक्तं—'वैवर्ण्याधोमुखत्वादिकारणीभूतश्चित्तवृत्तिविशेषो व्रीडा' ।

( राजा पृष्ठे स्थितां उर्वशीं स्वहस्ताभ्यां परिवर्तयति पुरतः आनयति । )

**उर्वशी**—( कथञ्चिद् लज्जावशात् उपसृत्य, पुरः आगत्य ) जयतु जयतु महाराजः इति नायकस्योत्कर्षं भणति ।

**चित्रलेखा**—सुहं दे वअस्स! [सुखं ते वयस्य!]।

**राजा**—नन्वेतदुपपन्नम्।

**उर्वशी**—हला! देवीए दिण्णो महाराओ। अदो से प्पणयवदी विअ सरीरसंगदाम्हि। मा खु मं पुरोभाइणी त्ति समत्थेहि। [सखि! देव्या दत्तो महाराजः। अतोऽस्य प्रणयवतीव शरीरं सङ्गताऽस्मि। मा खलु मां पुरोभागिनीति समर्थय।]

**विदूषकः**—कधं इह ज्जेव तुम्हाणं अत्थमिदो सूरो! [कथमत्रैव युवयोरस्तमितः सूरः!]

**राजा**—(उर्वशीं विलोक्य)

---

**चित्रलेखा**—वयस्य! ते सुखं भवतु इति शेषः।

**राजा**—एतत् सुखं हि नाम उपपन्नम् प्राप्तम्। इदानीं तव प्रियसखीसमागमसौभाग्येन सुखमहमधुना अनुभवामि।

**उर्वशी**—महाराजस्तु तत्रभवत्या देव्या मह्यं दत्तः। या कामिनी महाराजं कामयते तां सा अनुमन्यते इति कथनात्। अतः अस्मात् कारणात् अस्य महाराजस्य प्रणयवती सखी प्रीतिपात्रमिव शरीरसङ्गताऽस्मि। यदहं महाराजस्य पार्श्ववर्तिन्यस्मि तदन्याय्यं न, यतः स मह्यं देव्या दत्त अहं च तस्याः अनुमता। तेन च मां खलु पुरोभागिनीं अनधिकारेण बलात् आक्रमणकर्त्रीं मावमंस्थाः। यत्स्थानं देव्याः अस्ति तन्मया बलात् गृहीतं स्वचापल्येन स्वातन्त्र्येण वेति मा समर्थय विचारयत अहं तस्याः प्रियसखी इदानीं संवृत्ता सपत्नीत्वात्। यत्तु "कुरु प्रियसखीवृत्तिं सपत्नीजने" इत्यैतादृशादर्शवत्यां नायिकायामौदार्यं नाम अलङ्कारः इह प्रदर्शितः यदुक्तं—"औदार्यं विनयः सदा"।

यद्यपि कोषे "दोषैकदृक् पुरोभागी" इतिहैमवचनात् पुरोभागिनीपदस्य दोषैकदर्शिनी इति अर्थोऽवगम्यते तथापि तत्तु अत्र न सङ्गच्छते। अतः पुरोभागिनीपदेन बलाद् अनधिकृतस्य वस्तुनः स्वातन्त्र्येण स्वेच्छानुसारं ग्रहणम् इति अर्थः क्रियते, यतः स्वयमेवं महाकविः शाकुन्तले पञ्चमाङ्के तदर्थं भङ्ग्या स्फुटं कृतवान् शार्ङ्गरवमुखेन—"आः पुरोभागिनि! किमिदं स्वातन्त्र्यमवलम्बसे" इति। यत्रैव च तत्रभवन्तः टीकाकृतः जीवानन्दमहानुभावाः पुरोभागिनीति पदस्य अविमृश्यकारिणीति अर्थं प्रकाशयन्ते।

**विदूषकः**—माणवकस्तु कस्मात्कालात् ससखी इयमत्रास्ते इत्यजानन् चकितः सन् पृच्छति किम् युवयोरुर्वशीचित्रलेखयोः सूरः सूर्य अत्रैव अस्तं इतः गतः। किम् युवाम् सन्ध्यासमयादिहैव स्थः?

**राजा**—(उर्वशीं पश्यन्)

देव्या दत्त इति यदि व्यापारं व्रजसि मे शरीरेऽस्मिन् ।
प्रथमं कस्यानुमते चोरितमयि मे त्वया हृदयम् ॥ १७ ॥

**चित्रलेखा**—वअस्स ! णिरुत्तरा एसा । मम संपदं विण्णविअं सुणीअदु । [ वयस्य ! निरुत्तरा एषा । मम साम्प्रतं विज्ञापितं श्रूयताम् । ]

**राजा**—अवहितोऽस्मि ।

**चित्रलेखा**—वसन्ताणंतरं उण्हसमए भअवं सुज्जो मए उवअरिदव्वो । ता जधा इअं मे पिअसही सग्गस्स ण उक्कंठेदि तहा वअस्सेण कादव्वम् । [ वसन्तानन्तरमुष्णसमये भगवान् सूर्यो मया उपचरितव्यः । तद्यथा इयं मे प्रियसखी स्वर्गस्य

---

**देव्या इति**—अयि प्रिये ! देव्या दत्तः अस्मीति ज्ञात्वा यदि त्वं अस्मिन् मदीये शरीरे व्यापारं चुम्बनालिङ्गनादिकं व्रजसि करोषि चेत् प्रथमं परस्परावेक्षणसमय एव कस्यानुमते कस्य अनुमत्या त्वयेदं मे हृदयं चोरितम् स्ववशतां नीतम् । यदि त्वमित्थं वदसि यदिदं ते आलिङ्गनाद्यारम्भोऽनुमतः क्रियेत तदा वद केनानुमता त्वं मे हृदयं स्वायत्तं कृतवती ? अनेन राज्ञः भावोऽभिव्यज्यते ।

तथा च राज्ञा देव्या दत्त इति उर्वशी कृतहासस्य प्रत्यभियोगः ( Retort ) कृतः । राज्ञश्च वाक्पाटवं सूच्यते ।

अत्र देवीप्रसङ्गेन अन्तरायितस्य बीजस्य पुनरनुसन्धानात् आक्षेपाख्यं सन्ध्यङ्गम् इति काटयवेमः । व्यापारं व्रजसीत्यनेन हावो नाम नायिकालङ्कारः स्फुटः । यदुक्तं "भ्रूलतादिविकारस्तु सम्भोगेच्छाप्रकाशकः । भाव एवाल्पसंत्रस्य विकारो हाव उच्यते ।" इयं चार्याजातिः ।

**चित्रलेखा**—वयस्य ! निरुत्तरा एव । प्रत्युत्तरं दातुमसमर्था इत्यर्थः ।

अत्र पारस्परिकप्रीतिः सङ्गमोत्कण्ठा च बलवतीति वस्तु व्यज्यते तथा चात्र विकृतं नाम नायिकाऽलङ्कारः प्रोक्तः, यदुक्तं दर्पणे—"वक्तव्यकालेऽप्यवचो व्रीडया विकृतं मतम्" ।

साम्प्रतं मम विज्ञापितं वचनं श्रूयताम् ।

**राजा**—अवहितोऽस्मि । भवद्वचनं श्रोतुं दत्तचित्तोऽस्मि ।

**चित्रलेखा**—वसन्तानन्तरं समाप्ते तु वसन्तसमये उष्णसमये च प्राप्ते भगवान् सूर्यः मया उपचरितव्यः सेव्यः । अप्सरसः खलु भगवन्तं अंशुमालिनं नृत्यादिना पर्यायेण सेवन्त इति अत्र पौराणिकी कथा अनुसन्धेया । सविस्तरमुपरिष्टाद्द्रक्ष्यते । अतः भवद्भिरनुमता अहं गन्तुमना अस्मि ।

नोत्कण्ठते तथा वयस्येन कर्तव्यम्। ]

**विदूषकः**—भोदि! किं वा सग्गे सुमिरिदव्वम्। ण तत्थ खाईअदि ण पीअदि । केवलं अणिमिसेहिं अच्छीहिं मीणदा अवलम्बीअदि। [ भवति! किं वा स्वर्गे स्मर्तव्यम्। न तत्र खाद्यते न पीयते। केवलमनिमेषैरक्षिभिर्मीनतावलम्ब्यते। ]

**राजा**—वयस्य !

अनिर्देश्यसुखं स्वर्गं कथं विस्मारयिष्यते ।

---

अतः इयं स्वर्गस्य नोत्कण्ठते स्वर्गं गन्तुं यथा न कामयते तथा वयस्येन कर्तव्यम्। तया सह भवतेत्थं व्यवहर्तव्यं यथा स्वर्गस्य स्मरणं न कुर्यात्।

अनेन भाविविरहं व्यञ्जयता कविना आगामिनः अङ्कस्य अर्थोपक्षेपात् अङ्कावतारोऽयम् उपन्यस्तः । यल्लक्षणं तु यदाह भरतः—"बीजार्थयुक्तियुक्तो ज्ञेयो ह्यङ्कावतारोऽसौ" इति ।

स्वर्गस्य नोत्कण्ठते इत्यत्र "अधिगर्थदयेशां कर्मणि" (२।३।५२) इत्यनेन पाणिनीयेन सूत्रेण कर्मणि षष्ठी। स्वर्गं न स्मरेदित्यर्थः। एवमेव भवभूतिरपि उत्तरचरिते "उत्कण्ठते च युष्मत्सन्निकर्षस्य" इति ।

इयं हि चित्रलेखायाः प्रार्थना शाकुन्तले अनुसूयाया इवास्ति। अनुसूया—"तद्यथा इयं नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा करिष्यति"। ( Shak.—Act. III P. १३८ )

**विदूषकः**—भवति चित्रलेखे! किं वा स्वर्गे स्मर्तव्यम् । स्वर्गे को नामैतादृशः पदार्थो विद्यते यत्कृते स्वर्गस्तु स्मरणीयः स्यात्। न तत्र खाद्यते न वा पीयते। इदं तु प्रसिद्धम् एव यद्देवा न तु खादन्ति न वा पिबन्ति। यतः "देवा हि यज्ञेषु दत्तैर्हविर्भागैरेव तुष्यन्ति न किमप्यन्यददन्ति पिबन्ति वा"। तैः स्वर्गस्थैस्तु केवलं अनिमेषैः निर्निमेषैः अक्षिभिः लोचनैर्मीनता मीनसदृशत्वं अवलम्ब्यते स्वीक्रियते। यथा मत्स्याः निमेषहीननेत्राः भवन्ति तथैव स्वर्गिण इति प्रसिद्धिः। "सुरमत्स्यावनिमिषौ" इति अमरसिंहः।

किं वा स्वर्गे स्मर्तव्यमित्यनेन इदमपि ध्वन्यते यत् राज्ञः अत्र सत्त्वे तस्या अत्रैव सर्वस्वस्य सद्भावात् किं नु खलु तदतिरिक्तं भवेत् यत्तु स्वर्गे स्मर्तव्यम् स्यात् इति ।

**राजा**—वयस्य चित्रलेखे !

**अनिर्देश्यमिति**—अनिर्देश्यं अनिर्वाच्यं वाचामगोचरं वा सुखं विद्यते यस्मिन् तादृशः अलौकिकसुखसम्पत्तिकः स्वर्गः कथं विस्मारयिष्यते केनापि पुरुषेण तदधिकसौख्यप्रदानेन विस्मृतिविषयतां नेतुं शक्यते । न कदापीति भावः। किन्तु इदन्त्वहं कथयितुं प्रभवामि यत्—

अनन्यनारीसामान्यः दासस्त्वस्याः पुरूरवाः ॥ १८ ॥

**चित्रलेखा**—अणुग्गहीदम्हि । हला उव्वसि ! अकादरा भविअ विसज्जेहि मं । [ अनुगृहीतास्मि । सखि उर्वशि ! अकातरा भूत्वा विसर्जय माम् । ]

**उर्वशी**—( चित्रलेखां परिष्वज्य सकरुणम् ) सहि ! मा खु मं विसुमरेसि । [ सखि ! मा खलु मां विस्मरिष्यसि । ]

**चित्रलेखा**—( सस्मितम् ) वअस्सेण संगदा तुमं मए एव्वं जाचिदव्वा । [ वयस्येन संगता त्वं मयैव याचितव्या । ]

( इति राजानं प्रणम्य निष्क्रान्ता । )

---

अनन्यनारीसामान्यः अनन्यनारीसाधारणः पुरूरवाः अस्या दासः । अन्या नारी अन्यनारी तस्यै सामान्यः लब्धुं योग्यः अन्यनारीसामान्यः तन्न भवतीति अनन्यनारीसामान्यः केवलं तस्यामेव प्रणयी नान्यां स्त्रियं कामयमान इत्यर्थः ।

दासः—दासृ दाने ( भ्वा. उ. से. ) यः यत्सेवायै आत्मानं ददातीति दासः घञ् । ( ३।३।१८ ) अनेन स्वनिरपेक्षतापूर्वकं तदाल्हादने आत्मनः सुतरां समर्पणं ध्वनयति ।

पुरूरवाः इति अन्यपुरुषप्रदानेन पुरूरवसः माहात्म्यं प्रख्यापयता कविना तस्य च तस्या दासत्वाङ्गीकारेण सुखसम्पत्तिरनुरूपैवेति गमयति । अत्र च पुरूरवा इति प्रदानेन ईषदवलेपो व्यज्यते । किन्तु तस्या दासत्वस्वीकरणेन दक्षिणत्वं च व्यक्तं भवति ।

अहमस्या दासोऽस्मीति कथनापेक्षया पुरूरवाः इत्यन्यपुरुषद्वारा तदेवार्थस्य ज्ञापनात् अप्रस्तुतप्रशंसालङ्कारः । अनुष्टुब् वृत्तम् ।

**चित्रलेखा**—अनुगृहीतास्मि-इदमेवाहं कामये-तस्यार्थस्य च लाभेन अनुकम्पितास्मि भृशं भवता इत्यर्थः । हला उर्वशी ! अकातरा भूत्वा मां विसर्जय गन्तुमनुज्ञापय । अकातरा इत्यत्र सत्पुरुषहस्तक्षिप्तत्वात् । यदाह कण्वः शाकुन्तले—"सुशिष्यपरिदत्तेव विद्या अशोचनीयासि संवृत्ता ( Act. IV P. १८७ ) अकातरा अधीरा इति ।

**उर्वशी**—( चित्रलेखां परिष्वज्य आलिङ्ग्य सकरुणम् सखी विरहकातरा सती ) मा खलु मां विस्मरिष्यसि । यद्यप्यहं इहास्मि तथापि मां विस्मृतिपथं मावतारयेति प्रार्थयते । अनेन अस्याः चित्रलेखायां विशेषा प्रीतिः सूच्यते ।

**चित्रलेखा**—( सस्मितं सोपहासम् ) वयस्येन महाराजेन सङ्गता सम्मिलिता त्वं मया एवं याचितव्या प्रार्थयितव्या । महाराजप्रीतेरलमधुना मां मा विस्मरिष्यसीति प्रार्थनीयाऽसि संवृत्ता ।

( इति अम्बा राजानं प्रणम्य निष्क्रान्ता प्रस्थिता । )

**विदूषकः**—दिट्ठिआ मणोरहसिद्धीए वड्ढदि भवम्। [ दिष्ट्या मनोरथसिद्ध्या वर्धते भवान्। ]

**राजा**—इमां तावन्मनोरथसिद्धिं पश्य।

सामन्तमौलिमणिरञ्जितपादपीठ-
मेकातपत्रमवनेर्न तथा प्रभुत्वम्।
अस्याः सखे! चरणयोरहमद्य कान्तं
आज्ञाकरत्वमधिगम्य यथा कृतार्थः॥ १९॥

**उर्वशी**—णत्थि मे वाआविहवो अदो अवरं मंतिदुम्। [ नास्ति मे वाग्विभवो अतः अपरं मन्त्रयितुम्। ]

---

**विदूषकः**—( राजानं प्रति ) दिष्ट्या सुभाग्यमिदं यत् मनोरथस्य सिद्ध्या भवान् वर्धते। स्वाभीप्सितवस्तुलाभेन भवतः सौभाग्यमिदं समुपपन्नमिति भावः।

**राजा**—इमां तावत् मम मनोरथसिद्धिं पश्य कीदृशी मनोरथसिद्धिरिति उच्यते **सामन्तेति**—

हे सखे! सामन्तानां वशंवदानां प्रत्यन्तवर्तिभूपतीनां मौलयः मुकुटाः तेषु जटिताः मणयस्तै रञ्जितं शोभितं पादपीठं यस्मिन् तत्, तथा च एकातपत्रं निःसपत्नं अवनेः पृथिव्या प्रभुत्वं राज्यं अधिगम्य प्राप्य, तथा कृतार्थः कृतकृत्यः सुखी वा नाहं जातो, यथा अस्याः सुन्दरीललामभूतायाः उर्वश्याः चरणयोः कान्तं मनोरञ्जकं आज्ञाकरत्वं दास्यं अधिगम्य लब्ध्वा अहं कृतार्थः संवृत्तः।

यथा अस्याः दास्येन सौख्यमहमद्य लब्धवान् तथाऽहं निस्सपत्नस्यापि राज्यस्य प्रभुत्वेन नाप्तवानस्मि। राज्यादपि अस्या लाभः अधिकं सुखकरः इति व्यज्यते। अनेन तद्विषयिका विलक्षणा रतिर्बोध्यते।

अत्र च राज्यसौख्यात् उर्वशीलाभजनितसुखस्याधिक्यवर्णनात् व्यतिरेकालङ्कारः। यदाह—"उपमानाद् यदन्यस्य व्यतिरेकः स एव सः" ( काव्यप्रकाशे )। अत्र राज्ञः वर्णनस्य प्रकृतत्वात् अस्या लाभस्य प्रभुत्वस्य चोभययोरपि प्रस्तुतत्वम् तयोश्च अधिगम्येति एकक्रियाभिसम्बन्धात् तुल्ययोगितालङ्कारः। यदुक्तं "वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता"। अत्र चार्थव्यक्तिर्नाम गुणः "झगिति प्रतीयमानार्थान्वयकत्वमर्थव्यक्तिः"। उत्तरार्धे तु माधुर्यमपि। अत्र उदाहरणं नाम गर्भसन्ध्यङ्गम्—"उदाहरणमुत्कर्षयुक्तं वचनमुच्यते" इति विश्वनाथः।

अत्र वसन्ततिलका वृत्तम्। उक्ता वसन्ततिलका तभजा जगौ गः॥ १९॥

**उर्वशी**—राज्ञो वचनमाधुर्येण विजिता वक्ति। वाचां विभवः सामर्थ्यं वाग्विभवः। अतः परं सविनयं माधुर्येण च मन्त्रयितुं वक्तुं मे वाग्विभवः वाक्शक्तिर्नास्ति। यन्महाराजेनोक्तं तत् सुमधुरभाषणस्य परां काष्ठामधिरूढमेव।

**राजा**—( उर्वशीं हस्तेनावलम्ब्य ) अहो ! अविरुद्धसंवर्धनमेतदिदानीमीप्सितलम्भानाम् । यतः—

पादास्त एव शशिनः सुखयन्ति गात्रं
बाणास्त एव मदनस्य मनोनुकूलाः ।
संरम्भरूक्षमिव सुन्दरि ! यद्यदासी-
त्त्वत्सङ्गमेन मम तत्तदिवानुनीतम् ॥ २० ॥

**उर्वशी**—अवराद्धाम्हि चिरआरिआ महाराअस्स । [ अपराद्धाऽस्मि चिरकारि(लि)का महाराजस्य । ]

**राजा**—सुन्दरि ! मा मैवम् ।

---

**राजा**—( उर्वशीं हस्तेन अवलम्ब्य धृत्वा ) इदानीं कालोऽयं ईप्सितलम्भानां वाञ्छितार्थलाभस्य अविरुद्धतया आनुकूल्येन संवर्धनमेव । कालो ह्ययं त्वत्समागमसौभाग्येन ममानुकूल इव संवृत्तः । यतः—

**पादा इति**—अयि सुन्दरि ! ते एव शशिनश्चन्द्रमसः पादाः अंशवः ये त्वत्समागमपूर्वं मां सुतरामबाधयन् इदानीं मे गात्रं सुखयन्ति आनन्दयन्ति । ये चन्द्रमरीचयः त्वत्प्राप्तिपूर्वं दुःखकारिण आसन् त एव त्वदधिगमेन सुखदाः सम्पन्नाः । मदनस्य कामस्य बाणाः ये पुरा मामत्रासयन् त एवेदानीं मनसः अनुकूलाः प्रियकारिणोऽभवन् । यद्यद् वस्तु संरम्भेण त्वद्विरहजन्यचित्तवैक्लव्येन रूक्षमिवासीत् तत्सर्वं इदानीं त्वत्सङ्गमेन लाभेन मम अनुनीतम् अनुकूलमिदानीं सम्पन्नम् ॥ "कुसुमशयनं न प्रत्यग्रं" इत्यत्र नायिकाविरहजन्यखेदेनोपहितस्य हृदयस्य सद्भावात्सर्वं प्रतीपमिवासीत्, तच्चैव सर्वं इह प्रेयसीसमागममहिम्ना हृदयस्योल्लसितत्वादनुकूलमिव जातमिति वर्णनात् महाकविना नायकस्य स्वमनोभावमनुरुध्यैव निसर्गस्यापि प्रतीपाप्रतीपत्वकल्पनात् सविशेषतया सहृदयत्वं गमितमिति विपश्चिद्भिरुद्भावनीयम् ।

अत्र विरहिणः पुरुषस्य याथार्थ्येनावस्थावर्णनात् स्वभावोक्तिरलङ्कारः । यद्यत्तदानीं दुःखं तदेवेदानीं सुखमिति बोधनाय पूर्वार्धे नैकवस्तुप्रदानात् समुच्चयालङ्कारश्च । अत्र माधुर्यम् ।

इदं च वसन्ततिलका वृत्तम् ॥ २० ॥

**उर्वशी**—( स्वार्जवं प्रकाशयति ) चिरकारिका वेलातिलङ्घनकारिणी बहुकालयापिनी वा अस्मि अहं महाराजस्य अपराद्धा विरुद्धकारिणीत्यर्थः । चिरकालेनायान्त्या मया विरहदुःखजननीत्वात् महाराजस्यापराधो विहितः इत्यर्थः ।

**राजा**—अयि सुन्दरि हृदयद्राविरूपे ! मा मा एवं विचारय ।

यदेवोपनतं दुःखात्सुखं तद्रसवत्तरम् ।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥ २१ ॥

**विदूषकः**—भोदि ! सेविदा पदोसरमणीआ चन्दवादा । ता समओ खु दे गेहप्पवेसस्स । [ भवति ! सेविताः प्रदोषरमणीयाश्चन्द्रपादाः । तत्समयः खलु ते गृहप्रवेशस्य । ]

**राजा**—तेन हि सख्या मार्गमादेशय ।

**विदूषकः**—इदो इदो भोदी । [ इत इतो भवती । ]

( इति परिक्रामन्ति । )

**राजा**—सुन्दरि ! इयमिदानीं मे प्रार्थना ।

**उर्वशी**—कीरिसी सा ? [ कीदृशी सा ? ]

---

**यदेवेति**—यत्सुखं दुःखात् उपनतं उपस्थितं तत् रसवत्तरम् अधिकानन्ददायकं भवति । कठिनदुःखभोगानन्तरं प्राप्यमानं सुखं सविशेषसुखं भवति । यथा तप्तस्य सूर्यातपेन भृशं आयासितस्य पुरुषस्य तरोः च्छाया विशेषतः अधिकतरं निर्वाणाय सुखाय कल्पते । दुःखोत्तरं सुखमधिकं स्वादुतरं सम्पद्यते यथा वृक्षच्छाया तप्तस्य कृते अतिसुखाय भवतीत्येवम् ।

अत्र पूर्वार्धस्योत्तरार्धस्य च बिम्बप्रतिबिम्बभावः यथा दुःखी पूर्वार्धे, परार्द्धे च तप्तः, प्रथमे सुखं, परे तरुच्छाया इत्युपमानोपमेययोर्बिम्बप्रतिबिम्बभावत्वात् दृष्टान्तालङ्कारः । निर्वाणाय विशेषतः, रसवत्तरम् इत्यनयोरेकार्थप्रतिपादकत्वात् वस्तुप्रतिवस्तुभावः एतदंशे च प्रतिवस्तूपमा । स्वभावोक्तिरलङ्कारश्च । अनेनोर्वशीलाभे आनन्दातिशयः इति गुणीभूतमत्र व्यङ्ग्यम् ।

अनुष्टुब् वृत्तम् ॥ २१ ॥

**विदूषकः**—भवति ! प्रदोषसमये सन्ध्यासमये रमणीयाः मनोहराः भगवतश्चन्द्रमसः पादाः मरीचयः अस्माभिः सेविताः, तदिदानीं ते गेहप्रवेशस्य समयः सम्प्राप्तः । अधुना गृहं प्रति गन्तव्यम्, अतिवर्तते च वेलेति भावः ।

इति परिक्रामन्ति गन्तुमुद्यताः भवन्ति ।

**राजा**—तेन हि गमनवेलायाः समागतत्वात्, तव सखीं मार्गमादेशय प्रदर्शय ।

**विदूषकः**—इत इतः भवती आगच्छतु इति शेषः ।

**राजा**—सुन्दरि प्रिये ! इदानीं अभीप्सितायास्ते लाभे मे इयं प्रार्थना अभ्यर्थना ।

**उर्वशी**—कीदृशी सा इति आज्ञाप्यताम् ।

**राजा—**

अनधिगतमनोरथस्य पूर्वं
शतगुणितेव गता मम त्रियामा ।
यदि तु तव समागमे तथैव
प्रसरति सुभ्रु ततः कृती भवेयम् ॥ २२ ॥

( इति निष्क्रान्ताः सर्वे । )

## तृतीयोऽङ्कः ।

---

**राजा—अनधिगतेति**—अयि सुभ्रु शोभने भ्रुवौ यस्याः सा तत्सम्बुद्धौ; अनधिगतोऽलब्धो मनोरथः त्वदभिलाषाभिलाषो यस्य सः तस्य मम त्रियामा रात्रिः शतगुणितेव गता । एका रात्रिः दुःखितेन मया शतरात्रिसमा यापिता । सैव रात्रिः यदि तवाधुना समागमे तथैव शतरात्रिपर्यन्तं प्रसरति विस्तृता भवेत्तदा अहं कृती कृतार्थः भवेयं स्याम् । या रात्रिः पूर्वं अनेकरात्रिविस्तृता मयि प्रतिभाति स्म सैवेदानीं सुखसमयेऽपि तादृशी एव विस्तृता स्यात्तदा कृती सुखी च भवेयम् । अत्र सुभ्रुपदप्रदानेन भ्रुकुटौ कामचापलकल्पनायाः सद्भावात् त्वद्विरहे समधिकत्रासलापत्तिप्रदर्शनम् तेन च शतरात्रिसमा एका रात्रिरिति बोधने सौकर्यमेव । अत्र प्रार्थनयानया राज्ञो मनसि उत्कण्ठादर्शनात् सूचनोत्तराङ्ककथोपयोगित्वाच्च बिन्दुरित्यवगन्तव्यम्—यदुक्तं "अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्" । अत्र प्रार्थना नाम गर्भसन्ध्यङ्गमुक्तं भवति—यदुच्यते—"रतिहर्षोत्सवानां तु प्रार्थनं प्रार्थना भवेदिति" ।

अत्र पुष्पिताग्रा वृत्तम् "पुष्पिताग्रा नौ र्यौ नजौ ज्रौग्" यस्य प्रथमे पादे नकारौ रेफयकारौ, द्वितीये च नकारजकारौ जकाररेफौ गकारश्च तद्वृत्तं पुष्पिताग्रा नाम । अर्धसममिदं वृत्तम् ॥ २२ ॥

( इति निष्क्रान्ताः सर्वे । )

॥ इति तृतीयोऽङ्कः ॥

इति श्रीमत्प्रमोदमोदमानमानसरसाविभक्तभगवल्लीलाललितकीर्तनस्थानस्थानन्दसक्तभक्तगोष्ठीगरिष्ठाणां रामानुजार्यकैङ्कर्यधुरीणानां प्रखरकिरणकरप्रतिभतेजःप्रकरप्रभाकराणां कविपण्डितेन्द्रमण्डलालङ्कारहीराणां अजस्रप्रणामारुणितवन्दारुराजन्यवृन्दमुकुटमौक्तिकपूज्यपदद्वन्द्वारविन्दानां रसिकतारसनिधीनां तोताद्रिविज्ञानविभवपीठाधीशानामाचार्यवर्याणां न्यायवेदवेदान्तमीमांसाद्यखिलनिगमागममन्थानशेमुषीकाणां विज्ञानविभूषणपदधारिणां स्वामिनां इन्दूरपुराभरणानां श्रीकृष्णाचार्याणां तनूभवेन सहृदयताजलनिधिकौस्तुभेन एम्. ए. काव्यपुराणतीर्थसाहित्यविशारदाद्यनेकोपाधिसमुल्लसितेन सुरेन्द्रनाथशास्त्रिणा विरचितायां विक्रमोर्वशीसंजीविकायां निसर्गोज्ज्वलायां कल्पलतासमाख्यायां व्याख्यायां तृतीयाङ्कविकासः ॥

---

# चतुर्थोऽङ्कः ।

( नेपथ्ये सहजन्याचित्रलेखयोः प्रावेशकी आक्षिप्तिका )

पिअसहीविओअविमणा सहिसहिआ व्वाउला समुल्लवइ ।
सूरकरफंसविअसिअतामरसे सरवरुच्छंगे ॥ १ ॥

[ प्रियसखीवियोगविमनाः सखीसहिता व्याकुला समुल्लपति ।
सूर्यकरस्पर्शविकसिततामरसे सरोवरोत्सङ्गे ॥ १ ॥ ]

---

## ॥ चतुर्थोऽङ्कः ॥

अथ तत्रभवान् कविवरेण्यः नायकनायिकयोः प्रेमाङ्कुरम् वर्धयितुमीहमानः सङ्गीतमाधुर्यमधुरं चतुर्थमङ्कमादाय नायिकायाः सख्योः सहजन्याचित्रलेखयोः प्रवेशपिशुनां आक्षिप्तिकानामधेयां गीतिं समुपन्यस्यति ।

( नेपथ्ये सहजन्याचित्रलेखयोरुर्वशीसख्योः प्रावेशिकी
प्रवेशं सूचयन्ती आक्षिप्तिका तदाख्या गीतिः । )

प्रियायाः सखी तस्याः वियोगो विश्लेषः तेन विमना खिन्ना अन्यया च सख्या सहिता व्याकुला विह्वला सती काचन सखी सूर्यस्य कराः मरीचयस्तेषां स्पर्शेन विकसितानि प्रफुल्लानि तामरसानि पद्मानि यस्मिन् तादृशे सरोवरस्योत्सङ्गे तटे समुल्लपति विलापं कुरुते इत्यर्थः ।

प्रियसखीविरहदूनचेताः सहजन्यासमेता चित्रलेखा विभाकरकिरणजालैः विकसितकमले सरस्तीरे विलपतीति भावः । अत्र सविशेषणसरोवरोत्सङ्गे इति ग्रहणेन मित्रकिरणसम्पर्कसञ्जातप्रफुल्लताशोभितपद्मसदृशं मत्सख्याः प्रियसंश्लेष-समुद्भावितं सुखं कदा नु संपत्स्यते इति एवं विलापहेतुर्ध्वन्यते । पुनश्च सरसः ग्रहणेन राज्ञः गभीरत्वं व्यज्यते, तत्रापि च वरपदप्रदानेनोत्कर्षता व्यक्तैव । उत्सङ्गपदस्य द्व्यर्थित्वात् राज्ञः अङ्के इत्यप्यर्थो बुध्यते । सूर्यकरेत्यत्र सूर्यपदग्रहणेन राज्ञः प्रतापित्वं व्यक्तम्, करपदे च श्लेषः तेन राज्ञः पाणिस्पर्शेन विकसितानि तामरसानि मुखनयनचरणादिकमलसदृशान्यङ्गानि यस्मिंस्तादृशे सरो-वरोत्सङ्गे प्रियाङ्के कदा नु मत्सखी सुखभाजनं भवित्रीति खेदहेतुः । अत्र तामरसपदेन अरुणिमसौन्दर्यसाधर्म्यग्रहणपूर्वकं मुखादीनां अवयवानां अध्य-वसायः । पुनश्च सरःपदेन गाम्भीर्यादिसादृश्यं मत्वा उदात्तस्य राज्ञः अध्य-वसायः । तथा च उर्वशी प्रियोत्सङ्गे पाणिस्पर्शलालिता प्रियसख्याः चित्रलेखायाः विरहविदूना अपि कदा नु सौख्यं लप्स्यते इति खेदहेतुं प्रदर्शयन्ती चित्रलेखा तस्याः प्रियसखीविरहदुःखं विसारयत्सुखमनुपमं काङ्क्षते इति सूच्यते । अनेन च चित्रलेखायाः सत्सखीत्वं गम्यते । विकासपदेन च सात्विकभावोत्पत्तिः व्यज्यते ।

( ततः प्रविशति सहजन्या चित्रलेखा च )

**चित्रलेखा**—( प्रवेशानन्तरं द्विपदिकया दिशोऽवलोक्य । )

सहअरिदुक्खालिद्धअं सरवरअम्मि सिणिद्धअम् ।
वाहोवग्गिअणअणअं तम्मई हंसीजुअलअम् ॥ २ ॥
[ सहचरीदुःखालीढं सरोवरे स्निग्धम् ।
बाष्पावल्गितनयनं ताम्यति हंसीयुगलम् ॥ २ ॥ ]

---

अत्र श्लेषः अतिशयोक्तिश्च तामरससरोवरपदयोः विविधाङ्गरागादेकस्य निगीर्णत्वात् ।

तामरसस्य कमले शक्तिः "पङ्केरुहं तामरसं सारसम्" इत्यमरवचनात् ।

इयमाक्षिप्तिकाख्या गीतिः । लक्षणं तु यथाह भरतमुनिः—

"चञ्चत्पुटादितालेन मार्गत्रयविभूषिता । आक्षिप्तिका स्वरपदग्रथिता कथिता बुधैः" ॥

अत्र च गाथा छन्दः "पढमं वारह मत्ता वीरा अट्ठारहेण संजुत्ता । जह पढमं तह तीअं दह पंचविहूसिआ गाहा" इति पिङ्गले, अत्र दशपञ्चेत्यर्थात् चतुर्थचरणे पञ्चदश मात्राः भवन्तीति भावः ॥ १ ॥

**चित्रलेखा**—( प्रवेशानन्तरं द्विपदिकया तदाख्यगीतिविशेषमुच्चरन्ती दिशोऽवलोक्य सर्वत्र दिगवलोकनं विधाय गाथां पठति )

द्विपदिकालक्षणं तु यथा सङ्गीतरत्नाकरे "शुद्धा खण्डा च मात्रा च संपूर्णेति चतुर्विधा । द्विपदीकरणाख्येन तालेन परिगीयते"; "पादे छः पञ्च भागोऽन्ते, न जौ षष्ठद्वितीयकौ । चतुर्भिरीदृशैः पादैः शुद्धा द्विपदिकोच्यते" इति । तात्पर्यं तु—चतुर्षु पादेषु एकस्मिन् छगणः षाण्मात्रिको मात्रागणः, पश्चात् पञ्च भाः भगणाः आदिगुरवो वर्णगणाः प्रयोक्तव्याः अन्ते च गो गुरुः भवेत् तदा द्विपदिकाख्या गीतिः ।

सहचर्याः विरहजन्यदुःखेन आलीढं पीडितं सरोवरे स्निग्धम् अनुरक्तं बाष्पैः अश्रुभिः दुःखसूचकैः अवल्गितानि उपप्लुतानि नयनानि यस्य तत् हंसीयुगलम् अश्रुसंकीर्णनेन ताम्यति ग्लानिं भजते इत्यर्थः ।

अत्र हंसीयुगलस्य दुःखवर्णनबोधकया वक्रोक्त्या सखीद्वयस्य दुःखं व्यक्तम् । अत्र हंसीयुगलेन सहजन्याचित्रलेखे बुध्येते । स्निग्धपदे च श्लेषः राज्ञि स्निग्धम्, सरोवरेऽपि स्निग्धम् । अत्र च विषादाख्यो भावो व्यज्यते । अलङ्कारौ च अन्योक्तिश्लेषौ । यदुक्तम् 'निश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् विषादः' । इति । आलम्बनविभावौ तु उर्वशीचित्रलेखे सूर्योपस्थानसहजन्यासमागमादि उद्दीपनम् । वाष्प–बाध् + क्त । बाधतेः क्तप्रत्ययान्तं बाष्पपदम् ।

इयमपि गाथा—यदुक्तं सङ्गीतरत्नाकरे—'आर्यैव प्राकृते गेया स्यात्पञ्चचरणाऽथवा । त्रिपदी षट्पदी गाथे लपरे सूरयो जगुः' ॥ ( ४–२३० ) ॥ २ ॥

सहजन्या—( सखेदम् ) सहि चित्तलेहे ! मिलाअमाणसतवत्तकसणा दे मुहच्छाआ हिअअस्स असत्थदं सूचेदि । ता कहेहि मे अणिव्विदिकारणं जेण दे समाणदुक्खा होमि । [ सखि चित्रलेखे ! म्लायमानशतपत्रकृष्णा ते मुखच्छाया हृदयस्यावस्थतां सूचयति । तत्कथय मेऽनिर्वृतिकारणं येन ते समानदुःखा भवामि । ]

चित्रलेखा—सहि ! अच्छरावावारपज्जाएण तत्तभअदो सुज्जस्स उवट्ठाणे वट्टंती पिअसहीए विणा वलिअं उक्कंठिदम्हि । [ सखि ! अप्सराव्यापारपर्यायेण तत्रभवतः सूर्यस्योपस्थाने वर्तमाना प्रियसख्या विना वलवदुत्कण्ठितास्मि । ]

सहजन्या—सहि ! जाणामि वो अण्णोण्णगदं प्पेमम् । तदो तदो । [ सखि ! जानामि युवयोः अन्योन्यगतं प्रेम । ततस्ततः । ]

चित्रलेखा—तदो इमेसुं दिवसेसुं को णवो वुत्तंतो वट्टदि त्ति प्पणिधाणट्ठिदाए मए अच्चाहिदं उवलद्धम् । [ ततः एतेषु दिवसेषु

---

सहजन्या—( सखेदम् ) सखि चित्रलेखे ! म्लायमानानि शतपत्राणि नलिनीदलानि तद्वत्कृष्णा श्यामा ते मुखच्छाया मुखसौन्दर्यं हृदयस्य अस्वस्थतां चिन्ताग्रस्ततां अशान्तिं वा सूचयति प्रकटयति । यतस्ते मुखे श्यामलं दरी दृश्यते तेन अनुमीयते यत्ते चेतसि स्वास्थ्यं नेति । तत्कथय मे मह्यम् ते अनिर्वृतेः अस्वस्थतायाः कारणं येन ते समानदुःखा भवामि । तव दुःखहेतुं निशम्य अहमपि सखीजनोचितं करिष्यामीति भावः । अनेन सहजन्यागतचित्रलेखाविषयिणी प्रीतिः सूच्यते ।

चित्रलेखा—सखि ! अप्सरसां व्यापारः कर्म तस्य पर्यायेण क्रमेण तत्रभवतः सूर्यस्य उपस्थाने सेवायां वर्तमाना अहं प्रियसख्या उर्वश्या विना वलवत् महदुत्कण्ठिताऽस्मि खिन्नाऽस्मि ।

"रागे त्वलब्धविषये वेदना महती तु या । संशोषिणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः ॥"

अत्र गात्राणां संशोषकत्वात् उत्कण्ठितत्वं युक्तमेव चित्रलेखायाः ।

सर्वाः अप्सरसः क्रमेण भगवन्तमंशुमालिनं सेवन्त इति पौराणिकी वार्तात्रानुसन्धेया ।

सहजन्या—सखि ! जानामि युवयोः उर्वशीचित्रलेखयोः अन्योन्यगतं पारस्परिकं प्रेम । ततस्ततः किं जातमिति शेषः ।

चित्रलेखा—ततः पश्चादेतेषु दिवसेषु को नवो वृत्तान्तः समाचारः वर्तते इति प्रणिधाने विचारे स्थितया वर्तमानया मया अत्याहितं महाभयम् उपलब्धम् ।

को नवो वृत्तान्तो वर्त्तते इति प्रणिधानस्थितया मयात्याहितमुपलब्धम् । ]

सहजन्या—सहि ! कीरिसं तं ? [ सखि ! कीदृशं तत् ? ]

चित्रलेखा—( सकरुणम् ) उव्वसी किल लच्छीसणाहं अमच्चेसु णिहिदकज्जधुरं राएसिं गेण्हिअ केलाससिहरुद्देसं गन्धमादणवणं विहरिदुं गदा । [ उर्वशी किल लक्ष्मीसनाथं अमात्येषु निहितकार्यधुरं राजर्षिं गृहीत्वा कैलासशिखरोद्देशं गन्धमादनवनं विहर्तुं गता । ]

सहजन्या—( सश्लाघम् ) सहि ! स संभोओ जो तारिसेसु प्पदेसेसु । तदो तदो ? [ सखि ! स सम्भोगो यस्तादृशेषु प्रदेशेषु । ततस्ततः ? ]

चित्रलेखा—तदो तहिं मंदाइणीतीरे सिकदापव्वतेहिं कीलमाणा उदअवती णाम विज्जाहरदारिआ तेण राएसिणा चिरं णिज्झाइदेत्ति कदुअ कुविदा मे पियसही उव्वसी । [ ततस्तत्र मन्दाकिनीतीरे सिकतापर्वतैः क्रीडमानोदयवती नाम विद्याधरदारिका तेन

---

स्वप्रियेण सह विद्यमाना उर्वशी कथं वर्त्तते, को वा नूतनः समाचार इति विचारयन्त्या मयानिष्टं श्रुतम् ।

**सहजन्या**—कीदृशं तत् अत्याहितमिति ।

**चित्रलेखा**—( सकरुणम्—चिन्ताग्रस्ता इव सविषादमाह ) उर्वशी किल लक्ष्म्या सनाथं समेतं अमात्येषु स्वकार्यपटुसचिवेषु निहिता स्थापिता कार्यधूः कार्यभारः येन तादृशं राजर्षिं पुरूरवसं गृहीत्वा कैलासशिखरे उद्देशः स्थितिः यस्य तादृक् तं गन्धमादनाख्यं वनं विहर्तुं गता । प्रियेण सहोपवनविहारविहृतमनस्कोर्वशी कैलासशिखरं गतेति भावः ।

गच्छतेर्योगे शिखरोद्देशमिति द्वितीया ।

**सहजन्या**—( सश्लाघम् साधु साधु इति प्रशंसनपूर्वकम् ) सखि ! यः तादृशेषु नितान्तसुखधामसु प्रदेशेषु स्थलेषु संभोगः स एव संभोगः खलु नान्यः ।

अनेन तत्स्थानमाहात्म्यं प्रकाशयता कविना राज्ञः विलासित्वं, उर्वश्याः संभोगभाग्यभाक्त्वं विवेचकत्वं चोभयोः विहरणक्षमत्वं तस्य प्रदेशस्य निर्जनत्वादिति ध्वनितम् । ततस्ततः अनन्तरं किमभूदिति प्रश्नः ।

**चित्रलेखा**—ततः तत्रोपवने मन्दाकिन्याः गङ्गायास्तीरे सिकतानिर्मितैः क्रीडनकभूतैः पर्वतैः क्रीडमाना उदयवती नाम्नी विद्याधरस्य कस्यचन दारिका कुमारिका तेन राजर्षिणा चिरं निध्याता इति कृत्वा अनेन कारणेन मे प्रियसखी उर्वशी तस्मै कुपिता क्रुद्धा ।

राजर्षिणा चिरं निध्यातेति कृत्वा कुपिता मे प्रियसखी उर्वशी । ]

**सहजन्या**—असहणा खु सा । दूरारूढो अ से प्पणओ । ता भविद्व्वदा एत्थ बलवदी । तदो तदो । [ असहना खलु सा, दूरारूढश्चास्याः प्रणयः । तद्भवितव्यतैवात्र बलवती । ततस्ततः । ]

**चित्रलेखा**—तदो भत्तुणो अणुणअं अप्पडिवज्जमाणा गुरुसावसंमूढहिअआ विसुमरिद्देवदाणिअमा अम्मकाजणपरिहरणिज्जं कुमारवणं पविट्टा । पवेसाणन्तरं अ काणणोवंतवत्तिलदाभावेण परिणदं से रूवम् । [ ततो भर्तुरनुयमप्रतिपद्यमाना गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा । प्रवेशानन्तरं च काननोपान्तवर्त्तिलताभावेन परिणतमस्या रूपम् । ]

**सहजन्या**—( सशोकम् ) सव्वधा णत्थि विहिणो अलंघणीअं णाम । जेण तारिसस्स अण्णारिसो एव्व पलिणामो संवुत्तो । तदो तदो । [ सर्वथा नास्ति विधेरलङ्घनीयं नाम । येन तादृशास्यान्या-

---

तत्र काचनोदयवती नाम्नी हिमकरकिरणावदातवर्णा दारिकाजनहीरका राज्ञा निर्निमेषैर्लोचनैः बहु विलोकिता यतः परनारीमानमसहमानया मे सख्या तस्मै कोपः कृतः ।

अनेन नायिकायाः मानवतीत्वं सासूयत्वं च प्रकाशितम् । राज्ञश्च शठत्वोपबृंहकोऽयं सन्दर्भः ।

**सहजन्या**—असहना अमर्षिणी खलु सा असूयावतीत्यर्थः । अस्या राजनि प्रणयः तु दूरारूढः परां काष्ठां प्राप्तः । अत एव भवितव्यता एव अत्र बलवती । ततस्ततः ।

**चित्रलेखा**—ततः भर्तुः पुरूरवसा कृतमनुनयमभ्यर्थनम् अप्रतिपद्यमाना अस्वीकुर्वती गुरोः भरतः शापेन संमूढं विमोहितं हृदयं यस्याः सा तेन च विस्मृतं देवतानां नियमं यया सा तादृशी मे प्रियसखी स्त्रीजनेन परिहरणीयं अगम्यं कुमारवनं प्रविष्टा ।

प्रियेण वारंवारं कृतायामपि प्रार्थनायाम् गुरोः गुरुतरशापेन स्वात्मानमपि अजानती प्रमदाभिः यत्र न गन्तव्यं तादृशं कुमाराख्यं वनं देवतानां नियमं विस्मरन्ती प्रविष्टेत्यर्थः । प्रवेशानन्तरं काननस्य उपान्ते समीपे वर्तमाना या लता तद्भावेन परिणतमस्या रूपम् । तत्र च सा देवतानियमोल्लङ्घनात् लतात्वं सपदि प्राप्ता ।

**सहजन्या**—( सशोकम् ) विधेः दैवस्य सर्वथा अलङ्घनीयं नास्ति । विधिः सर्वमेव लङ्घयितुं शक्तः । सर्वशक्तिमत् दैवम् इति भावः येन तादृशस्य प्रेम-

दृश एव परिणामः संवृत्तः । ततस्ततः । ]

**चित्रलेखा**—तदो सो वि तस्सिं एव्व काणणे पिअदमं अण्णेसअंतो उम्मत्तीभूदो इदो उव्वसी तदो उव्वसी त्ति कदुअ अहोरत्तं अदिवाहेदि । (नभोऽवलोक्य) इमिणा उण णिव्विदाणं पि उक्कंठाकारिणा मेहोदएण अप्पदीआरो भविस्सदि त्ति तक्केमि । [ ततः सोऽपि तस्मिन्नेव कानने प्रियतमामन्विष्यन्नुन्मत्तीभूत इत उर्वशी, तत उर्वशीति कृत्वा अहोरात्रमतिवाहयति । अनेन पुनर्निर्वृतानामपि उत्कण्ठाकारिणा मेघोदयेन अप्रतीकारो भविष्यतीति तर्कयामि । ] (अनन्तरे जम्भलिका ।)

सहअरीदुक्खालिद्धअं सरवरअम्मि सिणिद्धअम् ।
अविरलवाहजलोल्लअं तम्मइ हंसीजुअलम् ॥ ३ ॥

---

विशेषस्य अन्यादृश एष परिणामः फलं संवृत्तम् । तस्यानुपमप्रणयस्य एतादृशं विसंवादि फलं भविष्यतीति सत्यमेवाज्ञातपूर्वम् । अतः सत्यं विधिः सर्वत्राप्रतिहतगतिरेव । ततस्ततः—

**चित्रलेखा**—ततः सोऽपि राजा तस्मिन्नेव कानने कुमाराख्यवने प्रियतमां अन्विष्यन् उन्मत्तीभूत इव विगतप्रज्ञः सन् इत उर्वशी तत उर्वशीति कृत्वा कुर्वन् अहोरात्रं दिनान्यतिवाहयति यापयति ।

स्वीयप्रियतमां अन्विष्यन्नप्यलभमानः उन्मत्तावस्थां प्रपद्य तस्मिन्नेव स्थले सर्वत्रोर्वशीमेवालोकयन् जातसंभ्रमः इहास्ति मे प्रिया, तत्रास्ति वा सा इति संमुग्धः समयं यापयति ।

अनेन पुनः निर्वृतानां सुखिनां प्रियया सह वर्तमानानां अपि उत्कण्ठाकारिणा मेघोदयेन राजा अप्रतीकारो निरुपायो भविष्यतीति तर्कयामि ।

उन्मत्तः स राजादावेव, पुनश्च मेघोदयः । "मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः, कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे" इति अनेन मेघदर्शनानन्तरं कां कामावस्थां प्राप्स्यति स राजा इति तर्कयन्ती एतादृशां दशामवाप्ताऽस्मि । मेघादीनामुद्दीपनत्वात् विरहिणो राज्ञः किं भवितेति मोहः । सहृदयधौरेयो महाकवी रवीन्दुठकुरोऽप्येतदेवाह—"If thou showest me not thy face, if thou leavest me wholly aside, I know not how I am to pass these long, rainy days." (Git.-18).

अनन्तरे जम्भलिका तदाख्यगीतिविशेषः । यदाह भरतमुनिः "उद्ग्राहो द्विः सकृद्वैकखण्डो द्विः शकलोऽथवा । यत्र ध्रुवो द्विराभोगो ध्रुवे मुक्तिः स जम्भकः" तदेव जम्भलिका इति ।

[ सहचरीदुःखालीढं सरोवरे स्निग्धम् ।
अविरलबाष्पजलार्द्रं ताम्यति हंसीयुगलम् ॥ ३ ॥ ]

**सहजन्या**—सहि ! अत्थि कोवि समागमोवाओ ? [ सखि ! अस्ति कोऽपि समागमोपायः ? ]

**चित्रलेखा**—गोरीचरणराअसंभवं संगममणिं वज्जिअ कुदो से समागमोवाओ । [ गौरीचरणरागसम्भवं संगममणिं वर्जयित्वा कुतोऽस्ति समागमोपायः । ]

**सहजन्या**—ण तारिसा आकिदिविसेसा चिरं दुक्खभाइणो होन्ति । ता अवस्सं कोवि अणुग्गहणिमित्तभूओ समागमोवाओ भविस्सिदि त्ति तक्केमि । ( प्राचीं दिशं विलोक्य ) ता एहि उदआहिवस्स भअवदो सुज्जस्स उवट्ठाणं करेम्ह । [ न तादृशा आकृतिविशेषाश्चिरं दुःखभागिनो भवन्ति । तदवश्यं कोऽप्यनुग्रहनिमित्तभूतः समागमोपायो भविष्यतीति तर्कयामि । ( प्राचीं दिशं विलोक्य ) तदेहि उदयाधिपस्य भगवतः सूर्यस्योपस्थानं कुर्वः । ]

---

**सहअरीति**—तृतीयचरणपरिवर्तनमेव शेषं पूर्ववत् । अविरलं सन्ततं यद्वाष्पं तज्जलं तेन आर्द्रं इति सन्तताश्रुपयःपूरप्लुतं इति हंसीयुगलविशेषणम् । इयमपि गाथा ॥ ३ ॥

**सहजन्या**—सखि चित्रलेखे ! अस्ति कोऽपि समागमोपायः ? पुनरपि उर्वशीविक्रमयोः सम्मेलनं भवेदेतादृशो विद्यते कश्चनोपायो न वा ।

**चित्रलेखा**—गौर्याः पार्वत्याः चरणयोः रागेण सम्भवो यस्य सः तं सङ्गममणिं वर्जयित्वा अस्याः समागमोपायः कुतः अस्तीति शेषः ।

सङ्गमनीयाख्यमणिदर्शनान्तो गुरुशापः । तन्मणिदर्शनं विहाय नास्ति उपायान्तरमिति भावः ।

**सहजन्या**—तादृशा आकृतिविशेषाः अनुपमसुषुमाशालिनो जनाः चिरं दीर्घकालपर्यन्तं दुःखभाजो न भवन्ति क्षणिकास्तेषामापद इति भावः । तत् इति हेतोरवश्यं कोऽपि अनुग्रहार्थं निमित्तभूतः कारणभूतः समागमोपायः भविष्यतीति तर्कयामि । ( प्राचीं दिशमवलोक्य—सूर्योदयो जातो न वेति द्रष्टुमिति ) तदेहि उदयाधिपस्य उदयाचलस्य अधिपतेः सूर्यस्य उपस्थानं सेवां कुर्वः । अत्र अप्रस्तुतप्रशंसालङ्कारः ।

( अनन्तरे खण्डधारा )

चिन्तादुम्मिअमाणिसिआ सहअरीदंसणलालसिआ ।
विअसिअकमलमणोहरए विहरइ हंसी सरवरए ॥ ४ ॥
[ चिन्तादूनमानसा सहचरीदर्शनलालसा ।
विकसितकमलमनोहरे विहरति हंसी सरोवरे ॥ ४ ॥ ]

( इति निष्क्रान्ते )

**प्रवेशकः—**

( नेपथ्ये पुरूरवसः प्रावेशिक्याक्षिप्तिका )

गहणं गइन्दणाहो पिअविरहुम्मिआपअलिअविआरो ।
विसइ तरुकुसुमकिसलअभूसिअणिअदेहब्भारो ॥ ५ ॥
[ गहनं गजेन्द्रनाथः प्रियाविरहोन्मादप्रकटितविकारः ।
विशति तरुकुसुमकिसलयभूषितदेहप्राग्भारः ॥ ५ ॥ ]

---

अनन्तरे खण्डधारा तदाख्यागीतिः—

तल्लक्षणं तु—यद्गीतं गुणकर्या च रागेण क्रीडकेन च, तालेन सा खण्डधारा यष्टिकेन प्रकाशिता ॥ इति ।

**चिन्तेति**—हंसीमिषेण स्वावस्थां वर्णयति—

चिन्तया सखीगतचिन्तया दूनं खिन्नं मानसं यस्याः साः खिन्नमना सहचर्याः दर्शने लालसा कौतुकं यस्याः सा हंसी विकसितानि कमलानि तेभ्यो मनोहरे चित्ताकर्षके सरोवरे विहरति ।

अत्र कुतूहलम् "रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम् ।"

तथा च कुमाराह्वयवने विकसितान्यभवन् बहूनि कमलानि तेन च चित्ताकर्षकत्वं उद्दीपनत्वं वियोगिनः राज्ञः भृशतापकारित्वं प्रदर्शितम् । इयमपि गाथा ॥४॥

( इति निष्क्रान्ते सहजन्याचित्रलेखे )

**प्रवेशकः**—अर्थोपक्षेपकोऽयम्, तल्लक्षणं तु "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा" ।

अर्थोपक्षेपकोऽयं प्रथमाङ्के निषिद्धः । प्राकृतवादिभिः पात्रैः प्रयोज्यः । शेषं सर्वं विष्कम्भकसदृशमेव ।

( नेपथ्ये पुरूरवसो राज्ञः विक्रमस्य प्रावेशिकी प्रवेशं सूचयन्ती आक्षिप्तिका गीतिः )

लक्षणं तु यथापूर्वमेव ।

**गहनमिति**—अन्योक्त्या विरहिणो राज्ञः अवस्थां वर्णयति—प्रियसख्याः विरहो वियोगः तेन जन्यः य उन्मादो भ्रमः विस्मृतस्वत्वं वा तस्य प्रकटितः

( ततः प्रविशत्याकाशबद्धलक्ष्यः सोन्मादो राजा )

राजा—( सक्रोधम् । ) आः दुरात्मन् रक्षः ! तिष्ठ तिष्ठ । क्व मे प्रियतमामादाय गच्छसि । ( विलोक्य ) हन्त ! शैलशिखराद्गगनमुत्पत्य बाणैर्मामभिवर्षति । ( लोष्टं गृहीत्वा हन्तुं धावन् । अनन्तरे द्विपदिकया दिशोऽवलोक्य )

हिअआहिअपिअदुक्खओ सरवरए धुदपक्खओ ।
वाहोवग्गिअणअणओ तम्मइ हंसजुआणओ ॥ ६ ॥

---

स्पष्टतयानुभाव्यमानः विकारः यस्मिंस्तादृशः तथा च तरूणां कुसुमानि किसलयानि पत्राणि च तैः भूपितः निजदेहस्य प्राग्भारः आभोगः यस्य सः गजेन्द्राणां नाथः गहनं विपिनं विशति ।

तात्पर्यं तु गजेन्द्रपक्षे—प्रियाविरहोन्मत्तः तेन च उत्पाटितैः तरुकुसुमकिसलयैः भूषितनिजदेहभागः गजेन्द्रो विपिनं विशति ।

अन्योक्त्या राज्ञः पक्षे—उर्वशीविरहोन्मत्तत्वात् विरहोष्मणा भृशं तप्यमानः शीतलैः मृदुकुसुमकिसलयैः शिशिरोपचारैः नितान्तमुपचर्यमाणः गहनं उपवनं विशति ।

अत्र—गजेन्द्रपदप्रदानेन राज्ञः गजसदृशत्वं व्यज्यते महामहिमशालित्वं च प्रतीयते । अत्र च उन्मादाख्या अष्टमी स्मरदशा दर्शिता । द्वितीयविशेषणेन च तापस्योत्कटत्वं सूचितम् । गहनपदेन च गहनशोकगहनं विशतीति ध्वन्यते । गजेन्द्रान्योक्त्या च प्रियोर्वशीवियोगासितस्य पुरूरवसः अवस्थानिरूपणेन प्रेम्णः विलक्षणत्वं प्रकटितम् । इयं गाथा ॥ ५ ॥

( ततः प्रविशति आकाशे बद्धलक्ष्यः दत्तदृष्टिः सोन्मादो राजा । )

राजा—( सक्रोधम् )—इह भ्रान्तो राजा नवजलधरं राक्षसं मन्यमानः आः रक्षः ! इति सम्बोधयन् उर्वशीपरिहारिणमिव तं पूर्वस्मृतं केशिनमिव तर्जयति ।

आः इति कोपे । दुरात्मन् रक्षः ! तिष्ठ तिष्ठ । क्व कुत्र मे प्रियतमामुर्वशीमादाय गृहीत्वा गच्छसि ? हे राक्षसापसद ! मे प्रियां गृहीत्वा कुत्र प्रस्थितोऽसि तिष्ठ तिष्ठेति भर्त्सयति । अत्र द्विरुक्तिस्तु भर्त्सनायाम् ।

( विलोक्य ) सपद्येव राजनि विलोकयति मेघाज्जलधाराः न्यपतन् ताः दृष्ट्वा राजा मेघं राक्षसं मत्वा भ्रान्तः जलधाराः बाणान् ज्ञात्वा विस्मितः कथयति—हन्त ! इति आश्चर्ये । मत्कृतभर्त्सनामविगणय्य मां प्रतियोद्धुकामो राक्षसोऽयं बाणवर्षां करोतीति विस्मयः । शैलशिखरात् गगनमाकाशं उत्पत्य उड्डीय उत्प्लुत्य वा बाणैः शरैः मां अभिवर्षति अभिहन्यमानं समाच्छादयति ।

( लोष्टं लगुडं गृहीत्वा हन्तुं धावन्, अनन्तरे पश्चाद्द्विपदिकाख्यया पूर्वोक्तलक्षणया गीत्या दिशः अवलोक्य ) आह—इति शेषः ।

[ हृदयाहितप्रियादुःखः सरोवरे धुतपक्षः ।
व्याधापवल्गितनयनस्ताम्यति हंसयुवा ॥ ६ ॥ ]

( विभाव्य सकरुणम् ) कथं विप्रलब्धोऽस्मि—

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया मम नोर्वशी ॥ ७ ॥

---

"क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् । गर्भनिर्भिन्नबीजार्थः सोऽवमर्शोऽङ्ग-सङ्ग्रहः" इति लक्षणमनुसन्धानः इह क्रोधेनावधारितैकान्तफलप्राप्त्यवमायात्मा गर्भसन्ध्युद्भिन्नबीजार्थसम्बन्धो विमर्शः पर्यालोचनम् अतः आसन्नमणियोगं उर्वशीप्राप्त्यवमायात्मा विमर्शसन्धिः प्रवर्तते ॥ अपि च "आः दुरात्मन् रक्षः" इत्यत्र "संफेटो रोषभाषणम्" इति लक्षणसमन्वयात् संफेटो नाम विमर्श-सन्ध्यङ्गमुक्तं भवति ।

**हृदयेति**—हृदये आहितं प्रियायाः विरहजन्यं दुःखं यस्य सः, प्रियावि-रहोत्कण्ठितः सरोवरे धुतपक्षः कम्पितपक्षः व्याधेन अपवल्गिते त्रासिते नयने यस्य तादृशः हंसयुवा ताम्यति पीडितः अस्ति । अत्र राज्ञः पक्षे उर्वशी-विरहजन्यदुःखम्, धुतपक्षत्वेन असहायत्वं, त्रस्तनयनत्वं च व्यज्यते । क्वचिदियं गाथा न दृश्यते । अस्या लोपस्तु नाटकीयदृष्ट्या समीचीनो न वेत्युपरिष्टाद्विविच्यते ।

( विभाव्य किमेतत्सत्यं निशाचरो मे प्रियामहरत् उत नैतदिति भ्रान्तिं विहाय यथार्थं नायं निशाचर इति ज्ञात्वा सकरुणमाह— )

**नवजलधर इति**—अयं आकाशे लक्ष्यमाणः नवजलधरः नूतनो मेघः, न तु सन्नद्धो युयुत्सुः दृप्तः मदोन्मत्तः निशाचरो राक्षसः । इदं चाकाशे दृश्यमानं सुरधनुः इन्द्रधनुः दूरेण आकृष्टं दीर्घं अस्ति, न तु रक्षसः शरासनम् । नाम वितर्के । अयमपि पटुः तीव्रो धारासारः जलधारासम्पातः, न तु बाणानां अविश्रामं मुक्तानां परम्परा सम्पातः । पुनश्चेयं कनकस्य निकषः शाणे कषणरेखा तद्वत् स्निग्धा सुन्दरी विद्युद्, मम प्रिया उर्वशी न ।

पूर्वं भ्रान्तो राजा मेघादिकं सर्वं राक्षसादिकममन्यत किन्तु जातायां विभाव-नायां स यथार्थमीक्षते—अयं वारिधरः, न तु योद्धुकामोऽतिगर्वितो राक्षसः । उभयोः श्यामलत्वात् भ्रमावकाशः । इदमिन्द्रधनुः न तु राक्षसस्य शरासनम् । अत्राकृतिसाम्यं भ्रमकारकम् । अयं जलसम्पातो न तु शरवर्षः । उभयोस्तीव्रत्वं नादकारकत्वं च भ्रमहेतुः । इयं दीप्तिमती सौदामिनी न तु मे प्रियोर्वशी । अत्रोज्ज्वलतैव भ्रान्तिजननी ।

महाकवेः कालिदासस्येदं पद्यं गीर्वाणसाहित्ये सर्वत्रोल्लेखनीयमिव सुप्रसिद्धमेवेत्यतः अत्रेदं विभावनीयं यत् गताङ्के दुर्लभतमायाः वल्लभायाः प्राप्तिवशान्नायकस्य हृदयमतीवानन्दसन्दोहभाजनमिवाभवत् । तत्र नायकस्य प्रेयस्याः प्राप्तिसम्भवात् नाट्यस्य प्राप्त्याशा नाम तृतीयावस्था दर्शिता । किन्तु "न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान्रागोऽनुषज्यते" इति नियमात् विमर्शसन्धिप्रक्रमेऽत्रादौ विप्रलम्भं पुरस्कृत्य नियताप्तिनिबन्धनेऽस्मिन्नङ्के नायिकायाः मानोत्तेजितकोपपारवश्येन निषिद्धस्थलगमनाल्लतात्वपरिणतेः नायकस्योन्मादेनैवाङ्कः समुद्घाटितो महाकविना । त्रोटकेऽस्मिन् नायकनायिकयोर्माञ्जिष्ठत्वाद्रागस्य विप्रलम्भे उन्मादमूर्च्छादयो रसपरिपोषकाः । तत्र कविवरेण्यः अङ्कोपक्रम एव सोन्मादं राजानं प्रवेश्य "आः दुरात्मन् रक्षः" इति नवजलदं रक्षो मन्यमानो राजा तं भर्त्सयतीति सहृदयेभ्यः लक्षयति । आः दुरात्मन् इत्युपक्रम्य नवजलधरेतिपद्यपर्यन्तं विभावनीयं तावन्नायकस्य चित्तचित्रणचातुर्यं तत्रभवतो महाकवेरिति विविच्यतेः—

उर्वशीविरहितो राजा केशिहरणवृत्तान्तं स्मरन् शैलोपरि परिवर्तमानं बलाहकं वीक्ष्य भ्रान्तो मनुते यदयं पयोधरः निशाचर एव । तत्र च वारंवारं दृश्यमाना उज्ज्वला तडित् तेन कुक्षौ नीयमाना राज्ञः प्रियतमोर्वशी । अतः सतडिद्वारिधरस्य नभसि विभावनं भ्रान्तावावश्यकम् । ततश्च तस्याः भ्रान्तेः परिपोषाय राज्ञश्च नैसर्गिकं बलदर्पमनुसन्धातुं बाणाभिवर्षो युज्यत एव, तदनुसन्धानाय जलाभिवर्षस्यावश्यं योजनीयत्वम् बाणाभिवर्षं घटयितुं शरासनस्याप्यपेक्षा । तस्य च आः दुरात्मन्निति चूर्णकेऽनभिसन्धिरित्यवधेयमिह । एतस्मिन् सङ्घर्षे हृदयाहितेति गाथायाः भूयोऽनवकाशः, यतो भ्रान्तो नायकः लोष्टमुद्यम्य राक्षसं हन्तुं धावन् नायिकां चान्विष्यन् क तावत् हृदयाहितेति स्थितपाठ्यं भणितुमर्हति । तत्र तु धावतो नायकस्य किञ्चिद्दूरं गतस्य नवजलधरेति भ्रान्तिनिराकरणं युज्यत एव, तच्च आः दुरात्मन्निति अनन्तरमाशु धावनमनु अव्यवहितत्वेन कथं विप्रलब्धोऽस्मीति विभावनपुरस्सरं नवजलधरेतिपद्यस्य संस्थितिः सुसाम्प्रतैव । अत्र हृदयाहितेतिगाथासन्निवेशस्तु अस्थान एवेति सहजं पक्षमवलम्ब्य क्वचिदियं गाथा न दृश्यते । किन्तु तत्रत्यदेशकालसमवायमाद्योपान्तं निटिलं विभाव्य सहृदयैरिदं नूनं विवेचनीयं यदत्र राजा बाणाभिवर्षिणं रक्षो विलोक्य लोष्टमुद्यम्य हन्तुं प्रक्रान्तः उन्मादस्य परतरां काष्ठां प्राप्तः । एतदन्तरे तस्य प्रगल्भत्वं सोढुमपारयन् क गतः स जाल्मोऽसुरः इति जिज्ञासया सर्वतो दिशः सूक्ष्मं विलोकयन् राजा स्वावस्थासौसादृश्यप्रतियोगिनं हंसयुवानमेकत्राभिवीक्षते यस्तु हृदयाहितप्रियादुःखदुःखित्वाच्च सरोवरे धुतपक्षः व्याधत्रासितनेत्रः तान्तः आसीत् । तत्र हंसयुगलयोः हंसी तावत्पूर्वमेव तेन व्याधेन आखेटिता बभूव ततश्च परिशिष्टं हंसमपि हन्तुमुद्यतं क्वचिद्व्याधं परिभावयन् हंसः त्रस्तनयनः आसीत् तमेतादृशं हंसं वीक्ष्य नायकोऽपि तत्रैवात्मानमपि प्रियाविरहदूनं आत्मनश्च सरोवरपदेवा-

ध्यवस्यमाने विपिने धुतपक्षत्वं निःसहायत्वं हंसीहरव्याधनिभेन करालकालरूपेण उर्वशीहरेण राक्षसेनापवल्गितनयनत्वमनुभवन् कविना सलोष्टं धावनव्यापारान् स्वचातुरीमहिम्ना ईषदवरुद्धत्वेन चास्मै नेदं वस्तुनो रक्षः इति विभावनायाव-काशो दत्तः, नो चेदयीदं व्याधत्रस्तस्यापहृतहंसीकस्य हंसयूनश्चित्रं नोपात्तं कविना, तदोन्मादस्य चरमामवस्थां प्राप्तो राजा किमप्यनर्थमकरिष्यदित्यत एव नाट्यकला-कौशलपरिचायकमिदं चित्रं कवेः यत् सञ्चारेणः उन्मादस्य काष्ठां प्रापयित्वा स्वभ्रमविलसितमन्यथाकर्तुं अवसरं राज्ञे पुरस्कृत्य एतदन्तरा सन्नद्धं तं नवजलधरं विभाव्यात्मनो मोहवशाद् ग्लानिमवाप्य सकरुणं कथं विप्रलब्धोऽस्मीति तत्त्व-मवगम्य नवजलधरेति पद्यरत्नं वक्तुं संज्ञां लेभे । यद्येतस्मिन्नन्तराले राजा याथातथ्यविभावनसामर्थ्यवञ्चितोऽभविष्यत्तदा तु मृगतृष्णया रक्षमनुधावन् उन्मादवशात् क्वचिद्गर्ते पतन् मूर्च्छावशंवदः कदापि स्मरस्य दशमीं दशाम-वाप्स्यतेति हेतुना कविना हृदयाहितेति हंसचित्रं नायकस्य इति समुपस्थापितम् । तत्र हि नायकसदृशदशापरिपतितं हंसयुवानमकस्मात्प्रदर्श्य कविना कियत् सुन्दरं हृदयद्रावि करुणभावभ्रमाख्यमलङ्करणं (Pathetic Fallacy) उपयुक्तमिति अनतिगूढमेव । अमुनालङ्कारेण हंसीघातकस्य व्याधस्य दर्शनात् विलोलतारकत्वद्योत्यमानस्य भयत्रासस्य विषयीभूतं हंसयुवानं प्रेक्ष्य शासकत्वधिया अपराधिने क्रुद्धस्य राज्ञः पयोदविवर्तभूतं बाणाभिवर्षिणं राक्षसं प्रति कोपस्योप-बृंहितत्वात् तन्मनसि जगति दुर्वृत्तानां परदुःखदत्वमेव निसर्गः इति विमर्शावका-शप्रसङ्गाद्राज्ञः भ्रान्तिनिरासाय कविनाकृत विचित्रा कृतिरिति द्विपदिकया दिशोऽव-लोकनफलमहिम्ना हृदयाहितेति गाथायाः चारुतया चरितार्थत्वं सुसिद्धमेव ।

इदं नाटकीयवस्तुतत्त्वमविमृश्य "व्याधापवल्गितनयनः" इत्यत्र राज्ञः पक्षे "बाष्पापवल्गितनयनः" इत्यर्थं व्युत्पादयता रङ्गनाथेनाल्पमात्मनो बुद्धिवैभवः प्रदर्शितः इति सहृदयैरूह्यमेव । परं च "सरोवरे धुतपक्षः" इत्यत्र सरोवरसन्निधौ भयवशात्कम्पितपक्ष इति तात्पर्यम्—सरोवरे इत्यत्र सरोवरतीरे लक्षणा ॥

समासेनोपन्यस्तं ततस्तावदिदमत्राकूतं यद् विरहदूनो राजा पयोदं प्रेयसीमप-हरन्तं राक्षसं मत्वा लोष्टमुद्यम्य धावितुं प्रक्रमते एव तावत्तादृशदशाविशेषपातितं हंसयुवानमालोक्यैवान्तराले आत्मनो भ्रमविलसितमेवासीन्नेदं रक्षः किन्तु नव-जलधरः इति विभावनानुरोधेन भणति यत् यमहं राक्षसं मन्वानः आसम् स नवजलधरः सन्नद्धः । सन्नद्धेति मेदकस्योभयत्रापि योजनीयत्वात् । अत्र प्रतिपदं वैलक्षण्यं अवधेयम्—जलानां धरो जलधरः सजलत्वात् श्यामतापत्तिः तत्रापि नवेति विशेषणप्रदानात् भृशं श्यामत्वं गम्यते । सन्नद्धत्वख्यापनात् घनघोरघटात्वं व्यक्तम् । सन्नद्धत्वस्य मेघविशेषणत्व एव भ्रान्त्युद्बोधकस्योपमानस्य दृप्तत्वं सञ्जा-घटीति; गर्जनादि दृप्तत्वे हेतुः । दृप्तत्वख्यापनात् निशाचरस्य प्रियोर्वशीग्रहणं, राज्ञश्च "आः दुरात्मन् तिष्ठेति" भर्त्सनस्यानवधानं साम्प्रतमेवेति भावः । पुन-श्चेदं सुरधनुः दूराकृष्टं दूरतरावलम्बि; कुपितस्य प्रतिभटस्य धनुषः आकर्णमूल-

माकृष्टत्वात् कोपरूपस्य भावस्य ध्वनेः बीजं दूराकृष्टत्वम् । 'नाम' यद्यपि वितर्के निश्चये वोपयुज्यते, किन्तु तत्राचार्यमम्मटादिभिः प्रयुक्तं "तस्येति" पाठान्तरं शोभनतरम्; तत्र बुद्धिस्थप्रकारावच्छिन्नस्य रक्षसः शरासनेन स्वस्वामिभावेन सम्बद्धत्वात्सर्वनाम्नस्तस्येत्यस्यावश्यं ग्रहणीयत्वात् । अयमपीत्यत्रापिना धारासारस्य कविना प्राधान्यं गमितम् कुतः "इदं रक्षः" इत्येवं भ्रान्तिनिराकरणे धारासम्पातस्यापि समभ्यधिकं सत्सहायकत्वम् । यावद् भृशं धाराभिवृष्टिः नाभूत् तावत्तु स राजा वारिधरं निशाचरं मत्वा धाराः इषुसम्पातं व्यभावयत् किन्तु यदा पटुस्तीव्रतरोऽभिवर्षो जातः तदैव शैत्येनार्द्रत्वेन च नेयं बाणसन्ततिः अपि तु वृष्टिरिति यथार्थानुभवः समुद्बुद्धः । कनकस्य निकषे रेखा तद्वत् स्निग्धेति वर्णनात् निकषे कषपाषाणे श्यामे यादृशी कनकरेखा सविशेषं भ्राजन्ती दरीदृश्यते एवमेव कृष्णे रक्षोवक्षसि ऊढायाः ऊर्वश्या अपि भ्रमः । मम उर्वशीति अहम्पदबोध्यस्यात्मनीनत्वस्याभिव्यक्तिः रतिमतीव पोषयति । यथा सर्वत्र अयमिदमित्यादिपदानि इदन्त्वावच्छिन्नस्य पुरो दृश्यमानस्य दृश्यस्येदमाकारेणावधारयितुं प्रयुक्तानि एवमेवात्र चरमे चरणेऽपि इयं कनकनिकषेति स्थलेऽपि इयंपदस्यावश्यं देयत्वेऽपि तददानान्न्यूनपदत्वं दोषः अनिवार्य एव, लिङ्गविपरिणामपूर्वकस्याध्याहरणस्यापि नूनमयुक्तत्वादेव ।

पद्यमिदमन्यथाप्यन्वेतुं शक्यम्—अयं सन्नद्धेत्यादि सामान्यतः उभयत्रापि प्रयोक्ष्यमाणानां विशेषणानामुद्देश्यकोटिसन्निविष्टस्येदमाकारस्य विधेयत्वस्वीकारात् परं च तत्र विषयिणः निराकरणपूर्वकं विषयस्योपालम्भात् तद्यथा—अयं सन्नद्धः हन्तुमुद्यतः ( यः कोऽपि सः ) नवजलधरः, दृप्तनिशाचरो नास्ति । इदं दूरमाकृष्टं ( वस्तु ) सुरधनुः तस्य रक्षसः शरासनं न विद्यते । अयमपि पटुस्तीव्रः ( यत् किमपि अनुभूयते ) स धारासम्पात एव बाणपरम्परा न भवितुमर्हति । ( इयमपि ) कनकस्य कषणरेखेव दीप्ता कापि दृश्यते सा तडित् मम प्रिया नेति भावार्थः ॥ इदं प्रत्नैः अवलम्बितमपि व्याख्यानमनतिरुचिरमेव ।

अत्र प्रकरणगतवक्रता—यदुक्तं राजानकेन "यत्राङ्गिरसनिष्यन्दनिकषः कोऽपि लक्ष्यते । पूर्वोत्तरैरसम्पाद्यः साङ्कादेः कापि वक्रता" यत्राङ्गीरसः यः प्राणरूपः तस्य निष्यन्दः प्रवाहः तस्य काञ्चनस्येव निकषः परीक्षापदविषयः विशेषः कोऽपि निरुपमो लक्ष्यते तत्र काप्यलौकिकी प्रकरणवक्रता यथात्र प्रकृते उन्मत्ताङ्के पुरूरवसः नायिकाविरहजन्यखेदसंभिन्ना रतिरभिव्यज्यमाना विप्रलम्भरसं अङ्गित्वेन परिपुष्णाति । नवजलधरेति पद्यस्य चूर्णके ( विभाव्य सकरुणम् ) पश्चाच्च कथमित्येव पाठः, किन्तु पुरातनपुस्तकेषु "कथं विप्रलब्धोऽस्मि" इति पाठः स तु रमणीय एवेत्यङ्गीकृतः ॥

पुनरत्रेदं विचार्यते यत् सत्यप्यत्र बहुले गुणकदम्बे सहृदयहृदयकण्टकसदृश एवैको गुणराशिनाशी दोषः परमसुरभिनीहारसम्भिन्नश्रीखण्डरसमिव स्वस्वच्छमिदं बत सिकतायते तद्यथेह राक्षसापहृतोर्वशीभ्रान्तिजनकत्वेन सौदा-

मिनीसनाथस्य मेघोदयस्योपन्यासः बाणाभिवर्षं घटयितुं धारासम्पातः, धारासु इषुसम्पातस्य विवर्तनार्थं सुरधनुषो ग्रहणम् । अतो विद्युद्युतो मेघोदयः, जलाभिवर्षः, सुरधनुषो गगने दर्शनं चैतेषां समेषां एककालावच्छेदेन वैज्ञानिकनयविरोधि अप्राकृतमेव समवायकल्पनम् ।

वस्तुतः सूक्ष्मतया विभावितं चेत् कवेरयं अक्षम्यो दोषः, कल्पनायाः चारुत्वेऽपि निराधारत्वाद्यथा—निराक्रियमाणानि भ्रान्तिकारणानि एकसमयावच्छेदेन विद्यमानत्वेन न दृष्टचराणि । विद्युत्सहितस्य नवजलधरस्य 'निशाचरेणोर्वशी अपह्रियमाणा वर्तते" इत्याकारकभ्रान्तेः कारणत्वं युज्यते किन्तु इन्द्रधनुषः पटोर्धारासारस्य च समकालीनत्वाभावात् तयोः दर्शनेन धनुर्बाणसम्पातभ्रान्तिरिति कल्पना त्वसङ्गतैव । तडिन्मेघयोः विक्रमस्य मनसि उर्वशीहरणविषयकभ्रान्त्युत्पादने पर्याप्तकारणत्वे सति किमिदं निरङ्कुशत्वं कवेः असत्कारणात्कार्योत्पत्तिदर्शने ? यद्यपीन्द्रधनुषः सत्वे मन्दाः अम्बुकणाः क्वचिद्दृश्यन्ते इत्यभ्युपेत्यापि वयं ब्रूमः मेघसुरधनुर्वृष्टिविद्युतां एकस्मिन्नेव समये दर्शनमप्राकृतमेव । गद्यं वा पद्यं वा सत्यावलम्बि चेत्तदैव हृद्यं अन्यथा तु वद्यमेवेति सहृदयवन्द्यो नियमः । अथ नियतिकृतनियमरहितामित्यादि काव्यव्याख्याबलेन कवेः शरणं कल्प्यते चेत् अत्र विचार्यते किमिदं नाम नियतिकृतिनियमराहित्यम् ? किमिदं नियतिकृतिनियमराहित्यं कवेः स्वच्छन्दोच्छलत्कल्पनारूपत्वं उत अनैसर्गिकक्रियावस्तुभावतत्समवायादिकल्पनारूपत्वं वा ? आद्यश्चेत् कस्यचिदपि कस्या अपि कल्पनायाः सम्भवादुच्छृङ्खलत्वाच्च समस्तकाव्यशास्त्रस्याकुलीभावप्रसङ्गः । अपरश्चेत् काव्यस्योपदेशयुक्तत्वात् सौकर्येण ज्ञानावाप्तिबीजकत्वात् काव्यनिर्माणस्य चरमहेतुकैमर्थ्यप्रसङ्गः तदध्ययनस्य निष्प्रयोजनत्वापत्तिश्च । अतः नियतिकृतनियमराहित्येन कविचक्रवर्तिभिरुपादानकर्मादिसहकारिकारणापरतन्त्रत्वमङ्गीकृत्य सामान्यस्यापि वस्तुनः निजप्रतिभया चमत्कारशालितयोपस्थापनबलेन सहृदयानामाल्हादकत्वं नाम नियतिकृतनियमराहित्यमभिप्रेतं प्रेक्षावतां इति कविहृदयं गमितम् । तच्च सतां वस्तूनां समवायाश्रयीभूतमेव सर्वदा, न तु असतां वस्तूनां अप्राकृतत्वावलम्बितमिति स्फुटमेव, यथा व्याचक्षितं श्रीमदानन्दवर्धनैरालोके "सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम् । अलोकसामान्यमभिव्यनक्ति प्रतिस्फुरन्तं प्रतिभाविशेषम्" यच्च प्रतिपादितं भट्टतौतेन "नायकस्य कवेः श्रोतुः समानोऽनुभवस्ततः" परं च "अर्थशब्देन वस्तुशब्दं वस्तुशब्देन तत्त्वशब्दं च वक्तुं वस्तुशब्दं व्याचष्ट" इति अभिनवगुप्तपादैर्लोचनकारैः अभिमतत्वात् वस्तुतत्वं निष्यन्दमाना महतां कवीनां सरस्वती लोकसामान्यं प्रतिभाविशेषं परिस्फुरन्तमभिव्यनक्तीति विश्वजनीनत्वात् कविसम्प्रदायस्य अत्र प्रकृते तादृशमपि नियतिकृतिनियमराहित्यरूपं निर्बलमपि शरणं कवेर्नानुषज्यत एव । अयं च दोषः सुरधनुःकल्पनायासव्यतिरेकेण समाधातुं शक्यः, तस्या हानान्नाटकीयवस्तुसमारोहस्य कथमप्यहानात् । दोषविशेषे सत्यपीह कालिमसत्वेऽपि मणेः

( इति मूर्च्छितः पतति । पुनर्द्विपदिकयोत्थाय निश्वस्य )

मइ जाणिअ मिअलोअणि णिसिअरु कोइ हरेइ ।
जाव णु णवतडिसामलि धाराहरु वरिसेइ ॥ ८ ॥
[ मया ज्ञातं मृगलोचनां निशाचरः कोऽपि हरति ।
यावन्नु नवतडिच्छ्यामलो धाराधरो वर्षति ॥ ८ ॥ ]

---

यथा मणित्वं न व्यतिरिच्यते तथैवास्य पद्यस्य सत्काव्यत्वं न मनागपि हीयते चेदत्र विषये केवलं रसचर्वणाचञ्चवः सहृदयचणाः प्रमाणम् ॥

अत्र तडिदुवर्श्योः क्रमेण नायिकायाः दीप्तिमत्त्वं व्यक्तम् ।

नात्राविमृष्टविधेयांशाख्यो दोषः नञर्थस्येह अभावस्य प्राधान्यात् प्रसज्यप्रतिषेधाच्च । काव्यप्रकाशकृद्भिरुदाहृतमिदं पद्यममुमेवार्थं स्फुटयितुम् ।

पटुः, आलवणो, तीव्रो वा "पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् । पटोले तु पुमान् क्लीबे छत्रालवणयोरपि" इति मेदिनी ।

अत्र पूर्वं "दुरात्मन् राक्षस" इति सम्बोध्य पश्चात् नवजलधरोऽयं, न तु निशाचरः इत्युक्तेः आक्षेपालङ्कारः "आक्षेपस्तु स्वयमुक्तस्य प्रतिषेधो विचारणा"-दिति लक्षणात् । अत्रोपमालङ्कारश्च । कनकनिकषवत् स्निग्धा इत्यत्र नायिका-विषयकदीप्तिमत्त्वदर्शनपूर्वकं वाक्यार्थोपस्कारकत्वम् "सुन्दरं सादृश्यं वाक्यार्थोपस्कारकमुपमालङ्कृतिः" इति रसगङ्गाधरे । अनयोः सङ्करः ।

अत्र प्रसादाख्यो गुणः "यस्मादन्तःस्थितः सर्वः स्वयमर्थोऽवभासते । सलिलस्येव सूक्तस्य स प्रसाद इति स्मृतः" । सौकुमार्यं चेह "सौकुमार्यमपारुष्यमिति" चन्द्रालोके ।

हरिणी वृत्तम्—"रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" । षड्भिश्चतुर्भिः ततः सप्तभिः यतिर्यदा नगणसगणौ मगणरगणौ सगणलघू गुरुश्च तदा हरिणी नाम च्छन्दः स्यात् ॥ ७ ॥

( इत्युक्त्वा मूर्च्छितः पतति ) अत्र नायकस्य स्मरस्य नवमी मूर्च्छाख्या दशा प्रदर्शिता । प्रीतिबीजं परां काष्ठामधिरूढम् । स्मरस्य दश दशाः । अन्तिमाया वर्णनायोग्यत्वात् नवमी एव परात्परा । यदाहुः—"नयनप्रीतिः प्रथमं, चित्ता-सङ्गस्ततोऽर्थसङ्कल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः । उन्मादो मूर्च्छा मृतिरित्येताः दशैव स्मरदशाः स्युः" इति ।

संज्ञां लब्ध्वा उत्थाय दीर्घं शोकपिशुनं निश्वासं गृहीत्वा द्विपदिकया ससम्भ्रमं आह—

**मयेति !**—मया इत्थं ज्ञातं यत् कोऽपि अविज्ञातः निशाचरः मृगस्य लोचने इव लोचने यस्याः सा तादृशीं हरिणकिशोरदृशं मम प्रियामुर्वशीं हरति परिहृत्य नयति । यावत् वस्तुतस्तु नु निश्चयेन नवा तडित् यस्मिन् सः नवतडित् नूतनविद्युत्सनाथः श्यामलः कृष्णवर्णः धाराधरः मेघो वर्षति ।

( इति सकरुणं विचिन्त्य )

क नु खलु रम्भोरूर्गता स्यात् !

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
    स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि हि न मे शक्ताः पुरोवर्तिनीं
    सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥ ९ ॥

( इति मूर्च्छितः पतति )

---

यावत्कालपर्यन्तमहं मेघोऽयं वर्षतीति नाज्ञासिषम् तावत्कालं निशाचरो मे प्रियतमां नयतीति धीरासीत् । इदानीं तु तन्निवृत्तिरिति भावः । दुर्निश्चये ।

अत्र धाराधरस्य न तेनैव नायं राक्षसः किन्तु जलधरः इति भेदाध्यवसायात् उन्मीलितालङ्कारः । यदुक्तं—"भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ" । उर्वश्या अध्यवसानाय नवतडिदिति विशेषणम्, श्यामलत्वञ्च रक्षसा साम्यपरिकल्पनाय ॥

मृगलोचनामित्यत्रोपमा । इयं गाथा ॥ ८ ॥

इति सकरुणं सशोकं विचिन्त्य—

क कुत्र नु खलु रम्भोरूः कदलीस्तम्भनिभोरुरुर्वशी गता स्यादिति संशयः ।

रम्भे कदलीस्तम्भौ तद्वदूरू यस्याः सा रम्भोरूः "ऊरूत्तरपदादौपम्ये" इति ऊङ् प्रत्ययः ।

रम्भोरूरित्युपमालङ्कारेण तस्योर्वोः वृत्तानुपूर्वत्वं सुखस्पर्शत्वं च व्यज्यते ।

**तिष्ठेदिति**—इह हि सन्देहदोलाधिरूढं राज्ञो मनः विविधवितर्कान् निश्चयान्तान् विदधाति—

सा मह्यं कोपवशात् प्रभावेण दिव्यात्मशक्त्या पिहिता अन्तर्गता तिष्ठेत् किन्तु नायं सम्भवः, यतः सा मह्यं दीर्घं चिरकालं न कुप्यति । द्वितीया शङ्का—स्वर्गाय स्वर्गं गन्तुं उत्पतिता भवेत्, तदपि सम्भवं न, यतः अस्याः मनः मयि भावार्द्रं स्नेहसरसं विद्यते । मां परित्यक्तुं नार्हति सेति भावः । विबुधानां द्विषः शत्रवः असुरा अपि मे पुरोवर्तिनीं समक्षं स्थितां तामुर्वशीं हर्तुं न शक्ताः समर्था न । तदप्यसम्भवः । सा च किन्तु मे नयनयोरत्यन्तं अगोचरतां अविषयतां प्राप्ता इति कोऽयमनिर्वाच्यः विधिः मे दैवम् ।

क्रोधपरीतमानसा सान्तर्धानशक्त्या यदि कुत्रचिदिहैव अन्तर्हिता भवेदिति न, यतः सा चिरकालं मह्यं कुपिता न भवति । अथवा सा स्वर्गगमनेच्छया वियति उत्पतिता भवेत्तदपि न, यतः सा मयि गाढं प्रेमार्द्रा । अथवा पुनरपि राक्षसाः तां परिहृत्य नीतवन्तो भवेयुस्तदपि न घटते, यतः तेषां मत्समक्षमेव तस्या हरणे सामर्थ्याभावात् । किन्तु यद्यपि कारणं न दृश्यते तथापि सा मम नयनयोरविषयतां याता, न मे दृक्पथमवतरति सा इति भावं हा कोऽयं विधिरिति सखेदं प्रकाशयति नायकः ।

अत्र तिष्ठेदित्यादिषु संभावनायां लिङ् । स्वर्गाय स्वर्गं गन्तुमिति तुमर्थाच्च भाववचनादिति चतुर्थी ।

अत्र दीर्घं न सा कुप्यति इत्यनेन दाक्षिण्यं अचिरकोपवत्वं नायिकायाः व्यञ्जयन्नुत्तमत्वं ध्वनितम् । अत्र शृङ्गारो विप्रलम्भाख्यो रसो ध्वन्यते । उर्वशी आलम्बनं, मेघादिदर्शनमुद्दीपनम् तल्लतारूपग्रहणेनादर्शनं च । रतिः स्थायी, औत्सुक्योन्मादशङ्कादयो व्यभिचारिणः ।

अत्र हि पुरूरवसः प्रियतमावियोगवैधुर्यदशासहभूद्वेगविवशचेतसस्तद्-सम्प्राप्तिहेतुमनधिगच्छतः आदावेव नैसर्गिकसौकुमार्यसम्भाव्यमानं पश्चाच्चोचित-विचारापसार्यमाणोपपत्ति किमप्यनिर्वाच्यं तात्कालिकविकल्पसङ्कलितमनवलोक-नकारणमुत्प्रेक्षमाणस्य प्रियासादनसाधनसमन्वयासम्भवात् सर्वतो नैराश्यनिश्चय-विमूढमानसतया ध्वन्यमानः स च विप्रलम्भो रसः परां परिपोषदवीमधिरोपितः काव्यकुतूहलिना कविनेति सहृदयैर्भाव्यम्—यदुक्तं हि राजानकेन-"मुख्यम-क्लिष्टरत्यादिपरिपोषमनोहरम् । स्वजात्युचितहेवाकसमुल्लेखोज्वलं परमिति ॥" अपरं चेह विशेषोऽयं यद्रसप्रकर्षे सत्यपि वितर्काख्यव्यभिचारिचमत्क्रियाप्रयुक्त-स्यास्वादातिशयस्य सद्भावात् रसैकघनचमत्कारात्मन्यप्यस्मिन् पद्ये कश्चिदुद्रिक्ता-वस्थां प्रतिपन्नो वितर्काख्यो व्यभिचारी चमत्कारातिशयप्रयोजकत्वाद् भाव-ध्वनित्वेन राजतेतराम् यदुक्तं ध्वनिकृद्भिः "रसभावतदाभासतत्प्रशान्त्यादिर-क्रमः । ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः" इति ॥

अत्र च नयनयोरगोचरत्वस्य कारणाभावेऽपि नयनागोचरत्वेन विभावना । "क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना" ।

तिष्ठेत् कोपवशात् प्रभावपिहिता इत्यनन्तरं दीर्घं न सा कुप्यति इत्यस्य पूर्वं "नैतद्युज्यते यतः" इत्यादि आवश्यकीयपदाभावान्न्यूनपदतादोषापत्तिः; "किन्तु दीर्घं न सा कुप्यति" इत्युत्तरा प्रतिपत्तिः तिष्ठेत् कोपवशादितिरूपां पूर्वां प्रतीतिं अत्र वाक्यार्थयोः अविलम्बावगमात् बाधतां नाम । तथापि दोषोऽयं एतद्वाक्य-व्यङ्ग्यस्य वितर्काख्यस्य सञ्चारिणो भावस्य कथमप्युत्कर्षीकरणाद् गुणत्वमपि न भजते । एवमपि शेषेषु पादेपूरकम् । अथवा द्वितीयचरणे पुनरिति किन्त्वर्थे सङ्गमय्य सर्वत्राध्याह्रियतां इत्यप्यनतिरुचिकरं समाधानम् ।

एवं चात्र पूर्वार्धे तिष्ठेदिति पूर्वप्रतीतिबाधनाय उत्तरप्रतीतिः दीर्घं नेति वाक्य-भेदेन स्फुटतयावगमात् प्रतिपादिता स्यात् इति एतस्मिन् पक्षे स्वीकृतेऽपि तृतीयचरणे तथाकरणात् एकवाक्यप्रदानाद्वा भग्नप्रक्रमतादोषः । प्रक्रमस्य भङ्ग-दर्शनात् । तत्स्थाने "रक्षोभिश्च हृता भवेन्मम पुरः शक्तास्तु हर्तुं न ते" इति पादव्यवस्थया तत्समाधानम् ।

परमेह राज्ञः नयनयोः पुरोवर्तित्वाभावान्नायिकां बुद्धिस्थां बोधयितुं राज्ञा प्रत्यक्षत्वद्योतनाय तस्याः कृते प्रथमचरणे तच्छब्देन सर्वनाम्ना निर्देशो विहितः एवमेव तृतीयचतुर्थचरणयोः; किन्तु द्वितीयचरणे "भावार्द्रमस्या मनः" इत्यत्र

( संज्ञां लब्ध्वा दिशोऽवलोक्य द्विपदिकया मान्तम् ) अये ! परावृत्तभागधेयानां दुःखं दुःखानुबन्धि । कुतः—

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥ १० ॥

---

उर्वश्याः इदम्पदेन निर्देशः कृतः, "इदमस्तु सन्निकृष्टे" इति वचनात् इदम्पदस्य सन्निकृष्टार्थबोधकत्वादिहाभवन्मतसम्बन्धाख्यो दोषः स्फुट एव । नायिकायाः हृदयसन्निहितत्वग्रहणेन दोषः परिह्रियेत चेत्तर्हि स्वर्गान्नोत्पतितेति वितर्कस्य प्रातिकूल्यात् अङ्गिनो विप्रलम्भरसस्यापकर्षकत्वाद्विशेषेण दोषावहत्वं भवेत् ।

अत्र "झगिति प्रतीयमानार्थान्वयकत्वमर्थव्यक्ति"रिति वचनात् इह अर्थव्यक्तिर्गुणः ।

अत्र संशयाख्यं नाट्यलक्षणम् "संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद्यदनेश्चयः ॥ इति ।

अत्र च शार्दूलविक्रीडितं वृत्तम् । लक्षणं पूर्वमेवोक्तम् ॥ ९ ॥

इत्युक्त्वा दिशः द्विपदिकया विलोक्य उर्वशीमदृष्ट्वा सास्रम् सबाष्पं आह ।

अये ! परावृत्तभागधेयानां प्रतिकूलप्रारब्धानां पुरुषाणां दुःखं दुःखानुबन्धि दुःखं अनुबध्नातीति तादृशशीलवदेव भवति आपदां पदं अनुबध्नाति । आपत् आपद्भिः सहाक्रमति पराङ्मुखविधीन् जनान् इति भावः । अत्रावमाननख्यापनात् छलनं नाम सन्ध्यङ्गमुक्तं भवति । कुतः-अत्र हेतुमाह—

**अयमिति**—तया विलक्षणप्रीतिसदनभूतया प्रियया सुदुःसहः नितरां सोढुमशक्यः वियोगः मे मह्यमुपनतः । एकपदे च तदैव तस्मिन्नेव समये नवा ये वारिधरा मेघा तेषामुदयात् अहोभिः दिवसैः निरातपत्वेन उष्णतारहितेन शीतलत्वेन वा रम्यैः रन्तुं योग्यैः भवितव्यम् ।

प्रथमा तावदापदियमेव यदहं प्रियया विरहितः पुनश्च तस्मिन्नेव काले गण्डस्योपरि स्फोट इव मेघोदयात् शीतलानि अत एव रमणीयानि दिनानि भविष्यन्ति । एतन्महद्दुःखम् इति ।

अत्र निरातपत्वरम्यैः इत्यनेन उद्दीपनविभावो व्यक्तः, राज्ञश्च अधीरता विरहजन्याऽभिव्यज्यते ।

अत्र कान्तिर्नाम गुणः—"अविदग्धवैदिकादिप्रयोगयोग्यानां पदानां परिहारेण प्रयुज्यमानेषु पदेषु लोकोत्तरशोभारूपमौज्ज्वल्यं कान्तिः" ।

एकपदे सद्यः "तत्समैकपदे तुल्ये सद्यः सपदि च स्मृतम्" इति हलायुधः ।

अपि चात्र सुरुचिरवृत्तिमनुरुध्य समासानां विरलतया विनियोजने चकारस्य निपातस्यालक्ष्यक्रमव्यङ्ग्यस्य विप्रलम्भस्याभिव्यञ्जकत्वं, यदुक्तं सहृदयचक्रवर्तिभि "कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित्" इति । एवं चात्र द्वयोः परस्परं सुदुःसहत्वोद्दीपनसामर्थ्यसमेतयोः वल्लभाविरहवर्षाकालयोः एककालावच्छेदेन

(अनन्तरे चर्चरी)

जलहर संहर एहु कोपमि आढत्तओ
अविरलधारासारदिशामुहकंतओ ।
ए मइं पुहविं भमन्ते जइ पिअं पेक्खिहिमि
तच्छे जं जु करीहसि तं तु सहीहिमि ॥ ११ ॥

[ जलधर संहरात्र कोपमाज्ञप्तः
अविरलधारासारदिशामुखकान्तः ।
ए अहं पृथ्वीं भ्रमन्यदि प्रियां प्रेक्षिष्ये
तदा यद्यत्करिष्यसि तत्तत्सहिष्ये ॥ ११ ॥ ]

(विहस्य) वृथा खलु मया मनसः सन्तापवृद्धिरुपेक्ष्यते । यदा मुनयोऽप्येवं व्याहरन्ति "राजा कालस्य कारणम्" इति । तत्किमहं जलधरसमयं न प्रत्यादिशामि । (अनन्तरे चर्चरी)

---

प्रतिपादनपरं चकारद्वितयं समसमयसमुल्लसितवह्निदाहदक्षदक्षिणवातव्यजनसदृशतां समर्थयत् कामपि वाक्यगतवक्रताजनितां अभिख्यां समुद्दीपयति यतः सुदुःसहेत्यत्र सुदुरित्युपसर्गाभ्यां दयिताविरहवैधुर्यवैक्लव्यस्याशक्यप्रतीकार्यत्वं नूनं प्रतीयते—यथाभाणि वक्रोक्तिकारैः "रसादिद्योतनं यस्यामुपसर्गनिपातयोः । वाक्यैकजीवितत्वेन सा परा पदवक्रता" इति ॥ औपच्छन्दसकं छन्दः । लक्षणं प्रागुक्तमेव ॥ १० ॥

॥ अनन्तरे चर्चरी ॥

"द्रुतमध्यलयं समाश्रिता पठति प्रेमभरान्नटी यदि । प्रतिमण्ठकरासकेन वा द्रुतमध्या प्रथमा हि चर्चरी ॥ तत्र च प्रतिमण्ठेन तालेन प्रतिमण्ठकः" संगीतरत्नाकरे । लघ्वालितालो लोकेऽसौ रास इत्यभिधीयते ॥ इति ॥

**जलधर इति**—विरहिणां जलदस्योद्दीपनत्वात् राजा जलदमपगन्तुमाज्ञापयति—हे जलधर मेघ ! मया आज्ञप्तः त्वं अविरलः सन्ततः अविच्छिन्नो वा धारासारः वर्षः तेन आच्छादितं दिशः मुखं येन सः तेन च कान्तः मनोहारी कोपं संहर एतस्मिन् जने क्रुधं मा कुरु इत्यर्थः । किन्तु यदि अहं पृथ्वीं भ्रमन् अटन् प्रियामुर्वशीं प्रेक्षिष्ये दर्शनेनात्मानं संभावयिष्ये तदा यद्यत् कोपादिकं करिष्यसि तत्सर्वं सहिष्ये । प्रियया संश्लेषितस्तु त्वया कृतां कियन्तीं अपि क्रुधं न गणिष्ये किन्तु विश्लेषितायामवस्थायां मया आज्ञप्तः सन् कोपं परिहर । इदानीं नाहं ते कोपविषयः विरहक्लेशनिर्बलत्वात् । अविरलः धारासारः यासु ताः इति दिग्विशेषणम् ॥ ११ ॥

विहस्य—स्वराजत्वं स्मृत्वा स्वगतकातर्यं परिलक्ष्यात्मानमेव विहस्याह—

**वृथेति**—मया खलु वृथैव अकारणमेव मनसः संतापः वृद्धिः उपेक्ष्यते सह्यते । कुतः मुनयः तत्त्ववेदिनः अपि एवं व्याहरन्ति कथयन्ति यत् "राजा

गन्धुम्माइअमहुअरगीएहिं
वज्जंतेहिं परहुअतूरेहिं ।
पसरिअपवणुव्वेल्लिअपल्लवणिअरु
सुललिअविविहपआरेहिं णच्चइ कप्पअरु ॥ १२ ॥

[ गन्धोन्मादितमधुकरगीतै-
र्वाद्यमानैः परभृततूर्यैः ।
प्रसृतपवनोद्वेल्लितपल्लवनिकरः
सुललितविविधप्रकारैर्नृत्यति कल्पतरुः ॥ १२ ॥ ]

---

कालस्य कारणम्" राजा यथा यथा कालं चालयितुमिच्छति तथैव स प्रवर्तते । कालनियन्त्रणे वा राज्ञः शक्तिरस्ति । ननु राजाऽप्यहं किं केन हेतुना जलधरस्य समयं कालं न प्रत्यादिशामि निराकरोमि अपि तु अवश्यं करिष्ये इति आकूतम् ।

राज्ञः समयनियन्त्रणे शक्तिमत्त्वात् जलधरस्य साम्प्रतं उद्दीपकत्वेन दुःखदत्वात् कथमहं तं न निराकरोमि इत्यर्थः ।

( अनन्तरे चर्चरी )

**गन्धेति**—कल्पतरोः नृत्यव्यापारं वर्णयन् तस्योद्दीपकतां विभावयति—कल्पतरुर्नृत्यति—किन्तु नृत्ये गीतवाद्याभिनयादीनामपेक्षा वर्तते । तत्सर्वमुत्प्रेक्षते—

कल्पतरोः गन्धेन सौरभेण उन्मादिताः मत्ताः मधुकराः द्विरेफाः तेषां कलैः गीतैः गुञ्जितैरुपलक्षितः तथा च वाद्यमानैः परभृतां कोकिलानां रवैः एव तूर्यैः तदाख्यवाद्यविशेषैरुपलक्षितः प्रसृतो वहमानः पवनो वायुः तेन उद्वेल्लितानि चञ्चलानि च तानि पल्लवानि तेषां निकरः समूहो यस्य तादृशः कल्पद्रुमः सुष्ठु ललितैः सुभगैः प्रकारैः नृत्यति ।

नर्तकः कल्पतरुः । भ्रमरगुञ्जनमेव गीतम् । कोकिलानां रवो वाद्यम् । वायुना दोलायमानानि पल्लवानि एव अभिनयार्थं हस्तः । एभिः सर्वैः उपकरणैः संयुतः कल्पद्रुमो नृत्यति ।

अत्र कल्पद्रुमसुतगन्धस्योन्मादकत्वेन, मधुकराणां कलगुञ्जनेन, पिकानां रवेण, वायुना कम्पितैः पल्लवैः द्योतितेन शीतलमन्दसुगन्धिना पवनेन राज्ञः कामवृत्तेः उद्दीपकत्वात् विप्रलम्भाख्यश्रृङ्गारस्योपस्कारकमिदं पद्यम् ।

अत्र राज्ञा स्वशक्तेः ख्यापनात् व्यवसायो नाम विमर्शसन्ध्यङ्गमुक्तं भवति यथाह धनञ्जयः "व्यवसायः स्वशक्त्युक्तिरिति" ।

अत्र एकदेशविवर्ति सावयवं रूपकमलङ्कारः, तल्लक्षणं यथा गङ्गाधरे—"य उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकम् । यत्र च क्वचिदवयवे शब्दोपात्तमारोप्यमाणं क्वचिच्चार्थसामर्थ्याक्षिप्तं तदेकदेशे शब्दानुपात्तविषयके अवयवरूपके विवर्तनात्स्वस्वरूपगोपनेनान्यथात्वेन वर्तना-

( इति नर्तित्वा ) अथवा न प्रत्यादिशामि यत्प्रावृषेण्यैरेव चिह्नैर्मम राजोपचारः सम्प्रति ! कथमिव—

विद्युल्लेखाकनकरुचिरं श्रीवितानं ममाभ्रं
व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि ।
घर्मच्छेदात्पटुतरगिरो वन्दिनो नीलकण्ठा
धारासारोपनयनपरा नैगमाश्चाम्बुवाहाः ॥ १३ ॥

---

देकदेशविवर्ति ।" इति । कल्पतरौ नृत्यस्य संभावनायाः सत्वात् इवपदाप्रयोगाच्च गम्योत्प्रेक्षा ।

इह पूर्वार्धे उपलक्षणे तृतीया । परैः भृतः पोषिता इति परभृतः ॥ १२ ॥

( इति नर्तित्वा )

अथवा जलधरसमयमेनं न प्रत्यादिशामि तत्र हेतुमाह—यत् येन हेतुना प्रावृषेण्यैः वर्षासमयोद्भवैरेव चिह्नैः मम राजोपचारः राजसमुचिता सेवा सम्प्रति भवति । यतः समयेऽस्मिन् मम राजत्वमेभिः वर्षासमयसमुचितैरुपचारैः अर्थयुक्तं क्रियते । अनेन राज्ञः विरहित्वात् संकल्पविकल्पात्मकमनस्कत्वं व्यज्यते । प्रकृष्टा वृट् प्रावृट् तद्भवैः प्रावृषेण्यैः । कथमिवेति अनुगतेन पद्येन राजोपचारान् वर्णयति—

**विद्युल्लेखेति**—राजोपचारेषु राज्ञः कृते स्वर्णवितानं, चामराणि, वाहकाः, बन्दिजनः, वणिजादयश्च अपेक्ष्यन्ते । प्रावृषेण्यैः चिह्नैः राजोपचारो विधीयते इति उक्ते एतेषां सर्वेषां राजोपचाराङ्गानां तत्रापि अपेक्षा वर्तते इति सर्वं रूपकेण वर्ण्यते—

विद्युतः सौदामिन्या लेखा रेखा तदेव कनकं तेन रुचिरं सुन्दरं अभ्रं पयोद एव मम कृते श्रियः वितानं उल्लोचः अस्ति । निचुलतरुभिः तदाख्यवृक्षविशेषैः तेषां मञ्जर्यः ( Spray ) एव चामराणि मम उपरि व्याधूयन्ते । प्रावृषि निचुलतरुषु मञ्जरीणां समुद्भवः भवति । ताश्च वायुना कम्प्यन्ते । तत्र कविरुत्प्रेक्षते यत् मञ्जर्य एव चामराणि राज्ञः कृते व्याधूयन्ते । घर्मच्छेदात् ग्रीष्मर्तुनाशात् शैत्याच्च पटुतरगिरः सविशेषमधुरस्वराः नीलकण्ठा मयूरा एव बन्दिनः । वर्षासमये मयूराः मधुरस्वरेण केकां कुर्वन्तः नृत्यन्ति । त एव राज्ञः गुणानुवर्णने बन्दिभूताः । पुनश्च धारासारः वर्षासम्पातः तस्य उपनयने तत्पराः अम्बुवाहा जलदा एव नैगमा वणिजः सन्ति । पयोदानां पक्षे धारा एव सारः द्रव्यं तस्योपनयने तत्परा इत्यर्थः । वणिजां पक्षे धारावत् प्रभूततरः सारः वित्तमिति ॥

भावार्थस्तु—सौदामिनीलेखया कनकसदृशद्युतिर्मेघः एव स्वर्णवितानम्, तरुभिर्व्याधूयमानानि मञ्जरीरूपाणि चामराणि, मयूराणां केका एव बन्दिवाचः, तथा च अम्बुवाहा एव वाणिज्यपटवो जना सन्ति । इत्थं अनया सामग्र्या प्रावृषा राजोपचारः क्रियते । अनेन च तस्याः राज्ञः उपस्कारकत्वात् राज्ञा रक्षणीयत्वं

(पुनश्चर्चरी) भवतु किमेवं परिच्छदश्लाघया । यावदस्मिन् कानने तां प्रियामन्वेषयामि । (पाठस्यान्ते भिन्नकः)

दइआरहिओ अहिअं दुहिओ, विरहाणुगओ परिमंथरओ ।
गिरिकाणणए कुसुमुज्जलए, गअजूहवई तह झीणगई ॥ १४ ॥
[ दयितारहितोऽधिकं दुःखितो विरहानुगतः परिमन्थरः ।
गिरिकानने कुसुमोज्ज्वले गजयूथपतिस्तथा क्षीणगतिः ॥ १४ ॥ ]

(अनन्तरे द्विपदिकया परिक्रम्यावलोक्य च सहर्षम्)

हन्त हन्त ! व्यवसितस्य मे सन्दीपनमिव संवृत्तम् । कुतः—

---

व्यज्यते । अत्र सन्दीपनद्वयः केकाविद्युत्प्रभृतयो दत्ताः । नैगमा वणिजः "नैगमः क्षुरवेदान्तवणिग्वाणिज्यनागरे" इति विश्वः । सारं जलदपक्षे जलम्; वणिक्पक्षे वित्तम् "सारं न्याय्ये जले वित्ते" इति वचनात् ।

अत्र प्रथमपादत्रये शुद्धपरम्परितरूपकम् । चतुर्थे च धारासारेत्यस्य श्लिष्टत्वात् श्लिष्टपरम्परितरूपकम् । यल्लक्षणं "यत्र चारोप एवारोपान्तरस्य निमित्तं तत्परम्परितम्" इति । अत्र माधुर्याख्यो गुणः ।

मन्दाक्रान्ता वृत्तम् "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरुचेदि"ति लक्षणयोगात् ॥ १३ ॥

(चर्चरी) पश्चात् भवतु अस्तु नाम । किमेवं परिच्छदस्य उपकरणविशेषस्य श्लाघया प्रशंसया प्रयोजनम् । यावदहं अस्मिन् कानने तां प्रियां अन्वेषयामि मार्गयामि ।

पाठस्यान्ते भिन्नकः पाठो वाद्यक्षरोत्करः वाद्ये मूके सति भिन्नकः रागविशेषः "षड्जमध्यमिकोत्पन्नो भिन्नको मध्यमो बहुः" इति नाट्याचार्याः ।

**दइआ इति**—गजमिषेण स्वावस्थां वर्णयति राजा—दयितया प्राणवल्लभया रहितो वियुक्तः अत एव अधिकं दुःखितः पुनरपि विरहानुगतः विरहितत्वात् परिमन्थरः स्तब्धगतिः स्थाणुसदृशः एतादृशः गजानां यूथपतिः अग्रसरोऽपि कुसुमैः उज्ज्वले सुन्दरे गिरिसन्निकटवर्तिनि कानने तथा तादृग् रूपेण क्षीणगतिः हतगतिः सन् भ्रमति यथा स्वीयां प्रियामपि अन्वेषयितुं रक्षितुं वा अशक्तो बभूव । राजापि प्रियाविरहित्वात् मन्थरगतिः कानने इतस्ततः परिभ्रमन् तामलभमानः भृशं क्षीणगतित्वमापेति अन्योक्तिः ।

अनन्तरे द्विपदिकया गीत्या परिक्रम्यावलोक्य च सहर्षम्—

हन्त हन्तेति साश्चर्यानन्दे—व्यवसितस्य तदीयान्वेषणव्यापृतस्य मे सन्दीपनं प्रोत्साहनमिव संवृत्तम् । कुतः—

आरक्तराजिभिरियं कुसुमैर्नवकन्दली सलिलगर्भैः ।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः ॥ १५ ॥

इतो गतेति कथं नु मया तत्रभवती सूचयितव्या । यतः—

पद्भ्यां स्पृशेद्वसुमतीं यदि सा सुगात्री
मेघाभिवृष्टसिकतासु वनस्थलीषु ।
पश्चान्नता गुरुनितम्बतया ततोऽस्या
दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का ॥ १६ ॥

---

**आरक्तेति**—इयं पुरो दृश्यमाना नवा नूतनोत्पन्ना कन्दली कदली सलिलं जलं गर्भे मध्यभागे येषां तैः अन्तर्गतजलैः आसमन्तात् रक्ता राजयो रेखा येषां तैः कुसुमैः तस्याः मम प्रियायाः कोपादन्तर्बाष्पे अविगलिताश्रुणी लोचने नयने स्मरयति स्मृतिपथमानयति । कोपनायास्तस्या नयने यदा अन्तर्बाष्पे भवतः तदा ते अन्तर्जलकदलीकुसुमैः सन्निभे भवतः अत एव राजा कुसुमानि तादृशानि विलोक्य नयने स्मरति ।

अनेन तस्या नयनयोः कोपकारणात् आरक्तत्वम्, कदलीकुसुमसदृशदीर्घत्वसुकुमारत्वकान्तत्वादिकं च ध्वन्यते । अत्र च स्मरणमलङ्कारः—यदाह पण्डितेन्द्रः—"सादृश्यज्ञानोद्बुद्धसंस्कारप्रयोज्यं स्मरणं स्मरणालङ्कारः" इति । अत्र कदलीकुसुमदर्शनोद्बुद्धसंस्कारजन्यतत्सदृशप्रियानयनस्मरणस्य सत्वात् तस्य च वाक्यार्थोपस्कारकत्वादलङ्कारत्वम् ।

"कन्दली भूकदल्यपि" इति शब्दार्णववचनेन कदली, तथा च मुक्तावलीकृतां मते "कलध्वनौ चापि तरौ मृगभेदेऽपि कन्दली" इति वाक्यात् शिलीन्ध्रापरपर्यायः कन्दलीनामा वृक्षविशेषः ।

इयमार्याजातिः ॥ १५ ॥

सा मम प्रिया इतः अनेन मार्गेण गता न वेति कथं नाम मया सूचयितव्या परिज्ञातव्या । यतः—परिज्ञानमाह—

**पद्भ्यामिति**—यदा सा सुगात्री सुतनुः वसुमतीं महीं पद्भ्यां चरणाभ्यां स्पृशेत्तदा मेघैः अभिवृष्टा अतः आर्द्रतां नीताः सिकताः यासां तासु वनस्थलीषु अस्याः उर्वश्याः गुरुनितम्बतया श्रोणीनां गुरुत्वात् पश्चाद्भागे नता गाढानुप्रविष्टा अलक्तकाङ्का रागयुता चारु सुन्दरी पदपङ्क्तिरवश्यमेव दृश्येत ।

भावस्तु—प्रिया मे गुरुनितम्बिनी । वर्षया च भूमिः शिथिला । नितम्बानां पश्चात्स्थत्वात् चरणयोश्च पश्चाद्भागे भारविशेषत्वात् गाढतया शिथिलायां भूमौ अङ्कनं भविष्यति—तदा यदि सा चरणाभ्यां भूमिं स्पृशेत् तदा गुरुनितम्बिनीत्वात्तस्याः पार्ष्णिदेशस्य मेघाभिवर्षणशिथिलायां भूमौ निश्चयेन स्फुटतया लक्ष्यमाणस्य गाढमङ्कनं दृष्टिपथमवतरेत् । तेन सा अनेनैव मार्गेण गतेति विश्रम्भणीयम् । स्थली अकृत्रिमा भूमिः ।

(द्विपदिकया परिक्रम्यावलोक्य च सहर्षम्) उपलब्धमुपलक्षणं येन तस्याः कोपनाया मार्गोऽनुमीयते ।

हृतौष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥ १७ ॥

---

"वसन्ततिलका वृत्तम्" ॥ १६ ॥

पुनरपि द्विपदिकया विलोक्य सहर्षमाह—उपलब्धं प्राप्तं उपलक्षणं चिह्नं मया येन तस्याः कोपनायाः मार्गः अनुमीयते ।

**हृतौष्ठेति**—निमग्ना गम्भीरा नाभिर्यस्याः सा तस्याः तथा च रुषा कोपेन भिन्न-गतेः विसंष्ठुलगतेः तस्याः प्रियायाः निपतद्भिः पतद्भिः ... ओष्ठभागे परिन्यस्तं रागं यैस्तैः परिमार्जितैः ... नयनोद-बिन्दुभिः अस्रबिन्दुभिः अङ्कितं चिह्नितं इदं शुकोदरश्यामं ... स्तनांशुकम् कुचाच्छादनवस्त्रम् असंशयं च्युतं प्रतिभाति ।

कीरवद्धरिता तदीया कञ्चुकी रक्तबिन्दुभिः कर्बुरिता आसीत् । ओष्ठरागस्यापि च्युतत्वात् केचन बिन्दवो रक्ताः अत एव तदीयहरितकञ्चुकी रक्तबिन्दुभिरन्तरा कर्बुरिता प्रतिभाति । अनेन अनुमीयते सा अनेनैव मार्गेण गता भवेदिति । अनेन तस्याः कोपनत्वं विरहितत्वाच्च सशोकत्वं व्यज्यते । अत्रोपमालङ्कारः अनुमानालङ्कारेण सङ्कीर्णः । अर्थविलक्षणमिदं पद्यम् ।

प्रेयसीमुर्वशीमन्विष्यन् राजा दूरतः बालतृणसनाच्छादितं इन्द्रगोपकीटसनाथं स्थलं प्रेक्ष्य तत्स्थलमेव स्तनांशुकं परिकल्पयते । स्थलस्य हरितत्वात् स्तनांशुकस्यापि तादृशत्वयोगाद् भ्रान्तिः । तत्र च शोणितवर्णाः इन्द्रगोपकीटाः क्वचिदुपविष्टा आसन् । इन्द्रगोपाः सदैव सङ्कुचिताः वर्तुलाकारेण वर्षासु शाद्वले उपविशन्तीति निसर्गः । तानिन्द्रगोपान् नवशाद्वले राजा एवं मनुते यथा ते हरितस्तनांशुके अस्रबिन्दव एव स्युः अस्रबिन्दुषु रक्तत्वं नयनाभ्यामधःपतनान्तरं ओष्ठे अश्रूणां स्थितिवशात् तत्र चालक्तकरागसम्भेदादुपकल्पितम् । ततश्चास्रबिन्दूनां अधःपातः स्तनांशुक एव । आशु स्खलने च अश्रूणां नायिकायाः भिन्नगतित्वस्य हेतुत्वम् अत एव भिन्नगतेरिति विशेषणपदस्वीकारः । परं च ओष्ठदेशादधःपतन्तो नयनोद-बिन्दवः नाभिदेशे संलग्नाः नाभेश्च गम्भीरत्वात्तत्र बिन्दूनां सविशेषतया स्थितिः अत एव तेषां बिन्दूनां शोषणावधि तत्रस्थत्वात् रक्तबिन्दूनां स्तनांशुकेऽङ्कनं समञ्जसम् । अत एव निमग्ननाभेरिति विशेषणमत्र साभिप्रायम् । भिन्नगतौ च राज्ञि मानजन्यकोपावेशात् रुषेतिपदवाच्यस्य कोपस्य हेतुत्वं साधु । अत एवात्रोभ-यत्र काव्यलिङ्गमलङ्कारः सपरिकरः ।

अत्र कोपावेशात् नायिकायाः नयनाभ्यां विगलन्तोऽश्रुबिन्दवः गतिभेद-वेगादाशु अधःपतन्तः ओष्ठरागेण सम्भिन्नाः ततश्चाधःपतन्तो नाभौ निमग्नाः

स्तनांशुके सज्जन्ते इति अतः हरितं स्तनांशुकं रक्तबिन्दुभिरन्तरा कर्बुरितं दरीदृष्टं तच्च सेन्द्रगोपे नवशाद्वले स्तनांशुकभ्रान्तेः जनकमिति तात्पर्यम् । चारुतरं भवेदिदं कल्पनं यदिदं परिकल्प्यमानं स्तनांशुकं केवलं कुचाच्छादनमात्रं (भाषायां 'चोली'ति प्रसिद्धं) नासीत्, किन्तु आनाभिविलम्बि कविमनसि अभिमतमासीत् । नूनं रुचिरमतीवेदं कालिदासीयं पद्यमित्यत्र सहृदयाः प्रमाणम् । अश्रूणां तादृशाधःपातवर्णनं कविनान्यत्रापि—"स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः । वलीषु तस्याः स्खलिताः प्रपेदिरे क्रमेण नाभिं प्रथमोदबिन्दवः ॥ (कुमार. ५।२४) ॥

एवमेवाश्रुबिन्दूनां रङ्गरञ्जितत्वं कल्पयन्ती पारसीकभाषायां कियच्चमत्कारि कवयित्री झेबुन्निसा बभाणेति सहृदयानां मनः भूयः सभाजयितुं अदो दीयते— अष्टादशे शतके भारतीयपातिशाहस्यौरङ्गजेबस्यात्मजा झेबुन्निसा साहित्यार्णवावगाहमाना रात्रिन्दिवं काव्यव्यापारमेवाजुषत । काव्यकलाविमुखस्तु पातिशाहः स्वदुहितुस्तादृशं व्यापारं अननुमन्वानः ताञ्च ततो निरोद्धुमप्यशक्नुवानः एकदा स्वसभायां पण्डितानाह यत्कथमियं मे तनया काव्यव्यसनं परित्यजेदिति मे महान् व्यग्रत्वहेतुः । तन्निशम्य सभासदैः मौलवीमौलिभूतैः द्रागेवोक्तं यदेकस्मिन्नहनि वयं देवचरणसन्निधौ तस्यै क्लिष्टतमां प्रहेलिकामेकां दास्यामः, यदि सा तामुत्तरयितुं प्रभविष्यति तदा सा स्वव्यसनमनुसरतुतमां, नो चेत्तस्मिन्नेवाहनि काव्यकलाश्लाघाभिसन्धिस्त्वया विहातव्येत्यभिसन्धिः । प्रस्तावममुं पातिशाहेनोमित्युक्त्वा अनुसर्तुं नियुक्तं तावदेकं दिनं तत्प्रहेलिकाप्रदानाय । प्राप्ते च तस्मिन्नहनि तस्यां विद्वत्संसदि सा कवयित्री पृष्टा—

"दुरे अबलक कसे कमदीद मौजूद ?"

[दुरे (मुक्ताफलानि) अबलक (श्यामरङ्गेन मिश्रितानि) कसे (केन) कमदीद (दृष्टानि) मौजूद (लभ्यमानानि)] तात्पर्यं तु—अयि ! क्वचित् कर्बुराणि मुक्ताफलानि वीक्षितानि किमु ? प्रहेलिकामिमां निशम्य तदुत्तरमाशु दातुमशक्नुवानायाः इदानीं राजाज्ञया मया काव्यामृतसेवनं विहातव्यं भवेदिति खेदवशात्तस्याः कज्जलाङ्कनरुचिराभ्यां नयनाभ्यां अस्रबिन्दवः पेतुः । एवं जाते द्रागेव तया सहृदयया कवयित्र्या कियत्सुन्दरमभिहितं "बजुज़ अशके बुताने सुर्मा आलूद" ॥ [बजुज़ (विना), अशके (अश्रुभिः) बुताने (कामिन्याः) सुर्मा (कज्जलेन) आलूद (मिश्रैः)] तात्पर्यं तु—कामिन्याः कज्जलमिश्रैरश्रुभिर्विना न क्वचिदपि सन्ति दरीदृश्यमानानि श्यामाङ्कानि मुक्ताफलानीति प्रत्युत्तरम् । सर्वे सदस्याः चकिता बभूवुः पातिशाहोऽपि प्रसादमवाप । इदमेवानवद्यं पारसीकपद्यमनूद्य "हृतौष्ठरागैर्नयनोदबिन्दुभिः" इति कल्पनामञ्जुलं कालिदासीयपद्यसब्रह्मचारिणं निर्माय पद्यं गीर्वाणवाणीजुषां रसचर्वणासौकर्यमुपगन्तुमुपरिष्टाद् दीयतेऽस्माभिः—

"मौक्तिकानि शबलानि केनचित् वीक्षितानि रुचिरे ! क्वचिद्वद ॥
नान्तरेण नयनाञ्जनस्पृशं बाष्पबिन्दुनिवहं मृगीदृशः ॥" इति

भवतु । तावदादास्ये । ( परिक्रम्य विभाव्य सास्रम् ) कथं सेन्द्रगोपं नवशाद्वलमिदम् । तत्कुतोऽस्मिन् विपिने प्रियाप्रवृत्तिमागमयेयम् ।
( विलोक्य ) अयमासारोच्छलितशैलतटस्थलीपाषाणमधिरूढः—

आलोकयति पयोदान् प्रबलपुरोवातनर्तितशिखण्डः ।
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन ॥ १८ ॥

---

अत्र सुकुमारताख्यो गुणः । स्तनांशुकम् कञ्चुकी ( Bodice or Say a Jumper here ) यदाह कश्चन कविः "प्रायः कञ्चुकिकारं निन्दति शुष्कस्तनी नारी" इति । वंशस्थविलं वृत्तम् ॥ १७ ॥

भवतु तद् स्तनांशुकमादास्ये । नवशाद्वलं स्तनांशुकं मत्वा तदादानप्रवृत्तस्य राज्ञः अत्र भ्रान्तिमानलङ्कारः । नैराश्यविधुरस्य राज्ञः ईषत्सन्तोषसूचकमिह भवतुक्रियापदम् ।

( परिक्रम्य विभाव्य तं सूक्ष्मतया विलोक्य सास्रमाह ) कथमिति आश्चर्ये ।

इदं नवशाद्वलं बालतृणप्रचुरा भूमिः सेन्द्रगोपम् इन्द्रगोपाख्यः कश्चन वर्षासमयोद्भवः कीटविशेषः तेन सहितं लक्ष्यते । तत् कुतः अस्मिन् विपिने वने प्रियायाः प्रवृत्तिं वार्ताम् आगमयेयम् लभेय । असम्भवा प्रियायाः उदन्तप्राप्तिः । यद्राजा स्तनांशुकममन्यत, यत् च ओष्ठरागरञ्जितैः अश्रुबिन्दुभिः किर्मीरितं स्तनांशुकं मेने तत्तु रक्तवर्णैरिन्दुगोपकीटैः स्थले स्थले सनाथीकृता बालतृणप्रचुरा हरितभूमिरासीत् । अत्रापि राज्ञः भ्रान्तिः । प्रावृड्कालीनत्वात् हरिततृणैः आच्छादिता भूमिरासीत् तत्र चेन्द्रगोपाः इतस्ततः बहवः आसन् । तत्र भ्रान्तो राजा भूमिं स्तनांशुकमकल्पत, इन्द्रगोपांश्च प्रेयस्या नयनाभ्यां निपततः ओष्ठरागेण मिश्रितान् अश्रुबिन्दून् परिकल्प्य, तत्स्तनांशुकमादातुं प्रवर्तमानः पश्चाच सेन्द्रगोपां भूमिं परिज्ञाय कथमिति चकितः प्रियोदन्तलाभोपायं विपिनेऽन्विष्यन्नुदास्ते ॥

( विलोक्य ) अयं आसारो धारासम्पातः तस्य उच्छलितं यत्र तादृशः शैलतटः तत्रत्या स्थली अकृत्रिमा भूमिः तत्रस्थं पाषाणमधिरूढः शिखी—इति श्लोकेनान्वयः ।

आलोकयतीति—एतादृशः प्रबलः पुरोवर्ती वातः वायुः तेन नर्तितः शिखण्डो बर्हः यस्य तादृशः शिखी मयूरः केका मायूरी वाणी गर्भे मध्ये यस्य तेन दूरोन्नमितेन दूरतः उद्धृतेन कण्ठेन पयोदान् मेघान् आलोकयति ।

भावस्तु—अयं पुरो दृश्यमानः धारासम्पातसमुच्छलितशैलतटे शोभमानायां स्थल्यां पाषाणमधिरूढः प्रबलपवनवेगेनोच्चलितबर्हो मयूरः केकागर्भेण सोत्सुकेन अत एव दूरोन्नमितेन कण्ठेन मेघानालोकयति । मयूरदर्शनम्, शैले धारासम्पातः, केकाश्रवणम् इति सर्वाणि उद्दीपनानि ।

इयमार्याजातिः ॥ १८ ॥

( उपेत्य ) भवतु, यावेदनं पृच्छामि ।

(अनन्तरे खण्डकः)

संपत्तविसूरणओ तुरिअं परवारणओ ।
पिअतमदंसणलालसो गअवरु विम्हिअमाणसओ ॥ १९ ॥

[ सम्प्राप्तखेदस्त्वरितं परवारणः ।
प्रियतमादर्शनलालसो गजवरो विस्मितमानसः ॥ १९ ॥]

( तेना खण्डकान्तरे चर्चरी )

बंहिण पै इअ अब्भत्थिअम्मि आअक्खहि मं ता
एत्थ अरण्णे भमन्ते जइ तुइ दिठ्ठी सा महु कांता ।
णिसम्महि मिअङ्कसरिसेण वअणेण हंसगई
ए चिण्हे जाणिहिसि आअक्खिउ तुज्झ मई ॥ २० ॥

[ बर्हिण परमित्यभ्यर्थये आचक्ष्व मम ताम्
अत्रारण्ये भ्रमता यदि त्वया दृष्टा सा मम कान्ता ।
निशामय मृगाङ्कसदृशेन वदनेन हंसगतिः
अनेन चिह्नेन ज्ञास्यस्याख्यातं तव मया ॥ २० ॥ ]

---

( उपेत्य ) भवतु शिखिनमुपसृत्य यावदेनं मयूरं पृच्छामि ।

( अनन्तरे खण्डकाख्यो गीतिविशेषः । तल्लक्षणं तु—"विरहव्यापृता या तु पठेद्गीतिं कुशीलवी । प्राकृतेन प्रबन्धेन खण्डकः स उदाहृतः" इति )

**संपत्तेति**—गजमिषेण स्वावस्थां प्रकटीकरोति—सम्प्राप्तखेदः विषण्णचेताः त्वरितं परान् वारयति इति परवारणः परबलदलनः प्रियतमाया दर्शने लालसः समुत्कण्ठितः विस्मितमानसः गजवरः इतस्ततः विचरतीति शेषः । परवारणोऽपि स्वप्रियां रक्षितुमक्षम इति विषादे विस्मये हेतुत्वेन परवारणेति विशेषणप्रदानम् ॥ १९ ॥

( तेना खण्डकान्तरे चर्चरी । तेना इति मङ्गलसूचकमक्षरद्वन्द्वम् । तेनकलक्षणमाह तत्रभगवान् नाट्याचार्यः, "ॐ तत्सदितिनिर्देशात्तत्समस्यादिवाक्यतः । तदिति ब्रह्म तेनायं ब्रह्मणा मङ्गलात्मकः । लक्षितस्तेन तेना इति" । अन्यत्रापि च—"तेकारः शङ्करः प्रोक्तः नाकारश्च उमा तथा । गीतादौ तेन वक्तव्यं तेना इत्यक्षरद्वयम्" । )

**बंहिण इति**—हे बर्हिण मयूर ! यदि अत्र अरण्ये विपिने भ्रमता त्वया सा विलक्षणा मम कान्ता दृष्टा चेत् मम मह्यं तां मे प्रेयसीं आचक्ष्व क सेत्यावेदय इति इयदेव त्वां परं केवलं अतीव बहुमानेन वा अभ्यर्थये अहं याचे । निशामय तद्रूपमित्यर्थं तस्याः परिज्ञानं शृणु । मृगाङ्कश्चन्द्रः तत्सदृशेन वदनेन आननेन,

( चर्चरिकयोपविश्य अञ्जलिं बद्ध्वा )

नीलकण्ठ ममोत्कण्ठा वनेऽस्मिन् वनिता त्वया ।
दीर्घापाङ्गा सिताापाङ्ग दृष्टा दृष्टिक्षमा भवेत् ॥ २१ ॥

( चर्चरिकया विलोक्य ) कथमदत्त्वैव प्रतिवचनं नर्त्तितुं प्रवृत्तः ! किं नु खलु हर्षकारणमस्य । ( विचिन्त्य । ) आं, ज्ञातम् ।

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽस्य जातः ।

---

तथा च हंसगतिः उपलक्षिता हंससदृशगतिमती सा अस्तीति परिज्ञानम् । अनेन चिह्नेन त्वं तां ज्ञास्यसि का सेति । अपि चेदं सर्वं मया तत्र तुभ्यमस्माभि-मुक्तम् अतः परं यूयं प्रमाणम् । इति ।

चन्द्रवन्मुखेन राजहंसवद्गत्या च सा भवता परिज्ञेया, परिज्ञानं मया प्रोक्तं, तादृशी काचन सुन्दरी वने परिभ्राम्यता त्वया समालोकिता चेद्वद । वदनेनेत्य-त्रोपलक्षणे तृतीया ।

अत्र भग्नप्रक्रमत्वं दोषः—मृगाङ्कसदृशेन वदनेन, हंसगतिरित्यत्र विभक्ति-प्रक्रमनाशात्, किन्तु विरहिणो राज्ञः मुखे पातितं सत् उन्मादातिशयं व्यनक्ति नाम "मयूरो बर्हिणो बर्ही" इत्यमरः ॥ २० ॥

( चर्चरिकया तदाख्यगतिविशेषया किञ्चिद्दूरं गत्वा उपविश्य प्राञ्जलिः सन्नाह— ) अञ्जलिलक्षणन्तु—"पताकाहस्ततलयोः संश्लेषादञ्जलिर्मतः" ।

**नीलकण्ठेति**—हे सितापाङ्ग धवलनयनान्त नीलकण्ठ मयूर ! अस्मिन् वने दीर्घापाङ्गा आकर्णमूलसंचारिनयना दृष्टौ दर्शने क्षमा योग्या दर्शनीयाकृतिर्वनिता काचन युवती त्वया दृष्टा भवेत् इति मम उत्कण्ठा बलवती जिज्ञासा । अत्र संप्रश्ने लिङ् । उत्कण्ठा सा उत्कण्ठाविषयिणीति केचित् ( Abstract for concrete. )

अत्र वृत्त्यनुप्रासालङ्कारः । अत्र मयूरस्य सितापाङ्गेति विशेषणेन नयनयोः सितत्वात् स्फुटलक्षकत्वात् अवश्यमेव दृष्टा भवेदिति बोध्यम् । नीलकण्ठेति विशेषणेन श्लिष्टपदान्महादेवस्यापि बोध्यत्वात् तत्सदृशोपकारित्वं मयि प्रभुत्वञ्च गम्यते । उत्कण्ठालक्षणन्तु "रागे त्वलब्धविषये वेदना महती तु या । संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः" । अनुष्टुब् वृत्तम् ॥ २१ ॥

( चर्चरिकया विलोक्य ) मयूरनृत्यं दृष्ट्वा आह—कथं मदुक्तस्य प्रतिवचनं प्रत्युत्तरमदत्त्वैव नर्त्तितुं प्रवृत्तः । किं नु खलु हर्षस्य कारणमस्य ! नु इति वितर्के ! ( विचिन्त्य ) आम् विस्मये, ज्ञातः खलु अस्य हर्षहेतुः ।

**मृदुपवनेति**—मत् प्रियाया उर्वश्याः विनाशात् अदर्शनात् अस्य मयूरस्य मृदुना मन्देन पवनेन वायुना विभिन्नः विकसितः घनवद् जलदवत् रुचिरः चाः

रतिविगलितबन्धे केशहस्ते सुकेश्याः
सति कुसुमसनाथे किं करोत्येष बर्ही ॥ २२ ॥

भवतु । परव्यसनसुखितं न पुनरेनं पृच्छामि । (द्विपदिकया दिशोऽवलोक्य) अये! इयमातपान्तसन्धुक्षितमदा जम्बूविटपम-

---

कलापः पिच्छभारः अथवा घनो निबिडः अत एव रुचिरः कलापः बर्हः निःसपत्नः अद्वितीयो जातः सम्पन्नः । यावत्कालं मम प्रिया इह भुवि दर्शनपथमधिरूढाऽऽसीत् तावत्कालं मयूरस्य मेघसदृशपिच्छभारः तस्याः केशपाशेन ह्रेपितः सन् तावच्च शुशुभे, इदानीं तस्या लुप्तत्वे कलापिनः कलापः अनुपमतां भजन् अद्वितीयत्वं प्राप्तः अयमेव मयूरस्य हर्षहेतुर्मह्यं च प्रत्युत्तरप्रदानं विनैव नृत्योद्बोधकः । किन्तु तस्याः सुकेश्याः रुचिरकेशपाशायाः कुसुमैः सनाथे समुल्लसिते रतौ सुरतव्यापारे विगलितः शिथलतां प्राप्तः बन्धः यस्य तादृशे केशहस्ते केशपाशे सति एष वराको बर्ही मयूरः किं करोति ? किमपि कर्तुं न समर्थः केवलं लज्जितः सन् तूर्ष्णीं भवेत् । इदानीं तु मयूरः स्वपिच्छस्य निःसपत्नत्वं जानन् आनन्देन नृत्यति किन्तु सुभगप्रसूनभारोल्लसितः सुरतोत्तरं शिथिलत्वमाप्नुवानः तस्याः केशहस्तो विद्यमानः यावत् समुल्लसतितराम् तदा केवलं ह्रेपितो वराकोऽयं मयूरः किमन्यत्कर्तुं पारयेत् न किमपीति भावः ।

अत्र मृदुपवनविभिन्न इत्युपमानभूतस्य रतिविगलितबन्ध इति उपमेयकोटिगतेन बिम्बानुबिम्बत्वं दीयते । घनरुचिरेत्यनेन उपमालङ्कारेण द्विरेफालिवत् कृष्णकेशा सा इति व्यज्यते । पिच्छभारस्य विभिन्नत्वे घनसदृशरुचिरत्वे सत्यपि गन्धहीनत्वात् न्यग्भावितत्वं, अतएव उपमेये कुसुमसनाथे इति पदग्रहणम् । अनेन सुगन्धित्वात्केशहस्तस्य चित्ताकर्षकत्वं कलापिनः कलापाद् विशिष्टत्वं च प्रतिभाति । उपमानात् कलापात् केशपक्षस्य विशिष्टत्वप्रतिपादनाद्व्यतिरेकालङ्कृतिः ।

अत्र प्रथमचरणे विनाशपदप्रदानात् अनिष्टबोधनात् अश्लीलत्वं दोष इति काव्यप्रकाशकृद्भिरुदाहृतम् किन्तु सहृदयहृदयावेद्यमिदं यत् नायिकाया अत्यन्तादर्शनाद् विनाशसदृशभावानुकूलोक्तिरियं नायकस्य विरहित्वात् आत्यन्तिकोन्मादावस्थामुपस्करोतीति नात्र दोषोपगमः विप्रलम्भोपजीवकत्वात् ।

अत्र माधुर्यसौकुमार्ये गुणौ ।

"कलापः संहतिर्बर्हे" इति विश्वः । केशपदानुवर्ती हस्तशब्दः पाशबोधकः "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे" इत्यमरः ।

मालिनीछन्दसा निबद्धमिदं पद्यम् । तल्लक्षणन्तु यथा, "न न म य य युतेयं मालिनी भोगिलोकैः" इति । अत्र अष्टाभिः सप्तभिश्च यतिः ॥ २२ ॥

भवतु अस्य नृत्यव्यापृतत्वम् । परेषां व्यसनेन दुःखेन सुखितं सुखिनं पुनस्तं मयूरं नाहं पृच्छामि । तिर्यक्षि तादृगारोपेण नायकस्य विलक्षणोन्मत्तावस्था गम्यते ।

(द्विपदिकया दिशोऽवलोक्य सर्वत्र विलोक्य)

ध्यास्ते परभृता । विहगेषु पण्डितैषा जातिः । यावदेनां पृच्छामि ।

(अनन्तरे खुरकः)

विज्जज्झरकाणणलीणओ दुक्खविणिग्गहवाहुप्पीडओ ।

दूरोसारिअहिअआणंदओ अम्बरमाणे भमइ गइन्दओ ॥

[ विद्याधरकाननलीनो दुःखविनिर्गतबाष्पोत्पीडः ।

दूरोत्सारितहृदयानन्दः अम्बरमानेन भ्रमति गजेन्द्रः ॥२३॥ ]

हेले हेले !

परहुअ महुरपलाविणि कन्ती णंदणवण सच्छंद भमंती ।

जइं पइं पिअअम सा महु दिट्ठी ता आअक्खहि महु परपुट्ठी ॥२४॥

[ परभृते मधुरप्रलापिनि कान्ते । नन्दनवने स्वच्छन्दं भ्रमन्ती ।

यदि परं प्रियतमा सा मम दृष्टा । तर्हि आचक्ष्व मम परपुष्टे ॥२४॥ ]

---

अये इति विस्मये ! इयं पुरो लक्ष्यमाणा आतपान्तेन ग्रीष्मसमयावसानात् सन्धुक्षितः समुद्दीपितः मदः यस्याः सा विशिष्टमदोन्मत्ता परभृता कोकिला जम्बूवृक्षस्य विटपं शाखां अध्यास्ते । इह खलु जम्बूवृक्षे समासीना कोकिला । परैः रङ्गसाम्यात् काकैः भृता पोषिता इति परभृता अन्यपुष्टा कोकिला ।

विटपमध्यास्ते अत्र "अधिशीङ्स्थासां कर्मेत्यनेन" अधियोगे द्वितीया ।

विहगेषु खगेषु एषा कोकिलानां जातिः पण्डिता पण्डा नाम धीस्तद्वतीत्यर्थः । चतुरेयं जातिरिति प्रश्ने हेतुः । यावत् अत एव एनां पृच्छामि क्व मे प्रियेति ।

(अनन्तरे खुरकः नृत्यविशेषः "पटमञ्जरिरागसंयुतं यद्द्रुतमध्येन लयेन यत्प्रयुक्तम् । प्रतितालयुतं च नर्तनं तत्खुरकाख्यं मुनये शिवेन दत्तम्"—मुनये भरतायेत्यर्थः । अथवा केषांचन मते खुरकाख्यो गेयविशेषः" पूर्वपूर्वाक्षरत्यागे योऽन्यो वर्णचयः स चेत् । उत्तरोत्तरसंघादो खुरकः परिकीर्तितः ॥ )

**विद्याधरेति**—गजव्यपदेशेन स्वावस्थां प्रकाशयति । विद्याधरस्य कानने वने लीनः संचारी, दुःखेन विरहजन्येन विनिर्गतः बाष्पाणामश्रूणामुत्पीडो धारा यस्य सः, दूरेण उत्सारितस्त्यक्तो हृदयानन्दो येन एतादृशः गजेन्द्रः अम्बरमानेन आकाशवद् विशालपरिमाणेन उपलक्षितः सन् भ्रमति विहरति । अयमपि राजाऽतिविशालो प्रियाविरहदूनमानसः कानने इतस्ततः अटन् हृतश्रीको भ्रमति । अम्बरमानेन अतिविशाल इत्यर्थः । उपलक्षणे तृतीया ॥ २३ ॥

हेले हेले इति कोकिलां दृष्ट्वा सविस्मयानन्दे ।

**परभृत इति**—अयि परभृते कोकिले ! अयि मधुरं प्रलपतीति तादृशि । कान्ते नयनानन्दकारिणि । नन्दनवने अमरनगरीस्थोपवने स्वच्छन्दं स्वेच्छानुसारं भ्रमन्ती सा मम परमत्यन्तं प्रियतमा त्वया दृष्टा चेत् हे परपुष्टे मम आचक्ष्व मह्यं निवेदयेत्यर्थः ।

( एतदेव नर्तित्वा वलन्तिकयोपसृत्य जानुभ्यां स्थित्वा ) भवति !

त्वां कामिनो मदनदूतिमुदाहरन्ति
मानावभङ्गनिपुणं त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाशु कलभाषिणि यत्र कान्ता ॥ २५ ॥

( वामकेन किञ्चिद्वलित्वा । आकाशे ) किमाह भवती ? कथं त्वामेवमनुरक्तं विहाय गतेति ! शृणोतु भवती ।

---

अत्र परभृते परपुष्टे इति पुनरुक्तिः आदरातिशयं उन्मादावस्थायाः परां काष्ठां वा व्यञ्जयन्ती विप्रलम्भोपस्कारकत्वाच्च दोषावहा । परं प्रियतमा इत्यत्र तमप् ग्रहणानन्तरमपि परंपदादानमपि तथैव । अथवा आत्यन्तिकप्रणयं बोधयत् भृशतापभृतो विरहस्य हेतुः । परपुष्टे इति पदप्रदानेन परैः पोषिता अतएव परेषां कल्याणकरकर्मसु कृतज्ञत्वात् बद्धपरिकरा त्वमसि अतः ममापि प्रियोदन्तं प्रख्याप्य मे तापहारिणी भवेत्यर्थः ॥ २४ ॥

एतदेव उपर्युक्तं वलन्तिकया रागविशेषेण नर्तित्वा उपसृत्य किञ्चित्, जानुभ्यां स्थित्वा आह—वलन्तिकालक्षणं तु यथा रत्नाकरे "वलन्तिका तदुपाङ्गं स्याद्रिहीना मन्द्रदेवता । सन्यासांशाग्रहेहार्यां शृङ्गारे शार्ङ्गिणोदिता ॥" भवति इति सम्बोधनम् अयि कोकिले इत्यर्थः ॥

**त्वामिति**—अयि कलभाषिणि मधुरालापिनि पिके ! त्वां कामिनः कामुकाः मदनस्य कामदेवस्य दूतिं दूतीं उदाहरन्ति कथयन्ति । त्वं च मानस्य कामिनीकृतप्रणयरोषस्य अवभङ्गे विदारणे निपुणं चतुरं अमोघं सदैव सफलं अस्त्रमसि । मानिनीनां कामिनीनां प्रणयक्रुधः उन्मूलने परममस्त्रभूतं त्वमसि । अत एव तां विलक्षणां प्रियतमां मम समीपं त्वमानय तस्याः मानभङ्गं विधाय मम सन्निधौ लघु आनय; अथवा यत्र स्थले सा मम कान्ता तत्र मां आशु त्वरितं नय । भावार्थस्तु—त्वां कामुकाः कामदूतीमामनन्ति तव स्वरस्योद्दीपकत्वात् । त्वं च कामिनीनां मानहानौ अमोघमस्त्रमसि । अतः तस्याः मानोद्धरणं विधाय तां इहानय, अथवा मां तत्र नय इति । दूतिपदं ह्रस्वेकारकान्तमपि दृश्यते "दूत्यां दूतिरपि स्मृता इति शब्दभेदप्रकाशे ॥ मानलक्षणं यथा "स्त्रीणामीर्ष्याकृतः कोपः मानोऽन्यासङ्गिनि प्रिये ।" अत्र प्रसादमाधुर्यसमताख्या गुणाः ॥ वसन्ततिलका वृत्तम् ॥ २५ ॥

वामकेन किञ्चिद् वलित्वा—पार्श्वस्थितवस्तुविलोकनार्थं परिवर्तनरूपः कश्चन संस्थितिविशेषो वामकम्, यदाह "धुतेन शिरसा यत्तु पार्श्वेन वलितेन च । तद्वामकं वै करणं पार्श्वस्थस्यावलोकने ।" इति । ( आकाशे—पात्रं विना यदुक्तिस्तदाकाश इति "किं ब्रवीष्येवमित्यादि विनापात्रं ब्रवीति यत्, श्रुत्वेवानुक्तमप्ये-

कुपिता तु न कोपकारणं सकृदप्यात्मगतं स्मराम्यहम् ।
प्रभुता रमणेषु योषितां नहि भावस्खलनान्यपेक्षते ॥ २६ ॥

(ससंभ्रममुपविश्यानन्तरं जानुभ्यां स्थित्वा "कुपिता" इति पठित्वा विलोक्य च ।)

कथं कथाविच्छेदकारिणी स्वकार्य एव व्यासक्ता !

महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापद्गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिनवपाकं राजजम्बूद्रुमस्य ॥ २७ ॥

---

तत् तत्स्यादाकाशभाषितम्" इति दशरूपके ।) किमाह भवती—इति किं ब्रवीषीति आकाशलक्षणोक्तमागतम् । कथं अनुरक्तमपि त्वां विहाय सा गतेति पृच्छसि । भवतु उच्यते शृणोतु भवती—

**कुपितेति**—तु वितर्के सा कुपिता मह्यं क्रुद्धा । किन्तु सकृदपि एकवारमपि आत्मगतं मदाश्रितं कोपस्य कारणं न स्मरामि । यावत्कालपर्यन्तं मया विज्ञायते तावत्तु मया तु तस्याः कोपहेतु किमपि कर्म नानुष्ठितम् । किन्तु रमणेषु प्रियतमेषु योषितां स्त्रीणां प्रभुता भावस्खलितानि प्रणयगतान् अपराधान् नापते । यतः स्त्रियः स्वरमणेषु प्रभवन्ति अतः हेतोः प्रणयगतापराध एव न तेषां कोपहेतुः किन्तु केवलं तादृशसन्देहमात्रेणापि तेभ्यः कुप्यन्ति तास्तासां प्रभुत्वात् । अपराधं विनैव सा कुपितेति भावः ।

अत्र अपराधरूपकारणं विनैव कोपरूपस्य कार्यस्य सद्भावात् विभावनालङ्कारः "विभावना विना हेतुं कार्योत्पत्तिस्तु दृश्यते" इति लक्षणात् । अर्थान्तरन्यासश्च, वियोगिनी वृत्तम् ॥ २६ ॥

(ससम्भ्रमं सावेगं उपविश्य अनन्तरं जानुभ्यां स्थित्वा कुपितेतिपद्यं पठित्वा इतस्ततो विलोक्याह—)

कथमिति आश्चर्ये ! कथायाः विच्छेदकारिणी अननुसन्दधती प्रत्युत्तरमदत्त्वैव स्वकार्ये एव व्यासक्ता व्यापृता तिष्ठतीयं कोकिला !

**महदपीति**—महदपि दुःसहमपि परेषां अन्येषां दुःखं शीतलं आत्मनो व्यथाजनकत्वाभावात् शीतलमेव भवतीति यल्लोके आहुस्तत् सम्यग् अन्वर्थमेव । तत्र हेतुः—यतः आपद्गतस्य विरहदुःखदुःखितस्य मम प्रणयं प्रार्थनामगणयित्वा अवमत्य मदान्धा इयं कोकिला राजजम्बूद्रुमस्य अभिनवपाकं नूतनमेव पक्वं फलं सुमधुरं पातुं प्रवृत्ता यथा मदान्धाः कामदर्पखिलीकृतविवेकप्रसरा जनाः अधरं अन्यत् सर्वं अनादृत्य पातुं व्यवस्यन्ति तथैव मम पीडार्दनादमनादृत्य अधरमिव मधुरमिदं फलमास्वादितुं प्रवृत्ता; अतः साधु उक्तं लोके यत् परदुःखस्य व्यथाऽ-

तदेवंगतेऽपि प्रियेव मञ्जुस्वनेति न मे कोपोऽस्याम् । सुखमास्तां भवती । साधयामस्तावत् । ( उत्थाय द्विपदिकया परिक्रम्यावलोक्य च ) अये ! दक्षिणेन वनधारां प्रियाचरणनिक्षेपशंसी नूपुरशब्दः । यावदेनमनुगच्छामि । ( परिक्रम्य )

पिअअमविरहकिलामिअवअणओ
अविरलवाहजलाउलणअणओ ।
दूसहदुक्खविसंठुलगमनओ
पसरिअगुरुतावदिविअङ्गओ ।
अहिअं दुम्मिअमाणसअओ दरिअं गओ
काणणं परिभमइ गइन्दओ ॥ २८ ॥

[ प्रियतमाविरहक्लान्तवदनः
अविरलबाष्पजलाकुलनयनः
दुःसहदुःखविसंष्ठुलगमनः
प्रसृतगुरुतापदीप्ताङ्गः
अधिकं दूणमानसो दरीं गतः
कानने परिभ्रमति गजेन्द्रः ॥ २८ ॥ ]

---

जनकत्वात् शीतलत्वमेव । अधरमिवेत्यत्र श्रौती उपमा । प्रथमचरणस्य कृते अन्येषां हेतुत्वात् काव्यलिङ्गम् । मदान्धा इत्यत्र श्लेषः । तथा च प्रथमगतसामान्यस्य चरणत्रयगतविशेषेण समर्थनादर्थान्तरन्यासः । मालिनी वृत्तम् ॥ २७ ॥

**तदेवमिति**—तत् एवं गतेऽपि स्थितेऽपि तस्यामन्यपुष्टायां मत्प्रार्थनायाः उत्तरमदत्वैव प्रस्थितायामपि अस्यां मे कोपः न यतः सा मे प्रिया इव मञ्जु मनोहारी स्वनः यस्याः सा तादृशी अस्ति । मम प्रियासदृशी इयमपि कलकण्ठी अतः अपराधिनीमपि एनां क्षमे । भवती सुखमास्ताम् सुखेन वसतु इति । साधयामो गच्छामस्तावत् । नाटकादिषु साध्धातुर्गत्यर्थे ।

( उत्थाय द्विपदिकया गीत्या परिक्रम्य विलोक्याह ) अये दक्षिणेन वनधारां वनस्य धारा पङ्क्तिः तस्याः दक्षिणभागे प्रियायाश्चरणयोर्निक्षेपः न्यासः तं शंसति विज्ञापयति असौ तादृशः प्रियापादन्याससूचकः शब्द श्रूयते इति शेषः । यावदेनं शब्दं अनुगच्छामि । अत्र दक्षिणेन वनधारामिह दक्षिणेनेति एनप्प्रत्ययान्तत्वात् वनधारापदस्य "एनपा द्वितीया" इति सूत्रोक्तदिशा कर्मत्वम् । **परिक्रम्य**—

**प्रियतमेति**—प्रियतमया विरहो वियोगस्तेन क्लान्तं म्लानं वदनम् यस्य सः, अविरलानां सन्ततानां बाष्पाणां अश्रूणां जलेन आकुले पिहिते नयने यस्य तादृशः, दुःसहं असह्यं दुःखं तेन विसंष्ठुलं निम्नोन्नतं स्खलितं गमनं

( इति ककुभेन षड्पभङ्गा )

( अनन्तरे द्विपदिकया दिशोऽवलोक्य )

पिअकरिणीविच्छोइओ गुरुसोआणलदीविओ ।

वाहजलाउललोअणओ करिवरु भमइ समाउलओ ॥ २९ ॥

[ प्रियकरिणीवियुक्तो गुरुशोकानलदीप्तः ।

बाष्पजलाकुललोचनः करिवरो भ्रमति समाकुलः ॥ २९ ॥ ]

(सकरुणम्) हा धिक् कष्टम् !

मेघश्यामा दिशो दृष्ट्वा मानसोत्सुकचेतसा ।

कूजितं राजहंसेन नेदं नूपुरशिञ्जितम् ॥ ३० ॥

भवतु । यावदेते मानसोत्सुकाः पतत्रिणः सरसोऽस्मान्नोत्पतन्ति तावदेतेभ्यः प्रियाप्रवृत्तिरवगमयितव्या (वलन्तिकयोऽपसृत्य)

---

यस्य सः, प्रसृतो यः गुरुरसह्यः तापः पीडा तेन दीप्तं सन्तप्तमङ्गं यस्य सः, अधिकं अत्यन्तं दूनं पीडितं मानसं मनः यस्य तादृशः, दरीं गतः पर्वते संचरन् गजेन्द्रः कानने वने परिभ्रमति । इत्यनेन द्विपव्यपदेशेन स्वावस्थां वर्णयति ॥२८॥

इति उपर्युक्तप्रकारेण ककुभेन रागेण षड्पभङ्गा षडवच्छेदा षट्चरणा वा गीतिः समाप्ता । ककुभस्तु "मध्यमापञ्चमीधैवत्युद्भवः ककुभो भवेत् । धांशग्रहः पञ्चमान्तो धैवतादिकमूर्च्छनः । प्रसन्नमध्यारोहिभ्यां करुणे यमदैवतः । गेयः शरदि" इति भरताचार्योक्तलक्षणम् । ( अनन्तरे द्विपदिकाख्यगीत्या दिशोऽवलोक्याह )—

उन्मादातिशयात् पुनस्तामेवावस्थां वर्णयति—

**प्रियेति**—प्रियकरिण्या प्रियतमया वियुक्तो विरहितः गुरुणा तीव्रेण शोकानलेन दीप्तः संतप्तः बाष्पजलेन आकुले विहतगतिलोचने यस्य सः समाकुलः करिवरो गजेन्द्रो भ्रमति । अत्र शोकस्यानलेन तादात्म्यात् रूपकम् ॥ २९ ॥

( सकरुणम् सशोकम् ) हा धिक् कष्टम् कष्टम् ।

**मेघश्यामेति**—मेघैः श्यामाः कृष्णाः दिशो दृष्ट्वा विलोक्य मानससरोवरे उत्सुकं चेतः यस्य तेन मानससरोवरं जिगमिषुणा राजहंसेन कूजितं इदं श्रूयते, नूपुराणां शिञ्जितम् स्वनं न । नूपुरसदृशस्वनश्रवणेन राज्ञस्ततः प्रवृत्तिपूर्वकं किञ्चित् समाश्वासनमभवत् किन्तु मानसाय लालायितमानसो हंसः कूजितवान् तेन भृशं हतधैर्यो राजा कष्टत्वमाप्तः । इयं तु राजहंसानां प्रकृतिर्यत्ते प्रारब्धासु वर्षासु मानसकासारं प्रति गच्छन्ति । अनुष्टुब् वृत्तम् ॥ ३० ॥

भवतु खलु राजहंसविरुतं तच्च तु नूपुररवः । यावता कालेन एते मानससरोवरायोत्सुका उत्कण्ठिता पतत्रिणः राजहंसाख्याः पक्षिणः अस्मादत्रस्थात् सरसः नोत्पतन्ति नोड्डयन्ते तावता कालेन एतेभ्यः विहङ्गमेभ्यः प्रियायाः प्रवृत्तिरुदन्त

अहो जन्मविहङ्गमराज !

पश्चात्सरः प्रतिगमिष्यसि मानसं त्वं
पाथेयमुत्सृज बिसं ग्रहणाय भूयः ।
मां तावदुद्धर शुचो दयिताप्रवृत्त्या
स्वार्थात् सतां गुरुतरा प्रणयिक्रियैव ॥ ३१ ॥

---

जातं अवगमयितव्या ज्ञातव्या । भवतु तत्किन्तु यावदेते स्थानमिदं नापहन्ति तावदेतेभ्यः मत्प्रियायाः वार्ता यदि स्यात् संभवो ज्ञातव्येति भावः ।

वलन्तिकया तदाख्यरागविशेषेण पूर्वप्रोक्तलक्षणेन उपसृत्य प्रियाप्रवृत्ति-जिज्ञासया विहगान् उपसृत्य राजहंसराजं आह—अहो जन्मना विहङ्गमाना राजन् ! खगराजेति भावः ।

**पश्चादिति**—हे राजहंस ! त्वं यद्यपि मानसोत्कः असि तथापि मानसं तदाख्यं सरः प्रति पश्चात् गमिष्यसि । तत्पूर्वं तु पाथेयं पथि साधु पाथेयं मार्गे भोज्यं बिसं मृणालतन्तून् भूयः पुनर्ग्रहणाय आदानाय उत्सृज त्यज । अयं तु कविसमयो यत्ते मानसोत्काः राजहंसाः बिसं पाथेयमिति गृहीत्वा मानसं प्रति गच्छन्तीति वर्णयन्ति । यत्त्वया पूर्वं भोजनाय मृणालसूत्राणि गृहीतानि तानीह विहाय नवानि ग्रहीतुमर्हसि, अः अत्र त्वं किञ्चिद्विश्रम । सदृशवर्णनं यथा मेघदूते "मानसोत्काः । आकैलासाद्बिसकिसलयच्छेदपाथेयवन्तः । सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥" इति । तत्रादौ च किं कर्तव्यमित्याह—अत्रान्तरे मां दयितायाः वल्लभायाः प्रवृत्त्या वार्ताविज्ञापनेन शुचः शोकादपारादुद्धर विमोचय । यतस्त्वया इतस्ततो भ्रममाणेन क्व मे प्रिया, कामवस्थां प्राप्ता इति सर्वं ज्ञातमेव स्यादतः तदीयवार्तानिवेदनेन गुरुतरशोकदूनमानसोऽहं शोकादुद्धरणीय इति भावः । आदौ प्रियाया उदन्तजातं विज्ञाप्य, शोकसागरान्मां तारयित्वा पश्चात्त्वं मानसं प्रति नवीनं बिसं पाथेयरूपेण गृहीत्वा गन्तुमर्हसि इति भावः । एतदर्थं समर्थयितुमर्थान्तरन्यासेनाह—सतां सत्पुरुषाणां प्रणयिनां अर्थिनां याचकानां वा क्रिया सहायता स्वार्थात् स्वलाभापेक्षया गुरुतरा एव । सज्जनानां स्वभावोऽयं यत्तेषां मनसि स्वकार्यापेक्षया परेषां कार्यसम्पादनम् अधिकं गौरवशालि वर्तते । स्वकार्यसंसाधनं गौणं मत्वा सज्जनाः अर्थिनां कार्यसम्पादने प्रथमं प्रवर्त्तन्ते इति भावः ॥ एतदेवाह "क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीवेति" ।

पद्यमिदम् राज्ञः परिस्थितिं वर्णयत् सहृदयानां हृदयद्रावकमिति स्वत एव विभावनीयम् । राजा इह वारंवारं पशुपक्षीन् याचते तेन इदमेव दृढतां प्राप्नोति यत् "कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु" । इदं च परं विप्रलम्भोपस्कारकम् । चतुर्थचरणस्य पूर्वोक्तवस्तुनः समर्थकत्वादर्थान्तरन्यासालङ्कारः । "सामान्येन विशेषस्य विशेषेण सामान्यस्य वा यत्समर्थनं तदर्थान्तरन्यासः" इति । प्रसादाख्यो गुणः । अत्र वसन्ततिलका वृत्तम् ॥ ३१ ॥

(पश्चोन्मुखो विलोकयति) मानसोत्सुकेन मया न लक्षितेत्येवं वचनमाह—(उपविश्य चर्चरी)। रे रे हंसा किं गोइज्जइ। [रे रे हंस! किं गोप्यते।] (इति नर्तित्वोत्थाय)

यदि हंस गता न ते नतभ्रूः
सरसो रोधसि दृक्पथं प्रिया मे।
मदखेलपदं कथं नु तस्याः
सकलं चोरगतं त्वया गृहीतम्॥ ३२॥

---

(पश्चोन्मुखः राजहंसगमनमार्गं प्रति दत्तदृष्टिर्विलोकयति)

मानसाय उत्सुकेन उत्कण्ठितेन मया न लक्षितं किमपि अर्थात् त्वत्प्रिया नावलोकितेति वचनं आह राजहंसः इति।

(उपविश्य चर्चरीगीत्या)

रे रे हंस! त्वया किमर्थं मद्वल्लभोदन्तं गोप्यते रक्ष्यते अनुद्घाट्यते। कथय कथय! प्राकृते हंसा इत्याह्वाने प्लुतान्तमेकवचनम्॥

(इति नर्तित्वोत्थाय)

**यदीति**—हे हंस। यदि कुटिले भ्रुवौ भ्रुकुटी यस्याः सा मम प्रिया सरसः रोधसि तीरे ते दृक्पथं दृष्टिपथं न गता चेत्तर्हि कथं नाम त्वया हे चोर! मदेन कामेन खेलानि लीलाञ्चितानि सुभगानि वा पदानि यस्मिंस्तत् तस्याः गतं गमनम् सकलं यथा स्यात्तथा सम्पूर्णतया गृहीतम् स्यात्।

कवीनां सम्प्रदाय एष यत् कामिनीनां गतिर्हंससदृशीति। राजहंससदृशगतिमती सा इति भावः। अत्र नायिकागतं गमनम्। राजहंसश्चोरः। स्तेयं गमनम्। सामान्योऽयं नियमो यत् यस्य समीपे स्तेयं वस्तु दृश्यते स तु सन्देहं विनैव चोरत्वेन निश्चीयते। राजहंसस्य समीपे नायिकाया गमनं दृष्ट्वा चोरितं वस्तु लब्ध्वा राजहंसश्चोर इति अनुमीयते, प्रतिपाद्यते च हे चोर! मम प्रियायाः दर्शनं विनैव कथं त्वं तस्या गमनं चोरयितुं शक्तो भवेः अतः नूनं त्वया मत्प्रिया दृष्टेति। सरोवरस्य तटे यदि त्वया मम प्रिया न दृष्टा भवेत् कथं सलीलं तस्या गमनम् त्वयि भवेत् न कदापीत्यर्थः, अतः त्वया सा दृष्टा एव स्यादित्यर्थः। अत्र सामान्योपमानभूतस्य राजहंसस्य गमनरूपसाधर्म्येणोपमेयत्वकल्पनाया अभिव्यञ्जनात् प्रतीपालङ्कारो व्यङ्ग्यः। अत्र मत्प्रियागतिसदृशी त्वदीया गतिः इत्यर्थस्य भङ्ग्यन्तरेण वर्णनात् पर्यायोक्तालङ्कारः। तत् लक्षणं तु "गम्यस्य वचो भङ्ग्यान्तराश्रयम्" मम प्रियासदृशसलीलगतिमास्त्वमिति बोधात्। कथं त्वया गृहीतमित्यनेन त्वयाऽवश्यमेव सा दृष्टेति वस्तुनः अर्थादायातत्वादर्थापत्तिरलङ्कारः। यदुक्तम्—"दण्डापूपिकयाऽन्यार्थगमोऽर्थापत्तिरिष्यते।"

"नतं कुटिलनातयोरिति मेदिनी॥ "कासारः सरसी सरः" इत्यमरः। कूलं रोधश्च तीरं चेत्यमरः। "क्रीडा खेला च कूर्दनम्" इति कोषः।

(चर्चरी) गइ अणुसारे मइ लक्खिज्जइ ।

[गत्यनुसारेण मया लक्ष्यते ।]

(चर्चरिकयोपसृत्याञ्जलिं बद्ध्वा)

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥ ३३ ॥

(पुनश्चर्चरी)

कंइ पंइ सिक्खिउ ए गइलालस
सा पंइ दिट्ठी जहणभरालसा ॥ ३४ ॥

---

रातमित्यत्र "नपुंसके भावे क्तः इतिक्तप्रत्ययः । अत्र च राजहंसस्य चोरत्व-कल्पनापूर्वकं तर्जनात् द्युतिर्नामविमर्शसन्ध्यङ्गमुक्तं भवति । तल्लक्षणं यथा दर्पणे" "तर्जनोद्वेजने प्रोक्ता द्युतिरिति" ।

अत्र शोकपूर्णत्वं पद्यस्य प्रतिपादयितुं परमसुकुमारमधुरः सानुप्रासो बन्धः । औपच्छन्दसकं नाम छन्दः ॥ ३२ ॥

(चर्चरी ।)

**गतीति**—गत्यनुसारेण मत्प्रणयिनीसदृशगतिमत्त्वं तव दृष्ट्वा मया लक्ष्यते यत्सा त्वया दृष्टेति । रे रे हंसेति पूर्वोक्तचरणस्यानुचरणमिदम् ।

(अनया चर्चरिकया उपसृत्य अञ्जलिं बद्ध्वा आह—)

**हंसेति**—हे हंस ! मे कान्तां प्रियां प्रयच्छ देहि प्रदर्शय । यतः त्वया अस्या मत्कान्ताया गतिर्गमनं हृता चोरिता । यतः त्वयि तादृशी गतिर्दृश्यते अतः त्वं तां मह्यमर्पय । गतिरूपैकदेशग्रहणेन कथं सर्वा सा प्रदेया इति कोऽयं न्याय इत्यपेक्षायां धर्मशास्त्रसम्मतं वाक्यमाह—विभावितो दृष्टः एकदेशः चोरित-द्रव्यैकदेशः यस्मिन् तेन चौरेण यद् वस्तु स्वामिना स्तेने स्तेयत्वेन अभियुज्यते समारोप्यते तत्तेन सर्वं देयमिति न्यायात् । यस्मिन् पुरुषे चोरितद्रव्यस्य एकांशोऽपि लभ्यते स एव पुरुषश्चोरत्वेनाध्यवसीयते इति न्यायात् सर्वं वस्तु पूर्णतया चोरितवस्तुनः स्वामिने चोरेण प्रदेयमिति धर्मशास्त्रनियमः । यदाह भगवान् याज्ञवल्क्यः "निह्नुतेऽभिहितं नैकमेकदेशविभावितः । दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥" अत्रासम्बद्धकथाप्रायत्वादसत्प्रलापो नाम वीथ्यङ्गमुक्तं भवति ।

अत्रोत्तरार्धगतस्य वस्तुनः चोरत्वकल्पने हेतुत्वात् काव्यलिङ्गमलङ्कारः । मत्प्रियासदृशी तव गतिरिति प्रतीपमलङ्कारो व्यङ्ग्यः ।

अनुष्टुब् वृत्तम् ॥ ३३ ॥

(पुनश्चर्चरी)

[ कस्मात्त्वया शिक्षितमेतद्गतिलालस ।
सा परं दृष्टा जघनभरालसा ॥ ३४ ॥

( पुनश्चर्चरी । 'हंस ! प्रयच्छे'त्यादि पठित्वा द्विपदिकया निरूप्य । विहस्य )
एष स्तेनानुशासी राजेति भयादुत्पतितः । यावदन्यमवकाशमवगाहिष्ये ।

( द्विपदिकया परिक्रम्यावलोक्य । ) अये ! प्रियासहायश्चक्रवाकस्तिष्ठति । तावदेनं पृच्छामि ।

( अनन्तरे कुटिलिका )

मम्मररणिअमणोहरए [ मर्मररणितमनोहरे ]

( मल्लघटी )

कुसुमिअ तरुवरपल्लविए [ कुसुमिततरुवरपल्लविते । ]

---

हे गतौ गमने लालसा अभिलाषा यस्य सः तत्सम्बुद्धौ हे गत्युत्सुक ! यदि सा जघनस्थलस्य भरेण भारेण अलसा गुर्वी परं दृष्टा न चेत् कस्मात् त्वया एतद्गमनम् शिक्षितम् । तां विहाय तादृशगतेः शिक्षकाभावात्, त्वयि च तादृशगतियोगात् नूनं तयैव त्वं पाठितः त्वया च सा नूनं दृष्टेति निर्विवादः ।

उत्तरार्धमिदं रे रे हंसा इति गाथायाः । उन्मत्तत्वात् राजा तमेवार्थं पुनःपुनरावर्तयति ॥ ३४ ॥

[ पुनश्चर्चरी हंस प्रयच्छ ( ४।३३ ) इति पद्यं पठित्वा द्विपदिकया निरूप्य विहस्याह— ]

**एष इति**—चोराणां दण्डयिता राजा भवति । राजहंसश्च चोरः । मां राजानं मत्वा चोरोऽयं पलायितः । एष स्तेनान् चोरान् अनुशास्ति दण्डयति असौ चोराणां दण्डयिता राजा विद्यते इति विज्ञाय भयादुत्पतितः । अत्र गर्हणाख्यं नाट्यलक्षणम् यदुक्तम्—दूषणोद्घोषणाय तु भर्त्सना गर्हणं तु तत् ॥......हंसस्य स्वभावोऽयं यदुड्डयनं । तत्र कवेः राजभयादिवोत्पतनस्य सम्भावितत्वादुत्प्रेक्षालङ्कारः । यावत् अत एवाहमन्यमवकाशं स्थलं अवगाहिष्ये मार्गयिष्ये ।

द्विपदिकया परिक्रम्यावलोक्य । अये प्रिया सहायः यस्य तादृशः स्ववल्लभासनाथः चक्रवाकस्तिष्ठति । तावदेनं पृच्छामि ।

( अनन्तरे कुटिलिका तदाख्यनाट्यविशेषः । रागेण रहितं यत्तु अर्धमत्तलिकायुतम् । भाषयैष च तन्नाट्यं कुटिलीसंज्ञकं मतम् ॥ अर्धमत्तलिकाया लक्षणं तु 'उपेतापसृतौ पादौ वामश्चेद्रेचितः करः । कट्यामन्यस्तदा त्वर्धमत्तली तरुणे मदे' । ) गजान्योक्त्या स्वावस्थामाह—

**मर्मरेति**—मर्मरः शुष्काणां पर्णानां ध्वनिस्तथा खगानां रणितं ताभ्यां मनोहरे कुसुमितैः तरुवरैः पल्लविते समाच्छादिते व्याप्ते वा कानने वने दयितायाः विरहेणोन्मादितः गजेन्द्रः भ्रमति इति ।

( चर्चरी )

दइआविरहुम्माइअओ [ दयिताविरहोन्मादितः । ]
काणणे भमइ गइंदओ [ कानने भ्रमति गजेन्द्रः । ] ॥ ३५ ॥

( द्विलयान्तरे चर्चरी )

गोरोअणाकुंकुमवण्णा चक्क भणइ मइ
महुवासर कीलंती धणिआ ण दिट्ठी तुइ ॥
[ गोरोचनाकुङ्कुमवर्णा चक्र भण माम् ।
मधुवासरे क्रीडन्ती धन्या न दृष्टा त्वया ॥ ३६ ॥ ]

( चर्चरिकयोपसृत्य जानुभ्यां स्थित्वा )

रथाङ्ग नाम वियुतो रथाङ्गश्रोणिबिम्बया ।
अयं त्वां पृच्छति रथी मनोरथशतैर्वृतः ॥ ३७ ॥

---

मल्लघटी नाट्यविशेषः ॥ ३५ ॥

'लयस्तु नृत्यगीतवाद्यानां साम्यम् । लयः साम्य'मित्यमरः । लयस्तु त्रिविधः द्रुतो मध्यो विलम्बश्च । तत्र द्वितीयो लयो द्विलयः तदन्तरे तन्मध्ये चर्चरी नाम गीतिः ।

**गोरोचनेति**—हे चक्र चक्रवाक! मां भण कथय! त्वया गोरोचना पीतरङ्गो लेपविशेषः, कुङ्कुमो रक्तः तद्वत् वर्णः यस्याः सा तादृशी पीतरक्तरङ्गा मधुवासरे वसन्तसमये क्रीडन्ती खेलन्ती सा धन्या मम प्रिया न दृष्टा किम् । दृष्टा चेत्कथय क्व सा इति! ॥ ३६ ॥ "कोकश्चक्रश्चक्रवाक" इत्यमरः ॥

( चर्चरिकयोपसृत्य जानुभ्यां स्थित्वा )

**रथाङ्गेति**—नाम इति सम्भावनायाम्! हे रथाङ्ग चक्रवाक! रथाङ्गश्चक्रः तद्वत् पृथुलं वर्तुलं श्रोणिबिम्बं नितम्बमण्डलं यस्याः सा तया प्रियतमया वियुतो विरहितः अयं मनोरथानां शतैः अनेकाभिलाषाभिर्वृतो युतः रथी स्यन्दनवान् महारथो राजा त्वां पृच्छति—अतः अवश्यं त्वया झगिति प्रत्युत्तरं देयमिति भावः । रथीतिपदप्रदानेन माहात्म्यं बलवत्त्वं व्यज्यते विचलनाख्यं सन्ध्याङ्गञ्चोच्यते ।

अत्रापि पूर्ववत् यथा हंसस्य गतिरिव तस्या गतिरभूत् अतो राज्ञा हंसोऽपि पृष्टः । इह हि तस्याः श्रोणिदेशो रथाङ्गसदृश अभूदिति रथाङ्गं पृच्छति । अत्र साम्यात् भ्रमः । अत्र पृच्छानाम नाट्यलक्षणम् । "अभ्यर्थना परैर्वाक्यैः पृच्छाऽर्थान्वेषणम् मतम्" ॥ रथाङ्गश्रोणिबिम्बया अत्र धर्मलुप्तोपमा । अनुष्टुब् वृत्तम् ॥ ३७ ॥

कथं कः कः इत्याह । मा तावत् न खलु विदितोऽहमस्य ।

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यां उर्वश्या च भुवा च यः ॥ ३८ ॥

कथं तूष्णीं स्थितः । भवतु । उपालभे तावदेनम् । (जानुभ्यां स्थित्वा) तद्युक्तं तावदात्मानुमानेन वर्तितुम् । कुतः—

---

चक्रवाकस्य अर्कः अर्कः इति स्वाभाविकं रुतम् तत्र भ्रान्तो राजा कः कः इत्याशङ्क्य मामधिक्षिपतीति जानाति । कथं कः कः कोऽयं पूरुष इति अधिक्षेप-वचनं राजानं रथिनं मामाह । अथवा मा तावत्—मा मा तावदित्थं विचारय । नायं अधिक्षिपति यतः अहमस्य न खलु विदितो ज्ञातः । कोऽहमित्यविज्ञाय कः कः इति वचनमनेनोक्तम् । इदमेव मत्वा आत्मनः परिचयं ददाति—

**सूर्येति**—पुरा किल स्वच्छन्दतया गिरिजया विहर्तुकामो हरः स्वविहार-वने कस्यापि पुरुषस्य प्रवेशमसहमानः यः कोऽपि पुरुषः अत्रागमिष्यति स स्त्रीत्वं गमिष्यति इति शशाप । कृतयुगादौ च सूर्यस्य भगवतो नप्ता मनोः पुत्रः सुद्युम्नापरनामधेयः इलाख्यो राजा आखेटवशादटन् हरनिषिद्धमुमाख्यं वनं आत्मैकसहायः प्रविवेश स्त्रीत्वं चाभजत । तत्र तामेकाकिनीं रमणीयाकृतिं रमणीं विलोक्य बुधः मनसिजमनोरुजा भृशं पीड्यमानः स्वाश्रममानीय स्वेच्छया विहरन् पुरूरवसं विक्रमापरनामानं पुत्रमुत्पादयामास इति भविष्योत्तरपुराणकथा-प्रथानुसन्धानात् चन्द्रवंशिनः विक्रमस्य सूर्यनप्तुः स्त्रीत्वं मातृत्वं च प्राप्तस्य जन्य-जनकभावः अतः सूर्यः विक्रमस्य मातामहः, चन्द्रवंशित्वाच्च चन्द्रः पितामह इति पौराणिकीवार्त्ताऽनुसन्धेया ।

यस्य राज्ञः सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ मातामहश्च पितामहश्च विद्येते । यः च द्वाभ्यां उर्वश्या, भुवा पृथिव्या च स्वयं स्वाभिलाषेण पतिर्वृतः । चक्राय स्वाभिज्ञानं ददन् राजा आह—यस्य मातामहः सूर्यः, पितामहश्चन्द्रः; यं च उर्वशी भूश्च स्वयं पतित्वेन वृतवत्यौ सोऽहं पुरूरवाः राजा अस्मीतिभावः । अत्र पूर्वार्धे यथासंख्यमलङ्कारः ।

पूर्वोत्तरार्धयोः कर्तरिकर्मणिप्रयोगयोः दर्शनात्प्रक्रमभङ्गदोषः राज्ञः उन्मत्तत्वा-त्क्षम्यः । अत्र आत्मनः ख्यापनात् प्रसिद्धिर्नाम नाट्यलक्षणम्; यदुक्तम्—प्रसिद्धिर्लोकसिद्धार्थैः उत्कृष्टैरर्थसाधनमिति ॥

अनुष्टुब् वृत्तम् ॥ ३८ ॥

कथं तूष्णीं मौनेन स्थितः इति विस्मयः । भवतु । उपालभे चक्रवाकमेनं तावत् अधिक्षिपामि (जानुभ्यां स्थित्वा) यतः अयं तु प्रियाया वियोगेन अदर्शनीयां दशामाप्तः अन्येषां च परिस्थितिं न शृणोति अतः उपालम्भ-पूर्वकं दर्शयिष्यामि । तत् अत एव युक्तं योग्यमेव यत् आत्मनः परिस्थित्या

सरसि नलिनीपत्रेणापि त्वमावृतविग्रहां
ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः ।
इति च भवतो जायास्नेहात्पृथक्स्थितिभीरुता
मयि च विधुरे भावः कोऽयं प्रवृत्तिपराङ्मुखः ॥ ३९ ॥
(उपविश्य) सर्वथा मदीयानां भाग्यविपर्ययाणामयं प्रभावः ।

---

अन्येषामपि अवस्थासदृशं स्वानुभवजन्येन अनुमानेन वर्तितुम् उचितमेवेति भावः । कुतः—

**सरसीति**—सरसि सरोवरे नलिनी कमलिनी तस्याः पत्रेण दलेन आवृतविग्रहां समाच्छादितशरीरां स्वसहचरीं प्रियां चक्रवाकीं दूरे दूरस्थां मत्वा समुत्सुकः उत्कण्ठितः सन् विरहित इव विरौषि विलपसि । आत्मनस्त्वेतादृशी दशा यत् स्वप्रियां आसन्नामपि परं विप्रकृष्टां मत्वा विलक्षणामुत्कण्ठां भजमानो दरीदृश्यसे । अनेन विरहिणः वियोगदुःखं कियद्भवतीति अस्य अनभिज्ञो नासीति व्यज्यते । इति च इयतैव प्रसङ्गेन जायास्नेहात् प्रियानुरागात् पृथक् स्थित्या भिन्नदेशाश्रयेण, भिन्नाधिकरणत्वेन वा भवतः ईदृशी भीरुता कातरता । स्वप्रियायामनुरागस्य वैलक्षण्यात् कमलिनीदलेनाच्छन्नामासन्नामपि प्रियां मिथ्यैव दूरवर्तिनीं ज्ञात्वा इयत् कातर्यं भजसे । मयि च विधुरे परमार्थतोऽपि मदनुरागसान्द्रया प्रियया विरहितेऽपि तव कोऽयं प्रवृत्तौ वार्तावर्णनेऽपि पराङ्मुखः विमुखो भावः अभिप्रायः इच्छा वा । अनर्थकमेव मतेन प्रणयिनीविरहेण स्वयं अनिर्देश्योत्कण्ठायां निमग्नः सन्नपि विरहिणः विरहजन्यदुःखं कीदृशं भवतीति जानन् अपि स्वयं विरही अपि याथार्थ्येन प्रियया वियुक्तं तव बन्धुविरहिणं मां कथं नु वार्तामात्रप्रदानेन समाश्वासयितुं नेच्छसीति नाहं जाने इति उपालम्भपूर्वकं भर्त्सयति ।

अनेन अत्र भर्त्सनाख्यं नाट्यालङ्करणम् यदाह—"भर्त्सना तु परीवादः" इति । इयश्च परं विप्रलम्भपोषिका । वृत्तमपि हरिणी नामधेयं स्वरागेण विरहिणः दुःखं सर्वतः प्लुतमिव निःसारयत् विप्रलम्भं भृशमुपस्करोति । तल्लक्षणं यथा—"रसयुगहयैन्सौं म्रौ स्लौ गो यदा हरिणी तदा ॥" यदा नगणसगणौ, भगणरगणौ, सगणलघू गुरुश्च तदा हरिणीनाम छन्दः, अत्र च षड्भिश्चतुर्भिः सप्तभिश्च विरतिः ॥

जायते आत्मरूपेण भर्ता यस्यां सा जाया । "विग्रहः समरे काये" इति कोषः ॥ अत्र माधुर्याख्यो गुणः ॥ ३९ ॥

(उपविश्य) अस्य पक्षिणः अपि मया सहानुभूतिमदृष्ट्वा खिन्नमानसः आह—सर्वथा मदीयानां भाग्यस्य प्रारब्धस्य विपर्ययाणां प्रातिकूल्यस्यायं प्रभावो माहात्म्यम् । यदा इह पुरुषः दुःखचक्रे परिभ्रमति तदा सर्वतस्तं दुःखानि आवर्तयन्ति । अत्र आत्मन अधिक्षेपादधिक्षेपो नाम नाट्यालङ्कारः ।

यावदन्यमवकाशमवगाहिष्ये । ( द्विपदिकया परिक्रम्यमवलोक्य च ) अये !

इदं रुणद्धि मां पद्ममन्तःक्वणितषट्पदम् ॥
मया दष्टाधरं तस्याः ससीत्कारमिवाननम् ॥ ४० ॥

इतोगतस्यानुशयो मा भूदित्यस्मिन्नपि कमलसेविनि भ्रमरे प्रणयं करिष्ये ।

( अस्यान्तरे अर्धद्विचतुरस्रकः )

---

भवतु तावदन्यमवकाशं स्थानमवगाहिष्ये गमिष्यामि । ( द्विपदिकया परिक्रम्य अवलोक्य च ) अये इति विस्मये ।

**इदमिति**—परत्र गन्तुमिच्छुः राजा भ्रमररवेण रुद्धः स्वनिरोधकारणमाह । हंसस्य गतिसामान्यात्, पिकस्य रवसामान्यात्, श्रोणीदेशसामान्याच्च रथाङ्गस्य औपम्यं प्रेक्ष्य इतस्ततो निरुद्धो बभूव इहापि प्रेमपारवश्यात् सीत्कारसमेतं तस्या आननमिवसभ्रमरगुञ्जितं कमलं प्रेक्ष्य औपम्येन निरुद्ध इति ।

इदम् अन्तः अभ्यन्तरे क्वणिता गुञ्जन्तः षट्पदा भ्रमरा यस्मिन् तत् पद्मं कमलं मया दष्टमधरं यस्मिन् अत एव सीत्कारेण विधुवने आनन्दविशेषसूचकः सीदिति ध्वनिस्तेन समेतं तस्या आननं वदनम् इव तत्पद्मं मां रुणद्धि परत्र गमनान्निवारयति ।

भावस्तु—प्रणयी यदा स्वकामिन्यः अधरं भृशं चुम्बति तदा स्नेहसन्दोहसान्द्रायाः तस्या मुखात् यदृच्छयैव सीदिति आल्हादविशेषजनितो रवो निःसरति । स तु प्रणयिनः परमानन्दहेतुराकर्षकश्च । यथा नायिकायाः ससीत्कारमाननं आकर्षकं भवति तथैव सगुञ्जारवेण भ्रमरेण युतं पद्मं अयं मां अन्यत्र गमनोत्सुकमपि गन्तुं निवारयति इत्यर्थः । अत्र यथा भ्रमरे गुञ्जनं तथा आनने सीत्कारम् । आल्हादकत्वं अन्यतः चित्तवृत्तिनिरोधो वा साधर्म्यम् । अतः बिम्बानुप्राणितोपमालङ्कारः । ससीत्कारं प्रणयिनीवदनम् प्रियाय कियदाह्लादकं भवतीति तादृशोपमानोपमेयभूतस्य भ्रमरस्य विरोधवर्णनं चेह कियतीं कमनीयतामावहतीति सहृदयैः स्वयं विभावनीयम् ॥ अनुष्टुब् वृत्तम् ॥ ४० ॥

यद्यहमधुनैवान्यत्र गमिष्यामि तदा भ्रमरे मदीयप्रियाप्रवृत्तिप्रदानप्रार्थनामहं नाकरवम् इति पश्चात्तापः मा भूदिति वाञ्छया अस्मा अपि मत्प्रार्थ्यं प्रकाशेय । इत अस्मात्स्थानात् गतस्य अनुशयः पश्चात्तापः मा भूत् इति हेतोः अस्मिन्नपि कमलं सेवते असौ इति कमलसेविनि कमलान्तर्गते भ्रमरे प्रणयं स्वप्रार्थनां करिष्ये । किं त्वयापि मे प्रिया दृष्टा, तस्या वार्तां कामपि जानासि न वेति प्रार्थनां तावदस्मिन्नपि करिष्ये ।

अस्यान्तरे अर्धद्विचतुरस्रकः अयं तु नन्द्यावर्तान्यनामा कश्चन संस्थानविशेषः अर्धचतुरस्रकः स च पुनः द्विवारं कृतस्तेन अर्धद्विचतुरस्रकतां प्राप्तः ।

एक्कक्कमवड्ढिअगुरुअरपेम्मरसे ।
सरे हंसजुआणओ कीलइ कामरसे ॥ ४१ ॥
[ एकक्रमवर्धितगुरुतरप्रेमरसे ।
सरसि हंसयुवा क्रीडति कामरसे ॥ ४१ ॥ ]

( चतुरस्रकेणोपेत्याञ्जलिं बद्ध्वा )

मधुकर मदिराक्ष्याः शंस तस्याः प्रवृत्तिं
वरतनुरथवासौ नैव दृष्टा त्वया मे ।

( विभाव्य )

यदि सुरभिमवाप्स्यस्तन्मुखोच्छ्वासगन्धं
तव रतिरभविष्यत् पुण्डरीके किमस्मिन् ॥ ४२ ॥

---

लक्षणं तु "अस्यैव चेच्चरणयोरन्तरं स्यात् षडङ्गुलम् । वितस्तिमात्रमथवा नन्द्यावर्तं तदुच्यते" ॥ भ्रमरे स्वप्रणयस्योपक्रमं विधायान्तरा दृष्टं हंसं वर्णयति, उन्मत्तत्वात् "कथां प्रमत्तः प्रथमं कृतामिव"—न स्मरतीति युज्यते ।

**एकेति**—एकेन क्रमेण अर्थाद् विच्छिन्नेन भावेन वर्धितो गुरुतर आत्यन्तिकः प्रेमरसः यस्मिंस्तादृशे कामस्य रसः अभिनिवेशो यत्र तादृशि सरसि हंसयुवा क्रीडति । विलक्षणप्रीतिसन्दोहसन्दानितः कामाभिनिविष्टो हंसयुवा सरोवर-सांनिध्ये क्रीडति इति भावः । अनेन सरसः कामोद्दीपकत्वं व्यक्तम् । एतादृशं क्रीडन्तं हंसयुवानं दृष्ट्वा अहं विरहीति दुःखभागिति आत्मनः अवस्थायाः परि-ज्ञानं विप्रलम्भं भृशं उपकरोति इति ज्ञेयम् ॥ ४१ ॥

( चतुरस्रकः संस्थानविशेषः "नन्द्यावर्तस्थयोरर्धौ भवेदष्टादशाङ्गुलम् । अन्तरे चतुरैः स्थानं चतुरस्रं तदोदितम्" इति लक्षणलक्षितः तेन दृष्टपूर्वं उपेत्य अञ्जलिं बद्ध्वा भ्रमरं आह:— )

**मधुकरेति**—हे मधुकर द्विरेफ ! मदिराक्ष्याः मत्तनयनाया तस्याः मम प्रियायाः प्रवृत्तिं उदन्तं शंस कथय—क्व मे प्रिया, कां दशामवाप्तेति सर्वां वार्तां तत्सम्बन्धिनीं माम् निवेदय ।

( विभाव्य अथवा तं सूक्ष्मं दृष्ट्वा ) अथवा किं त्वया पृष्टेन, यतः सा वरं सुन्दरं तनुः शरीरं यस्याः सा शोभनाङ्गी सा मम प्रिया त्वया नैव कदापि दृष्टा भवेत् । कुत इदं विभाव्यत इत्याह—यदि त्वम् तस्याः मुखस्य उच्छ्वासः निश्वासस्तस्य सुरभिगन्धं अवाप्स्यः अलप्स्यथास्तदा किमस्मिन् पुण्डरीके तव रतिः प्रेम अभ-विष्यन्न कदापि । सरलार्थस्तु—हे भ्रमर ! मत्प्रियायाः वार्तामखिलां कथय । अथवा यतस्त्वमस्मिन् सिताम्भोजे प्रीतिं करोषि तेन विभाव्यते यत्सा मम प्रिया त्वया न दृष्टा यतो यदि सा दृष्टाभविष्यत्तदा तस्या अलौकिकसौरभ्यं निश्वासगन्धं परित्यज्य इहास्मिन् कमले कथं तव प्रीतिरभविष्यन्न कदापीत्यर्थः ।

अत्र मधुकरेति सम्बोधनम् मधु करोतीति तच्छीलः कृञो हेतुरित्यनेन टप्रत्ययान्तम् विलक्षणसौन्दर्यसंयुतम् । अनेन कमलगतमधु अधिकं प्रेय उत प्रियामुखकमलमधु इति विवेचनशक्तिशीलत्वमस्य व्यञ्जनाय द्विरेफपुष्पलिड्भृङ्गेति पदानामवज्ञा । तेन तस्य भृशं भर्त्सनं भवति यत्त्वं मधुकरः सन् क्वचित् तस्या मुखनिश्वासगन्धं सेवित्वा कथं कमले रतिः करोषीति । अथवा मधुकरः सन् त्वं तन्मुखगन्धं विहाय अत्र रतिं विदधास्यनेन विज्ञाप्यते यत् न दृष्टा सा इति विशेषार्थः ।

मदिराक्षीति विशेषणप्रदानेन नतभ्रुवस्तस्याः चञ्चलतारकत्वं घूर्णितत्वं व्यञ्जयन् मदिरासौरभ्यवत्तदीयमुखमस्तीति गम्यते । मदिराक्ष्याः लक्षणम्—"आघूर्ण्यमानमध्या या क्षामा चाञ्चिततारिका । दृष्टिर्विकसितापाङ्गमदिरा तरुणे मदे" इति भरतः । पुनरपि वरतनुरिति विशेषणेन वरितुं योग्या तनुर्यस्याः सा अनेन अवश्यं सेव्या सा इति वस्तु बोधयन् तदाश्रयस्त्वया परित्यक्तः इति विवेकभ्रान्तं कृतमिति व्यङ्ग्यम् । यतः 'हेमन्ते ये न सेवन्ते तेषां जन्म निरर्थक'मिति सहृदयानां कान्तानुभवः ।

तस्या उच्छ्वासस्य सुरभित्ववर्णनान्नायिकायाः उत्तमत्वं पद्मिनीत्वं च गम्यते । अत्र च प्रीतिपदं विहाय रतिपदग्रहणेन रमणमिति ध्वन्यते ।

पुनश्च पुण्डरीकपदप्रदानेन कमलस्य नितान्तं हेयत्वं प्रतिपाद्यते । मडि भूषायां पुडि चेति ( भ्वा. प. से. ) धातोः कर्करीकादयश्च ( उ. ४।२०। ) इति सूत्रेण अरीकन्प्रत्ययान्तस्य पुण्डरीकपदस्य सिताम्भोजवाचकत्वात् परमसुन्दररक्तरङ्गहीनत्वात् रक्ताभावे कथं रतिर्योग्येति अर्थो बोध्यः । सितस्य चाम्बुजस्य कथं प्रीतिकारकत्वं न कथमपीति ज्ञेयम्, पुण्डरीकस्य सितत्वात्, सितस्य रङ्गहीनस्य नयनानन्दकाभावात् एतादृशि अपि अरोचके वस्तुनि तस्याः परमगन्धवन्तं मुखनिश्वासं समाघ्राय कथं प्रीतिर्भाविनी न कदापि किन्तु त्वं तु अत्रैव रमसे अनेन परिज्ञायते यत्सा त्वया न दृष्टेति भावः ।

इत्थमत्र प्रतिपदं चमत्कारो दृश्यते । अत्र मधुकरस्य भर्त्सनात् परीवादो नाम नाट्यालङ्करणम् ।

अत्र च पुण्डरीकस्य सामान्योपमानस्यापेक्षया उपमेयभूतस्य तदाननस्य वैशिष्ट्यप्रतिपादनात् व्यतिरेकालङ्कारो व्यङ्ग्यः । अत्र मधुकरमदिराक्षीपुण्डरीकादिशब्दानां साकूतत्वात् साभिप्रायत्वाद्वा परिकरालङ्कारः "विशेषणैर्यत्साकूतैरुक्तिः परिकरः स्मृतः" पुनश्च यतस्त्वमत्र पुण्डरीके रज्यसि अतस्त्वया सा न दृष्टा इति द्वयोः वस्तुनोः साध्यसाधकत्वानुमानालङ्कृतिः । पूर्वार्धोत्तरार्धयोर्हेतुत्वात् काव्यलिङ्गम् । तस्या आननस्यालौकिकत्वप्रतिपादनादुदात्तालङ्कारश्च । "उदात्तं वस्तुनः सम्पत् महतां चोपलक्षणमिति" । तव रतिः किमभविष्यत् न कदापीति काकुः । प्रथमपादे उक्तस्य अथवेत्यनेन निषेधादाक्षेपालङ्कारश्चमत्कारी ।

( इति द्विपदिकया परिक्रम्यावलोक्य च ) अये ! करेणुसहायः नागाधिराजो नीपस्कन्धविषण्णस्तिष्ठति । यावदेनं गच्छामि ।

( कुलिका )—

करिणीविरहसंताविअओ [ करिणीविरहसन्तप्तः । ]

( मन्दघटी )—

काणणे गंधुद्धअमहुअरु [ कानने गन्धोद्धतमधुकरः ॥ ४३ ॥ ]

( अतोऽन्तरे विलोक्य ) अथवा नायमुपसर्पणकालः ।

अयमचिरोद्गतपल्लवमुपनीतं प्रियतमाग्रहस्तेन ।
अभिलेढु तावदासवसुरभिरसं शल्लकीभङ्गम् ॥ ४४ ॥

---

अत्र च यदि त्वं अवाप्स्यस्तदा अभविष्यत् किमिति हेतुहेतुमद्भावे असंभाविनि अर्थे लङ् । अत्र औदार्यं नाम गुणः ।

अत्र च मधुरताव्यञ्जकं मालिनी नाम छन्दः । ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ॥ ४२ ॥

( इति द्विपदिकया परिक्रम्य अवलोक्य च ) अये इति विस्मये ! करिणीसहायः स्वप्रियतमासमेतः नागाधिराजो गजेन्द्रः नीपस्य धूलिकदम्बाख्यवृक्षविशेषस्य स्कन्धे निषण्णः समासीनः तिष्ठति विद्यते । यावदेनं गच्छामि । कुलिका गीतिविशेषः । मन्दघटी अपि तथा ।

करिण्या गजस्त्रिया विरहेण सन्तापितः गन्धेन गर्वेण उद्धृतः लिप्तः तथा मधु गृह्णन् गजो भ्रमतीति शेषः ।

"गन्धः सम्बन्धलेशयोः, गन्धकामोदगर्वेषु" इति हैमः ॥ ४३ ॥

अत्र गजान्यपदेशेन स्वावस्थावर्णनपटुः अर्धोक्त एव अथवेत्यनेनार्थान्तरं उपस्थापयति अवसरमनुचितं वीक्ष्य अतः अन्तरे मध्ये विलोक्य ( अथवा नाहं गमिष्यामि अयमुपसर्पणस्य तन्निकटगमनस्य कालः समयो न, तत्र गमनं नोचितमिति भावः । )

**अयमिति**—अयं गजः प्रियतमायाः अग्रहस्तेन उपनीतमानीतम् अचिरेणोद्गतं नवोत्पलं पल्लवं यस्य तत्, आसवो मदिरा तद्वत् सुरभिः सुगन्धी रसः यस्य तादृशं शल्लकाख्यगजप्रियतरुविशेषम् तस्य भङ्गम् नवीनोद्भेदं अभिलेढु आस्वादयतु । प्रियतमया शल्लकीतरोः नवोद्भेदमानीतम् तम् च स्वच्छन्दतया आस्वादने तत्र गत्वा अहं विच्छेदं कर्तुं नेच्छामि अन्यत्र गमिष्ये इति भावः । अत्र लिह्धातोर्लेटिप्रयोगः । "भंगस्तरङ्ग उद्भेदे" इति लोचनः । इयमार्या ॥ ४४ ॥

(स्थानकेनावलोक्य) अये! कृताहारकः संवृत्तः । भवतु । समीपमस्य गत्वा पृच्छामि । (अनन्तरे चर्चरी)

हइं पैं पुच्छिमि आअक्खहि गअवरु
ललिअपहारे णासिअतरुवरु ।
दूरविणिज्जिअससहरकन्ती
दिट्ठी पिअ पैं संमुह्जन्ती ॥ ४५ ॥

[अहं त्वां पृच्छामि आचक्ष्व गजवर
ललितप्रहारेण नाशिततरुवर ।
दूरविनिर्जितशशधरकान्ति-
र्दृष्टा प्रिया त्वया संमुखं यान्ती ॥ ४५ ॥]

(पदद्वयं पुरत उपसृत्य)

---

स्थानकं कश्चन आलापविशेषः "स्थानकं तद्वदेव स्यात् पृथग्भूतविदारिकम्" इति नाट्याचार्याः । तेन आलापेन विलोक्य अये इति आश्चर्ये । अयं गजेन्द्रः कृताहारकः कृतभोजनः संवृत्तः । अनेन स्वकीयमाह्निकं निर्वृत्तम् भोजनादिकं कृतम् । भवतु अस्य समीपं गत्वा पृच्छामि । (अनन्तरे चर्चरीरागेण प्रियायाः वृत्तान्तं पृच्छति ।)

**अहमिति**—हे गजवर! अहं त्वां पृच्छामि आचक्ष्व कथय! ललितेन मृदुना प्रहारेण नाशितः तरुवरः येन सः तत्सम्बुद्धौ हे गजवर! त्वया दूरेण दूरं अत्यन्तं वा विनिर्जिता तिरस्कृता अपहसिता वा शशधरस्य चन्द्रमसः कान्तिर्यया तादृशी मम प्रिया तव संमुखं यान्ती गच्छन्ती दृष्टा किम्? हे गजेन्द्र! स्वस्याह्लादकत्वनिष्कलङ्कत्वादिगुणैरत्यन्तं पराजितपार्वणशर्वरीश्वरा मम प्रिया किं त्वया दृष्टा इति प्रश्नः ।

अत्र शशधरपदेन शशं कलङ्कं धारयतीति शशधर इति व्युत्पत्त्या सकलङ्कत्वं तस्य द्योतनाय पदस्यास्य ग्रहणम् । पुनश्च चन्द्रमसि कलङ्कदर्शनम् तस्मिन् पूर्णे सति भवति अतः शशधरपदेन चन्द्रमसः पार्वणत्वं गम्यते ।

अत्र चन्द्रमसः उपमानभूतस्य न्यग्भावात् तदाननस्य च वैशिष्ट्यप्रतिपादनात् व्यतिरेकालङ्कारः । अत्र च प्रथमद्वितीयचरणान्तौ तृतीयचरमचरणान्तौ सदृशौ यथा वरु-वरु; कन्ती-जन्ती इत्यतः अन्त्यानुप्रासालङ्कारश्च—यदुक्तं दर्पणे, "व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु । आवर्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत्" ॥ ४५ ॥

(पदद्वयं पुरतः उपसृत्य चलित्वा)

मदकलयुवतिशशिकला गजयूथप यूथिकाशबलकेशी ।
स्थिरयौवना स्थिता ते दूरालोके सुखालोका ॥ ४६ ॥

(सहर्षमाकर्ण्य) अहह अनेन प्रियोपलब्धिशंसिना मन्द्रकण्ठगर्जितेन समाश्वसितोऽस्मि । साधर्म्याद्भूयसी मे त्वयि प्रीतिः ।

मामाहुः पृथिवीभृतामधिपतिं नागाधिराजो भवान्
अव्युच्छिन्नपृथुप्रवृत्ति भवतो दानं ममाप्यर्थिषु ।

---

**मदकलेति**—हे गजयूथप यूथनाथ! मदेन कलः मधुरः अस्पष्टः शब्दः यासां तादृशीषु युवतिषु शशिकला चन्द्रमसः कलाभूता, यूथिकापुष्पैः शबलाः कर्बुरिताः केशाः यस्याः सा, स्थिरं अविनाशि यौवनं यस्याः तादृशी सुखः आलोको यस्याः सा प्रियदर्शना मम प्रिया ते दूरालोके दूरत अपि आलोके दर्शनपथि स्थिता किम् । पूर्वस्मिन् पद्ये सामान्यदर्शनस्थितत्वं तस्याः पृच्छन्नुत्तरस्याकांक्षामप्रदर्श्यैव निकटे न दृष्टा चेत् दूरतोऽपि दृष्टा किमिति ससंभ्रमं झगिति पृच्छति ।

भावस्तु—मधुरालापं कुर्वन्तीषु अन्यासु तारकास्थानीयासु युवतिषु शशिकलास्थानीया यूथिकाख्यकुसुमैश्चित्रितकेशपाशा प्रियदर्शना मम प्रिया किन्त्वया दूरतोऽपि दृष्टा? शशिकलेति प्रदानेन तस्याः तन्वीत्वं निष्कलङ्कत्वादधिकमाह्लादकत्वं च ध्वन्यते । तस्याः देवयोनित्वात् स्थिरयौवनेति विशेषणं समीचीनं विज्ञापकञ्च ।

कलः मधुरः अस्पष्टो मृदुर्वा शब्दः "कलस्तु मधुराव्यक्तशब्दे" इति लोचनः । शबलं कर्बुरितम् चित्रितं वा "चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः ।

अत्र अनुप्रासालङ्कारस्तु स्फुटमेवावगम्यते । पुनश्चात्र शुद्धपरम्परितरूपकमलङ्कारः । यदा अन्याः युवतयः तारात्वं भजेयुस्तदा उर्वशी शशिकलात्वं लभेत इति रूपकस्य परम्परागतत्वादयमलङ्कारः—यदुक्तं काव्यप्रकाशे, "नियतारोपणोपायः स्यादारोपः परस्य यः । तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ।" इयमार्याजातिः ॥ ४६ ॥

(सहर्षमाकर्ण्य श्रुत्वा) अहह! इति हर्षे । अनेन प्रियायाः उपलब्धिः प्राप्तिः तच्छंसिना दर्शकेन मन्द्रेण गंभीरेण कण्ठगर्जितेन अहं समाश्वसितः अस्मि । राज्ञः वचोऽनु गजेन गर्जितं तन्निशम्य हर्षप्लुतो राजा प्रियाया वृत्तम् अनेन विज्ञापयितव्यमिति ज्ञात्वा समाश्वसितः तस्थौ । साधर्म्यात् तव च मम च प्रायो बहुषु अंशेषु सादृश्यात्त्वयि मे भूयसी महती प्रीतिः । "मन्द्रस्तु गम्भीरे" इत्यमरः ।

**मामाहुः इति**—सादृश्यं दर्शयति—मां पृथिवीभृतां राज्ञामधिपतिं अधिराजं आहुः । भवानपि नागानामधिराजः । अहं राजाधिराजः भवान् नागाधिराज इत्युभयत्र साम्यम् । भवतः दानं दानवारि मदवारि वा अव्युच्छिन्ना अप्रतिहता

स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेयं वशा
सर्वं मामनु ते प्रियाविरहजां त्वं तु व्यथां मानुभूः ॥ ४७ ॥

सुखमास्तां भवान् । ( द्विपदिकया परिक्रम्यावलोक्य च ) अये ! अयमसौ सुरभिकन्दरो नाम विशेषरमणीयः सानुमान् । प्रियश्चायमप्सरसाम् । अपि नाम सुतनुरस्योपत्यकायामुपलभ्येत ।

---

सन्तता वा पृथ्वी भूयसी प्रवृत्तिरुद्गमो यस्य तादृशमस्ति । सन्ततप्रवाहि तव दानम् । तथैव ममापि अर्थिषु याचकेषु दानं वितरणं त्यागो वा अव्युच्छिन्ना सन्तता पृथ्वी बहुला प्रवृत्तिः प्रसारो यस्य तत् अस्ति । त्वया दानं मदवारि अर्थिभ्यः भृङ्गेभ्यः सन्ततं दीयते । मयाऽपि भूरिदानं याचकेभ्यः दीयते । स्त्रीरत्नेषु प्रमदाललामभूतेषु उर्वशी मम प्रियतमा । तव च इयं वशा करिणी यूथे प्रियतमा । प्रमदासु मम उर्वशी प्रिया इयं च करिणी यूथे ते प्रिया । अत्रापि तव च मम च सादृश्यम् । माम् अनु मत्सदृशं ते तव सर्वं अस्ति । तव मम च सर्वतः साम्यम् । किन्तु त्वं प्रियायाः विरहेण जन्यां व्यथां पीडाम् अहमिव मा अनुभूः ज्ञासीः ।

भावस्तु—यथा त्वं नागाधिराजः तथा अहमपि राजाधिराजः । यथा भृङ्गेभ्यः त्वया अविच्छिन्नं दानम् ( मदवारि ) दीयते तथैव याचकेभ्यः मया अविरतं दानं ( वितरणम् ) क्रियते । यथा तव यूथे इयं करिणी प्रियतमा तथैव ललनासु उर्वशी मम प्रियतमा । इत्येवं सर्वं त्वयि मयि च समानम् । किन्तु त्वं प्रियासनाथः अहं प्रियावियुक्त इदमेव न्यूनत्वमिति हा हा ! इति तात्पर्यम् ।

अत्रोपमेयस्य राज्ञः प्रियासान्निध्याभावरूपापकर्षप्रदर्शनान्न्यूनत्वपर्यवसायी व्यतिरेकालङ्कारः—यदुक्तं कुवलयानन्दे "व्यतिरेको विशेषश्चेदुपमानोपमेययोरिति ।" प्रवृत्तेः प्रवाहप्रसृतिवाचकत्वेन द्व्यर्थित्वात् श्लेषालङ्कारश्च । स्त्रीषु श्रेष्ठा स्त्रीरत्नम् "जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते" इति । "दानं गजमदे त्यागे" इति अमरः । वशा करिणी "वशा योषासुतावन्ध्यास्त्रीगुर्वीकरिणीष्वपि" इति विश्वलोचनः । प्रवृत्तिः प्रवाहः, प्रसारश्च "प्रवाहे वृत्तवृत्तान्ते प्रसारोदन्तयोरपि । प्रवर्तने च वार्तायां प्रवृत्तिः समुदीरिता" इति वचनात् । अधिराज इति राजाहःसखिभ्यष्टजित्यनेन टच्प्रत्ययः ।

शार्दूलविक्रीडितं वृत्तम् । अत्र च प्रथमचरणे आदौ स्वस्य अवस्था पश्चात् गजस्योक्ता तथैव च तृतीयेऽपि किन्तु तादृशस्य प्रक्रमस्य द्वितीयचरणे विरुद्धत्वात् भग्नप्रक्रमतादोषप्रसङ्गः ॥ ४७ ॥

सुखं प्रसन्नतया भवान् आस्तां तिष्ठतु । ( द्विपदिकया परिक्रम्य विलोक्य च ) अये ! विस्मये । अयं पुरो दृश्यमानः असौ सुरभयः कन्दराः दर्यः यस्य तादृशः सुरभिकन्दराभिधानः विशेषेण रन्तुं योग्यः रमणीयो मनोहरो, सानु शिखरं अस्यास्तीति सानुमान् पर्वतः दृश्यते । अयं च गिरिः अप्सरसां प्रियः ।

( परिक्रम्यावलोक्य च ) कथमन्धकारः । भवतु विद्युत्प्रकाशेनावलोकयामि । कथं मदीयैर्दुरितपरिणामैः मेघोदयोऽपि शतह्रदाशून्यः संवृत्तः । तथापि शिलोच्चयमेनमपृष्ट्वा न निवर्तिष्ये ।

( अनन्तरे खण्डिकः )

पसरिअखरखुरदारिअमेइणि वणगहणे अविचलु ।
परिसप्पइ पेच्छह लीणो णिअकज्जुज्जुअ कोलु ।
[ प्रसृतखरखुरदारितमेदिनिर्वनगहनेऽविचलः ।
परिसर्पति पश्यत लीनो निजकार्योद्युक्तः कोलः ॥ ४८ ॥ ]

---

अपि नामेति सम्भावनायाम् । सुसम्भवमिदं यत् सुतनुः मम प्रिया अस्य पर्वतस्य उपत्यकायामासन्नायां भूमौ उपलभ्येत प्राप्येत । अत्र प्राप्तिर्नाम नाट्यलक्षणम् । "उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका" इत्यमरः; "उपाधिभ्यां त्यकन्नासन्नारूढयो"रित्यनेन आसन्नार्थे उपोपसर्गात्त्यकन्प्रत्ययः ।

( परिक्रम्यावलोक्य च ) कथमन्धकारस्तिमिरम् ? भवतु विद्युतः सौदामिन्याः प्रकाशेन अवलोकयामि । "तडित् सौदामिनी विद्युत्" इति कोषः । कथं मदीयैः दुरितानां पापानां परिणामैः फलैः मेघोदयोऽपि शतह्रदया विद्युता शून्यः संवृत्तः । शतं ह्रदा अर्चींषि यस्याम् इति शतह्रदा अच्प्रत्ययः । "शतह्रदा स्त्रियां वज्रे सौदामिन्यां च कीर्तितेति" । विद्युता हीनोऽयं मेघोदय इति स्वप्रारब्धं दूषयति । यद्यपि अन्धकारघनमिदं स्थलम्, विद्युतामपि प्रकाशेन हीनो मेघोदयस्तथापि शिलोच्चयं पर्वतमेनमपृष्ट्वा मत्प्रियोदन्तं अननुयुज्य न निवर्तिष्ये । अत्र उन्मत्तावस्थागतो हठः प्रतिपाद्यते ।

अनन्तरे खण्डिका गीतिविशेषः "पर्यायेण शनैस्तिर्यङ् नतमुन्नं धुतं शिरः । श्रीरागकुम्भतालेन निबद्धा खण्डिका मता" ॥ कुम्भतालश्च 'कामबाणद्रुता यत्र अर्धचन्द्रस्ततः परम् । दविरामो लघुश्चैकः बिन्दुश्चार्धद्रुतो भवेत्' इति ॥ दविरामस्तु—"दविरामो लघुद्वन्द्वद्रुतो लघुविरामवान्" ॥

अथ वराहमिषेणान्योक्त्या आह—

**प्रसृतेति**—अविचलः धीरः निजे कार्ये कन्दमूलान्वेषणरूपे उद्युक्तः सन्नद्धः वनगहने लीनः प्रसृतैः दीर्घैः खरैस्तीक्ष्णैः खुरैः दारिता उत्खाता मेदिनी भूः येन तादृशः कोलो वराहः परिसर्पति इतस्ततः भ्रमतीति पश्यत ! राज्ञः पक्षे तु धीरः क्रीडार्थं वनगहने लीनः प्रियतमया वियुक्तः तदन्वेषणरूपकार्ये निजे उद्युक्तः कृतयत्नः विरहेण सन्तप्तः हस्तपादेन पृथ्व्यामास्फालनं कुर्वन् इतस्ततः परिभ्रमतीति पश्यत ।

इह वराहमिषेण स्वावस्थायाः वर्णनात् अन्योक्तिः । वराहस्य क्षुधितस्येह स्वभाववर्णनात् स्वभावोक्तिरलङ्कारः । अत्र पूर्वं प्रवृत्तां शिलोच्चयवर्णनां विहाय कोलवर्णनं उन्मत्तत्वजन्यं विप्रलम्भोपस्कारकं भवति ॥ ४८ ॥

अपि वनान्तरमल्पभुजान्तरा
श्रयति पर्वत पर्वसु सन्नता ।
इयमनङ्गपरिग्रहमङ्गला
पृथुनितम्ब नितम्बवती तव ॥ ४९ ॥

---

**अपीति**—अपिः प्रश्ने । हे पृथुः उच्चैः नितम्बः शिखरं यस्य सः तत्सम्बुद्धौ बृहत्सानो पर्वत! इयं मम प्रिया तव वनान्तरं श्रयति शिखरस्थवनगहने निवसति किम्? कीदृशी सा इत्यभिज्ञानाय तां विशिनष्टि—अल्पं सूक्ष्मं भुजयोर्बाह्वोः अन्तरं यस्याः सा पीवरकुचेत्यर्थः । अनेन पीवरस्तनीत्वं तस्याः व्यज्यते । पर्वसु अस्थिग्रन्थिषु संनता नम्रा आनता वा मांसलत्वादानम्रेति भावः । अनङ्गस्य कामस्य परिग्रहेण स्वावासस्थानत्वेन स्वीकारवशात् मङ्गला सुतरां शोभना तथा नितम्बवती पृथुलकटी तादृशी मम प्रिया इह वसति किमिति प्रश्नः ।

भावार्थस्तु—पीनस्तनीत्वात् अल्पक्रोडा मांसलसन्धिदेशा कामदेवस्यावासभूता अहीननितम्बा मम प्रिया हे बृहत्कटकगिरे! तवाऽस्मिन् वनान्तरे निवसति किम् इति प्रश्नः ।

वनस्य अन्तरम् मध्यभागस्तस्मिन्; अत्र श्रयतेर्योगे द्वितीया । भुजान्तरमित्यत्र भुजयोरन्तरमवकाशः । "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये" इत्यमरः। परिग्रहस्तु स्वीकारः "परिग्रहः कलत्रे च मूलस्वीकारयोरपि" इत्यजयः।

नितम्बः गिरिशिखरे, नायिकायाः कटिपश्चाद्भागे श्रोणिदेशे वा । यदाह विश्वः "कटीरके नितम्बः स्यात् शिखरे स्कन्धरोधसोरिति" ।

अत्र वृत्त्यनुप्रासस्तु बहुलः । यथा प्रथमचरणेऽन्तरमन्तरा । अनङ्गमङ्गला इत्यत्रापि । पर्वत-पर्वसु, नितम्बनितम्बवती इत्यत्र समानानुपूर्व्या आवर्तनात् पृथगर्थत्वाच्च यमकमलङ्कारः । तल्लक्षणं यथा, 'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते" । अत्र इयमिति पदस्य पुरोदृश्यमानत्वमर्थः । राजा स्वप्रियैकतानस्मृत्या अदृश्यमानामपि तां सर्वत्र पश्यन्निव निकटवर्तिनीमेव मनुते (cf: Thy absence makes thy presence all pervading and I am baffled) अथवा इयमितिपदेन सर्वत्र मया सान्वेषिता किन्तु न लब्धा, सुरभिकन्दरोऽयं सानुमान् अप्सरसां प्रियः अतः अत्र सा अवश्यमेव भवेदिति अर्थप्रकाशनाय इयमिति पदम् । अतः अत्र दूरवर्तित्ववाचकस्य तच्छब्दस्य प्रयोगाभावे तदर्थे इयमितिपदप्रयोगेणावाचकत्वं दोषो न शङ्कनीयः । अत्र माधुर्यसौकुमार्ये शब्दगुणौ । लक्षणे तु प्रागुक्ते । पुनश्चात्र कान्तिसमाधिप्रसादाख्या अर्थगुणाः—कान्तिस्तु "अविदग्धवैदिकादिप्रयोगयोग्यानां पदानां परिहारेण प्रयुज्यमानेषु पदेषु लोकोत्तरशोभाजनकमौज्वल्यं कान्तिः" ।

समाधिस्तु "बन्धगाढत्वशिथिलत्वयोः क्रमेणावस्थायां समाधिः" । यावदर्थकपदरूपमर्थवैमल्यं प्रसादः इति लक्षणयोगात् ।

कथं तूष्णीमेवास्ते । शङ्के विप्रकर्षान्न शृणोति । भवतु समीपमस्य गत्वा पृच्छामि । ( अनन्तरे चर्चरी )

फलिहसिलाअलणिम्मलणिब्भरु
बहुविहकुसुमविरइअसेहरु ।
किंणरमहुरुग्गीअमणोहरु
देक्खावहि महु पिअअम महिहरु ॥ ५० ॥

[ स्फटिकशिलातलनिर्मलनिर्भर
बहुविधकुसुमविरचितशेखर ।
किन्नरमधुरोद्गीतमनोहर
दर्शय मम प्रियतमां महीधर ॥ ५० ॥ ]

सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥ ५१ ॥

---

अत्र द्रुतविलम्बितं वृत्तम् "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ ४९ ॥

पर्वतादपि प्रत्युत्तरमाकाङ्क्षन् राजा तदलभमान आह—कथं तूष्णीमेवास्ते मौनेनैव वर्तते । अत्र पर्वतादपि उत्तरं लिप्सोः राज्ञः भ्रान्तिः । शङ्के यदयं शिलोच्चयः विप्रकर्षात् दूरत्वात् न शृणोति यद् मया पृष्टमिति । भवतु—अस्य समीपं गत्वा पृच्छामि । ( अनन्तरे चर्चरी )

**स्फटिकेति**—स्फटिकाः श्वेतमणयः तन्मयैः शिलातलैः निर्भरमत्यन्तं निर्मलस्तादृश, बहुविधैः नानारङ्गसौरभ्यवद्भिः कुसुमैः विरचितो गुम्फितः शेखरः शिखा यस्य तादृश ! किन्नराणां सुरगायकानां मधुरैः उद्गीतैः उच्चैः गीतैः मनोहर रमणीय महीधर मम प्रियतमां दर्शय । अनेन महीधरविशेषणत्रयेण महीधरस्य निर्मलत्वसंस्थापनात् अत्र सा कुत्रापि अविज्ञाता गूढा वा स्थातुं नार्हति । अवश्यमेव सा परिचेतुं योग्यास्तीति बोधः । अत्र अन्त्यानुप्रासः ।

निर्मलनिर्भरेत्यत्र प्राकृते पूर्वनिपातानियमात् पौर्वापर्यविपर्यये न कापि हानिः अतः निर्भरं अत्यन्तं निर्मलः इति अर्थः ॥ ५० ॥

( चर्चरिकयोपसृत्य अञ्जलिं बध्वा ) चर्चरिकया उपसृत्य उपेत्य प्राञ्जलिरुत्तरं पद्यमुवाच । चर्चरिका गतिविशेषः, तालविशेषो वा "विरामान्तद्रुमद्वन्द्वं लघुन्यष्टौ च चर्चरी" इति भरतः ।

**सर्वक्षितिभृतामिति**—यथा पूर्वं प्रतिज्ञातं तथा समीपं गत्वा गिरिराजमाह—राजा कथयति—

( तथैव प्रतिशब्दं शृणोति । आकर्ण्य सहर्षम् ) कथं यथाक्रमं दृष्टे-त्याह । भवतु । अवलोकयामि । ( दिशोऽवलोक्य सखेदम् ) अये ममैवायं कन्दरान्तरविसर्पी प्रतिशब्दः । ( इति मूर्च्छति ) ( उत्थायो-पविश्य सविषादम् ) अहह श्रान्तोऽस्मि । यावदस्या गिरिणद्यास्तीरे तरङ्गवातमासेविष्ये । ( द्विपदिकया परिक्रम्यावलोक्य च ) इमां नवा-म्बुकलुषां स्रोतोवहां पश्यता मया रतिरुपलभ्यते ।

---

हे सर्वेषां क्षितिभृतां पर्वतानां नाथ गिरिराज ! अस्मिन् रम्ये रन्तुं योग्ये विहरणीये वनान्ते वनोद्देशे मया विरहिता वियुक्ता सर्वैरङ्गैः सुन्दरी परमचारुरूपा रामा त्वया दृष्टा किम् ? अनुष्टुब्वृत्तम् ॥ ५१ ॥

( तथैव सर्वक्षितिभृतामितिशब्दं शृणोति ) सहर्षमाकर्ण्य कथं यथाक्रमं तयै-वानुपूर्व्या दृष्टेत्याह—

यद्राज्ञा सर्वक्षितिभृतामिति प्रोक्तम् तदेव प्रतिध्वनितम् गिरिणा तस्य अर्थ-मित्थं कृत्वा राजा जानाति यत्तेन दृष्टेत्युक्तमिति । प्रतिध्वनितस्यार्थः—हे सर्वेषां क्षितिभृतां राज्ञां नाथ हे राजाधिराज ! अस्मिन् रम्ये वनान्ते त्वया विरहिता सर्वाङ्गसुन्दरी रामा मया दृष्टा इति क्षितिभृत्पदे श्लेषग्रहणात्, त्वयामयापदयोः विपर्ययेणान्वयात् राज्ञः पूर्वप्रोक्तस्योत्तरं भवति ।

अत्र सर्वक्षितिभृतामितिपद्ये त्रिगताख्यं वीथ्यङ्गमुक्तं भवति तद्यथा "त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः" । एवं च मया विरहितेत्येतावति समुदाये मद्वियोगवती त्वया दृष्टेति पुरूरवसः पर्वतविषयं प्रश्नवाक्यं भवति यदा तु मयेति-विच्छिद्य पूर्ववाक्यसम्बन्धि क्रियते तदा त्वया विरहिता सती मया दृष्टेति उत्तर-वाक्यविधाने पदच्छेदेन पठितिसमाख्यं सौन्दर्यम् यदुक्तं भोजदेवेन "काकुस्वर-पदच्छेदभेदाभिनयकान्तिभिः । पाठो योऽर्थविशेषाय पठितिः सेह षड्विधा" ॥

भवतु—अवलोकयाम्यस्मिन् वनान्ते क्व सा इति । ( दिशोऽवलोक्य सखे-दम् ) नेदं गिरिराजस्य प्रत्युत्तरम् किन्तु ममैवायं कन्दरान्तरे विसर्पी गुहायां प्रतिध्वनितः शब्दः । इति ज्ञात्वा मूर्च्छति । अत्र ईप्सितार्थप्रतीघातात् प्रतिषेधो नाम विमर्शसन्ध्यङ्गं प्रतिपादितम् । अत्र विप्रलम्भस्य परमो वेगः ।

( उत्थाय संज्ञां लब्ध्वा उपविश्य सविषादम् सशोकम् ) अहह ! इति खेदे । श्रान्तोऽस्मि । यावदतः अस्या गिरिणद्याः गिरेः प्रभूतायाः नद्याः तरङ्गैः संस्पृश्यमानं अत एव शीतलं वातं आसेविष्ये । शीतलवातस्य श्रमापनोदकत्वात् विरहाद्विहाराच्च श्रान्तो राजा शिशिरवातमासेवितुं कामयते । इह खेदाख्यं विमर्शसन्ध्यङ्गमुक्तं भवति यदाह "मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः" ।

( द्विपदिकया परिक्रम्य विलोक्य च )

इमां पुरो दृश्यमानां नवं यद् अम्बु जलं तेन कलुषामाविलां स्रोतोवहां नदीं

कुतः—

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
पदाविद्धं यान्ती स्खलितमभिसन्धाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता ॥ ५२ ॥

---

पश्यता मया रतिः प्रीतिः आसक्तिर्वा उपलभ्यते । वर्षासमये नूतनजलप्रवाहेण नदीनां जलं मृदाविलं भवति । तदेवाह यत् नवजलमिश्रणाविलां नदीमिमां प्रेक्षमाणस्य मम चेतसि परा प्रीतिर्जायते इति भावः ।

कुत इति रतिप्राप्तेः कारणमाह—

**तरङ्गेति**—स्वप्रियां कोपेन नदीत्वेन परिणतामिव परिज्ञाय तादात्म्यमाह—तस्याः कोपवर्णनम्—

तरङ्गाः भ्रुवः भङ्गाः इव यस्याः सा, उभयेषां कुटिलत्वात् नदीतरङ्गा एव कोपनायास्तस्या भ्रूभङ्गा इति निरूप्यते । क्षुभितानां नदीपारं डयमानानां विहगानां पक्षिणां श्रेणिः पङ्क्तिः रशना मेखला इव यस्याः सा । नदीसान्निध्ये विहगानां प्रायशो दर्शनात् स्त्रियां च काञ्चीदर्शनात् विहगपङ्क्तिः क्रोधनायास्तस्याः काञ्चीति रूप्यते । संरम्भेण कोपेन मानेन वा शिथिलं श्लथं वसनं वस्त्रमिव फेनं विकर्षन्ती । क्रुधि परिधानं शिथिलं भवति । नदीनां स्वभावोऽयं यत्ताः फेनं वेगेनाकर्षन्ति । उभयोः श्वेतत्वात् विकर्षणरूपसाधर्म्यात् फेनवसनयोः साधर्म्यनिरूपणपूर्वकं नदीनायिकयोस्तादात्म्यं रूप्यते । कुपिता स्त्री कुटिलया गत्या चलति । तथैवेयं नदी अपि वक्रेण प्रवाहेण गच्छति इति उभयोः साम्यम् । पदैः आविद्धं कुटिलं यथा स्यात्तथा यान्ती बहुशः बहुविधं मम स्खलितं अपराधचयं अभिसन्धाय मनसि कृत्वा सा असहना मम प्रियतमोर्वशी ध्रुवं निश्चयेन नदीभावेन नदीरूपेण परिणता ।

"स्खलितं तूचिताद्भ्रंशः स्खलितं चलिते त्रिषु" इति लोचनः । पदाविद्धं स्खलितविशेषणम्, बहुशश्चेति क्रियाविशेषणम् । अत्र उत्प्रेक्षालङ्कृतिः; सा च उपमोत्प्राणिता; तयोरङ्गाङ्गिभावसङ्करः ।

सा इयमित्यत्र सोऽयं देवदत्तः इतिवत् प्रत्यभिज्ञा । तद्देशावच्छिन्नतत्कालावच्छिन्नायाः एतद्देशैतत्कालावच्छिन्नायाश्च तस्याः विरोध्यंशपरिहारेण तमेवार्थं लक्षयति इति अत्र जहदजहल्लक्षणा । अभिसम्पूर्वकदधातेः प्रायशः काव्येषु वञ्चनव्यापारे शक्तिरभिमता यथा भवभूतिः "जनं विद्वानेकः सकलमभिसन्धाय कपटमिति", स्मरणार्थे तावत् गौणः प्रयोगः झगित्यप्रतीतिकृदेव एवञ्चेह "स्खलितमनुसन्धाये"ति पाठः साधीयान् भवेत् ॥

वृत्तं च शिखरिणी । "रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" । यस्मिन्

भवतु प्रसादयामि तावदेनाम् । ( अनन्तरे कुटिलिका )

पसीअ पिअअम सुन्दरि एणए
खुहिआकरुणविहङ्गमए णए ।
सुरसरि तीरसमूसुअएणए
अलिउलझंकारिएणए ॥ ५३ ॥
[ प्रसीद प्रियतमे सुन्दरि एनया
क्षुभिताकरुणविहङ्गमके नत्या ।

---

यगणमगणनगणसगणभगणाः लघुः गुरुश्च तद्वृत्तं शिखरिणी नाम । अत्र षड्भिरेकादशभिश्च यतिः ॥ ५२ ॥

वारंवारमुच्चरिताद्भवलितिपदान्नायकस्य विरहितस्यापि पीडितत्वेन परं सहिष्णुत्वात् धीरत्वं व्यज्यते । तावदतः एनां नदीरूपेण परिणतां प्रियां प्रसादयामि ।

[ अनन्तरे कुटिलिका ]

**प्रसीदेति**—अये सुन्दरि नदीरूपिणि प्रिये ! एनया मदीयया नत्या सविनयं नमनेन प्रियतमे मयि प्रसीद नदीरूपं परित्यज्य मह्यमालिङ्गनदानरूपं प्रसादं कुरु । शेषं नदीसम्बोधनानि । क्षुभिताः चञ्चलाः त्वदनुकारिस्वरेण मां पीडयन्त अत एव अकरुणा दयाविहीना विहङ्गमकाः यत्र तादृशि ! परं च तीरे समुत्सुकाः एणका मृगा यस्याः इति तादृशि ! अलिकुलैः द्विरेफसमूहैः झङ्कारितः कल्लोलितः अर्णः जलं यस्याः तादृशि हे सुरसरित् त्वं मयि प्रसन्ना भूत्वा ललनारूपं विधाय स्वयङ्ग्राहसुखं विधेहि ।

इह हि विरहदशायां तव केशगतिस्वरानुकारिणः भृङ्गहंसपिकप्रभृतयो विहगाः निष्ठुरं मां पीडयन्ति । तव च मत्प्रियात्वादनुचितमिदं मत्पीडकजन्तूनामाश्रयदायित्वम् पुनश्च मत्प्रतिपक्षिपक्षिपक्षग्रहणेन तवापि सुतरां निष्ठुरत्वमस्तीति ध्वन्यते ।

प्रियतमेति पदं यदि सुन्दर्याः विशेषणं क्रियते तदा त्वं मम प्रियतमा, त्वयि अहमनुरक्तः इत्यर्थं सम्बोध्य त्वय्यनुरक्ते जने संरम्भस्यासाम्प्रतत्वव्यञ्जनं भविष्यतीति । पुनश्च तत्रैव प्रियतमे मयि इति मय्यध्याहारेण शाब्दबोधः क्रियते चेत् तव प्रियतमे मयि तव कोपः, वियोगजन्यदुःखञ्च त्वत्कृतम् अयोग्यमिति बोधपूर्वकं प्रियतमे मयि प्रसन्नत्वमुचितमिति ध्वन्यते ।

विहङ्गमकैणकादिपदेषु अल्पार्थप्रतिपादकस्य कन्प्रत्ययस्य दर्शनात् विहङ्गैणकानां प्रियतमायाः स्वरनयनयोः साधर्म्यदर्शनात् भृशं सन्तापकत्वव्यञ्जनाय तेषु चानादरः प्रकटीक्रियते । सुरसरिदिति तदध्यवसितायाः नायिकायाः अप्सरोभावे युक्तं घटते विशेषणम् ॥

क्षुभितेति अत्र यदा त्वं नदीत्वं विहाय प्रमदात्वं लप्स्यसे तदा तेषामाश्रयण-

सुरसरित्तीरसमुत्सुकैणके
अलिकुलझङ्कारितार्णके ॥ ५३ ॥ ]

( कुटिलिकान्तरे चर्चरी )

पुव्वदिसापवणाहअकल्लोलुग्गअबाहओ
मेहअअङ्गे णच्चइ सलिलअँ जलणिहिणाहओ । (५३ अ)
हंसरहंगसंखकुंकुमकआभरणु
करिमअराउलकसणकमलकआवरणु ।
वेलासलिलुव्वेल्लिअहत्थदिण्णतालु
ओत्थरइ दसदिस रुंधेविणु णवमेहआलु ॥ ५४ ॥
[ पूर्वदिक्पवनाहतकल्लोलोद्गतबाहु-
र्मेघाङ्गैर्नृत्यति सललितं जलनिधिनाथः ।
हंसरथाङ्गशङ्खकुङ्कुमकृताभरणः
करिमकराकुलकृष्णकमलकृतावरणः ॥
वेलासलिलोद्वेल्लितहस्तदत्ततालोऽ-
वस्तृणाति दशदिशो रुद्ध्वा नवमेघकालः ॥ ५४ ॥ ]

---

वियोगादहमिव ते संत्रस्ता भविष्यन्तीति अर्थमवगमय्य तद्वियोगासहत्वं-'कृते प्रतिकृतत्वं' प्रतिपाद्यते ॥ अत्र चरमचरणे प्रत्नपुस्तकेषु "अलिकुलझङ्कारिते नदि" एतादृशी छाया । परञ्च तृतीयचरणे सुरसरित्तीरेति एकं समस्तं पदम् । तादृशपाठाङ्गीकारे 'नदि' इति सम्बुद्धौ सुरसरित्तीरेत्यत्र बहुव्रीहेः असमीचीनत्वम् स्फुटमेव । एतत्कृते तृतीयचरणे सुरसरिदिति सम्बुद्धिः, शेषं च तद्विशेषणम् । एवं कृते चान्तिमचरणे नदीति सम्बोधनं पुनरनुचितम् अतः अलिकुलझंकारितार्णके इति पाठविधानं हृदयङ्गममेव यतः अर्णशब्दो नीरवाची सान्तः अकारान्तोऽपि । सान्तेऽपि गृहीते "अर्णस्के" इति पाठो विधेयः तदनु च "एण्णए" इति प्राकृते करणीयम् यतः श्रेय एव पुरातनपाठस्य गर्ह्यत्वापेक्षयेदं प्रतिविधानं मन्यामहे ।

अत्र प्रतिपादान्तं एणए इति अक्षरसङ्घदर्शनात् सचमत्कारं अन्त्यानुप्रासाख्यं अलङ्करणम् ॥ ५३ ॥

**पूर्वदिगिति**—इहायं परिकरो यद्राजा उर्वशीमन्विष्यन् तामलभमानः वनान्तरे यं कमपि तदुदन्तं पिपृच्छुः सन्तोषमनवाप्नुवानः "अहह श्रान्तोऽस्मिति" खिन्नः गिरिणद्यास्तीरे श्रममपनोदितुं वातमासेवते । तत्र नदीं पश्यन् स रतिं भजमानः नदीं नदीरूपेण परिणताम्आत्मनो वल्लभामुर्वशीं मनुते । ...

भ्रान्तचेता राजा ताञ्च प्रसादयितुं यतते । तादृशचाटुवचोभिरपि स्वीयप्राकृतस्वरूपेणापरिणमन्तीं नदीं विलोक्य ताञ्च क्षणेन समुद्राभिसारिणीं मत्वा भ्रमं निवर्त्तयति, निश्चिनोति च यत्सा नूनं नदी एव नोर्वशी, यतः यदि सत्यमेवोर्वशी सा स्यात् कथं पुरूरवसं विहाय नायकान्तरं समुद्रमभिगच्छेत् । वस्तुस्थितिश्चात्र यद्राजा स्वराजधानीपरिसर एव उर्वश्या सह भ्रमंस्तां सहसैवादर्शनं गतां अन्विष्यन् वनमध्ये भ्रमति; भ्रमंश्च प्रावृषि नदीकच्छमागच्छति; क्षणान्तरे च तां समुद्राभिसारिणीं मत्वा नेयमुर्वशीति पूर्वकल्पनं मिथ्याकरोति ।

अस्मिन्नभिसन्धौ महाकविः "प्रसीद प्रियतमे" इति कुटिलिकामवतार्य तत्रैव पुरतः उन्मादातिरेकं प्राप्तं राजानं पुनरुद्बोधयितुं स्वच्छन्दतयोच्छलन्तं जलनिधिनाथमुपस्थापयति यं दृष्ट्वा राजा उर्वश्याः नदीभावस्य भ्रान्तिं जहाति अपि च तं जलनिधिनाथं नर्त्तकं प्रकल्पयति ।

अत्र "कुटिलिकान्तरे चर्चरी"ति नाट्यप्रसङ्गः, पूर्वदिगिति षट्पदं पद्यं, तत्र समुद्रोपस्थितिः, तस्य नर्त्तकत्वं; "मेहअंगे" इति पदं; "णवमेहआलु ओत्थरईति" शब्दसङ्घातः सर्वथैव सामञ्जस्यविरोधीति कृत्वा विद्वद्भिश्चिन्त्यः अत एवाधो विचिकित्साप्रसङ्गः प्रसार्यते ।

पूर्वदिसेतिपद्यस्यावतरणिकायां रङ्गनाथः "उन्मादातिशयवशतो नदीं समुद्रत्वेन कलयंस्तं नर्त्तकत्वेन वर्णयती" त्याह । अत्रेयं चिन्ता यत् यदीयं सैव नदी या राज्ञा प्रसाद्यते यस्यास्तीरोपकण्ठमुपविष्टश्च सः तां मुहूर्त्तान्तरे समुद्रत्वेन कलयति तदा कोऽसौ समुद्रः यमभिसरन्तीं तां दृष्ट्वा राजा नूनमियं नदी नोर्वशीति प्रमिमीते । अत्रानेन नूनमेव भाव्यं यत्तत्रास्ते कश्चन प्रवहन् जलधिः यमुपयान्तीं नदीं राजा पश्यति यश्च तस्य भ्रान्त्यपनुत्तौ कारणं भवेत् । अतस्तामेव नदीं समुद्रं कलयतीति कल्पनमनुचितमेव । पुनश्च समुद्रस्य मेघाङ्गैर्नर्त्तनमसाधु एव, समुद्रस्य नृत्तविधौ मेघानामङ्गत्वरूपणे बलवान् कष्टः स्फुट एव । परञ्च नवमेघकालः प्रावृट् तस्यावस्तरणप्रसङ्गः पुनरपि जलधिनृत्ये अघट एव । समस्तपद्यस्यैकान्वितत्वकल्पने नृत्यतेरवस्तृणातेश्च युगपदन्वयोऽसाधुरेव । अपि च 'कुटिलिकान्तरे चर्चरी'त्यत्रविषये का सा कुटिलिका यदन्तरे चर्चरी दीयते, का च सा चर्चरीत्यूह्यमेव भवेद्यतो रङ्गनाथेन षट्पदत्वं पद्यस्य विदधता आत्मनोऽषट्पदत्वं रसचर्वणाव्यापारे व्यक्तीकृतं किल । अपरे च टीकाकृतो नामुं विषयमालोचयन्तीति साहाय्यविधुरैरस्माभिः सह मन्तव्यमिति कृत्वा पद्यमिदमधो व्याख्यायते—

त्रोटकस्यास्य नायकः पुरूरवाः प्रतिष्ठानाधीशः । प्रतिष्ठानं च प्रयागोपकण्ठमाधुनिकं झूसीति नगरम् । तत्रोर्वश्या सह विहर्त्तुं राजा प्रतिष्ठानाद्बहिर्गतः । तत्र शापवशाल्लतारूपेण परिणतां उर्वशीमदृष्ट्वा तामन्विष्यन् बंभ्रम्यमाणः भगवत्याः सुरसरितस्तीरमुपयाति । सा एव गिरिणदी यत्र च तरङ्गवातमासेवते नायकः । प्रावृषश्च समयः गगनस्य मेघाच्छन्नत्वञ्च तत्राभूत् । तां गङ्गां दृष्ट्वा

तत्र तरङ्गभ्रूभङ्गेति पद्ये वर्णितस्यात्मनो दयितया साम्यमभिवीक्ष्य इयमेवोर्वशी या कोपवशान्नदीरूपं परिणतेति तस्यानुमा । तदनुमानवशात् "प्रसीद प्रियतमे" इति कुटिलिकाख्यगीत्या राजा तां नदीमुर्वशीं मत्वा प्रसादयितुं यतते । नद्याः गङ्गाभावेन सुरसरिदिति विशेषणं युक्तं सत् उर्वश्याः अप्सरोभावस्य गमकम् । अत्रान्तराले एव दूरे पूर्वदिशमनुवहन्तीं कालिन्दीं वेगेनोच्छलन्तीं वीक्ष्य तस्याः सर्वतः प्रसारेण भ्रान्तस्तां जलनिधिनाथं कलयन् नर्त्तकत्वेनोपवर्णयति; जलधौ नर्त्तके च यद्यत्साम्यं तत्पुरःसरं वर्णनं तद्यथा—

**पूर्वदिगिति**—पूर्वा या दिक् ततो वहमानः पवनः तेनाहतः उत्पादितो यः कल्लोलो महोर्मिसङ्घर्षः स एव उद्धतः उच्चैः वर्तमानः बाहुः यस्य सः ( जलनिधिनाथस्य विशेषणम् ) नर्त्तकः नृत्तसमये अभिनयाय स्वबाहुमुच्चैः करोति एवमेव जलधिविषये कल्लोलस्यैवोद्धतबाहुत्वम् । परञ्च नर्त्तकानामङ्गेषु आभरणानि भवन्ति तान्यत्र कथमित्याह—हंसाश्च रथाङ्गाश्च हंसरथाङ्गाः शङ्खानि कुङ्कुमञ्च शङ्खकुङ्कुमानि तैः कृतमाभरणं येन स तादृशः जलधिः । जलधितीरे ये हंसास्ते आभरणवत् शोभाधायका अत एव यथा नर्त्तकस्य शरीरे शङ्खमाला आभरणायते एवमेवात्र हंसा इति श्वेतत्वसाधर्म्यात् हंसशङ्खयोर्विषयविषयिभावः । रथाङ्गकुङ्कुमयोरेवमेव रक्तत्वसाम्यं साधु एव । रथाङ्गानां चक्रवाकानां लेपनत्वं हंसानाञ्च भूषणत्वमिति तादात्म्यारोपः । नर्त्तका वस्त्रं धारयन्ति तदयं जलधिः कथं विदधातीत्याह यदयं नीलं परिधानं परिधत्ते—करिणः यादांसि ( water elephants ) मकराः ग्राहास्तैः आकुलानि समन्वितानि कृष्णकमलानि नीलकमलानि तैरेव कृतमावरणं येन सः । विशेषणमिदमुभयपक्षे साधारणम् । नर्त्तकानां नृत्यविधौ तालप्रदानमपि विधीयते तच्चात्र जलधिपक्षे वेलया दीयते तद्यथा—वेलया तटेन सलिलस्योद्वेल्लितं उच्छलनं ( tossing up ) तदेव दत्तः हस्ततालः यस्मै तादृशः । यस्य जलधेर्नर्त्तनव्यापारे वेला सलिलोत्क्षेपणेन करतालप्रदानं विदधातीति तात्पर्यम् । इदमवधेयं यत् तटे यदा जलप्रवाहः पतति तदा उच्छलन् व्याघातेन शब्दं जनयति तच्च तालप्रदानं नृत्यविधौ इति । रङ्गनाथेन "दत्तः हस्ततालो येन सः" इति कर्त्तरि तृतीयाबहुव्रीहिर्विहितः तेनेदमवगम्यते यन्नर्त्तक एव तालप्रदानं करोति तच्च नृत्तसम्प्रदायेऽसमीचीनम्; नर्त्तकस्तु नृत्यति तस्य हस्तौ चाभिनये व्यापृतौ भवतः, अपरैस्तत्पार्श्विकैः तालप्रदानं क्रियते, अतः अत्र समुद्रनर्त्तकस्य कृते संयोगसम्बन्धेन पार्श्ववर्त्तिना तीरेण सलिलोद्वेल्लनमयेन तालप्रदानेन साहाय्यं विधीयते इति चतुर्थीबहुव्रीहिरेव साधुः । रङ्गनाथमतं तु सङ्गीतसम्प्रदायविरोधीति मत्वा चिन्त्यमेव, एतादृशः नवमेघकालः नवजलधरः इव कालः कृष्णवर्णः जलनिधिनाथः कालिन्द्याख्यो नदः स्वीयैः मेघाङ्गैः मेघसदृशैः श्यामैः अङ्गैर्वीचिभिः सललितं सुभगं रमणीयं यथा स्यात्तथा नृत्यति एवञ्च दशदिशः रुद्ध्वा, प्रसृत्य अवतरति प्रवहतीत्यर्थः । अवस्तृणातीति पाठान्तरे प्रवहन्

व्याप्नोतीति मतम् । अत्र कालिन्द्याः जलस्य श्यामवर्णत्वात् नवमेघकान्तत्वं युज्यत एव । एवं मते गङ्गायमुनयोः सङ्गमप्रसङ्गे पूर्ववर्णितायाः गङ्गायाः कालिन्दजलधिं प्रत्यभिसरणं प्रेक्ष्य ध्रुवमियं नदी नेयमुर्वशी, अन्यथा कथमियं पुरूरवसं मामपहाय समुद्राभिसारिणी भवेदिति भ्रान्तिहानिः सङ्घटत एव ।

भावस्तु जलनिधिर्नर्त्तकः तस्य मेघसदृश्यः श्यामा वीचयः अङ्गानि कल्लोल एवोद्धतौ बाहू । हंसचक्रवाकादयो भूषणानि, जलगजमकरेन्दीवरादयः परिधानम् । तीरेण दत्तस्य जलोत्क्षेपस्य हस्ततालत्वम् । एभिरुपकरणैः विशिष्टः सन् जलधिर्लीलया नृत्यति सर्वत्र परिस्तत इव भातीति तात्पर्यम् । इयञ्च वस्तुस्थितिः जलधिः कालिन्दी, यां प्रति गङ्गा प्रवहति राजा चोर्वशीं गङ्गायां विवर्त्तयति, कालिन्द्याश्च समुद्रं विवर्त्तयति तयोश्च सङ्गमं समुद्राभिसरणं मत्वा नेयमुर्वशी इयं परमार्थतः सरिदेवेति निश्चिनोति । अत्रोन्मादस्य परतरा काष्ठा, प्रावृषि समुद्रोद्वेल्लनादेः दर्शनमतीवोद्दीपनं तच्च विप्रलम्भस्य पोषकम् । अत्र समुद्रे नर्त्तकत्वारोपात् तेन च तादात्म्यरूपणात् रूपकालङ्कारः । अत्र भ्रान्त्याख्यो भावो व्यज्यते । मे प्रेयसी यस्मिन् कस्मिन्नपि रूपे परिणतापि मां विहायान्यासङ्गिनी न क्वचिदपि भवित्रीति रागस्य दार्ढ्यात् इयं सरित् प्रिया कथं समुद्रनर्त्तकं गच्छतीति" प्रेक्ष्य नेयं मे प्रेयसीति निश्चयाद्राज्ञो रागः नापैत्यतिशोभत एवातः नायकगतरागस्य माञ्जिष्ठत्वं ध्वन्यते ।

अत्र "मेहअङ्गे" इत्यस्य छाया "मेघाङ्गैरिति" कृता, अत्र यदि "मेह अग्गे" इति पाठः स्यात्तदा मेघाग्रे नृत्यति इति भावः साधीयान् भवेत् । अपि चेदं विभावनीयम् यत् प्रसीद प्रियतमेति कुटिलिका गीतिः; तदन्तरे च "पुव्वदिसे"-त्यारभ्य "जलणिहिणाहओ" इति चरणद्वयात्मिका चर्चरी, तत्पश्चाच्च "हंसरहंगेति" कुटिलिका राग एव ।

अत्र उन्मादातिरेकं गतस्य राज्ञः गङ्गायां उर्वशीभानात् तदनुसरणेन स्मरस्य दशमीं दशां नायकः क्वचित् प्राप्नुयात् इति भिया तद्वारणाय सहसा नायकस्यान्यतो जलधिं प्रति आकर्षणं तद्द्योतनाय अन्तराले चर्चरी निवेशोऽङ्गीकृतः कविनेति ज्ञेयम्, अत एव प्रसीदेति पद्ये चतुर्षु चरणेषु अन्त्यस्वरानुप्रासः; एवमेव हंसरहंगेति चतुर्षु पादेषु अन्त्यस्वरानुप्रासः मध्येऽपि चर्चरीगतपादद्वयस्यान्ते "आहओ" इति संहतेः अन्त्यानुप्रास एव ॥

अयमेकः पक्षः ।

यद्वा पूर्वदिगितिपद्यमन्यथापि व्याख्यातुं शक्यते तद्यथा—नायकः स्ववल्लभां वनान्तरेऽन्विष्यन् पशुपक्षिणस्तस्याः वृत्तं पृच्छन्नपि तामलब्ध्वा शुचः सीमानं गतः विप्रलम्भश्च काष्ठामधिरूढः । तत्र नदीरूपायाः प्रेयस्याः पुरतः प्रसादवचांसि ब्रुवन्नेव नातिदूरे महान्तं कम्पनोत्पतन्तं जलप्रवाहं पश्यति, यच्च दृश्यं महाकविना नायकस्य सामाजिकानाञ्च मनांसि काष्ठागतविरहवेदनायाः खेदाद्

व्यावर्त्तयितुं, नाटकीयं दारुणं वातावरणं शमयितुमुपस्थापितम् । तद्दृश्यनिरीक्षणानुरोधेन नायकस्यान्यत्राकृष्टं मनः तत्रस्थं पतदुत्पतन्तं पयःपूरं पारावारं परिकल्पते यस्तु पयोदसदृशैः परिणाहवद्भिरङ्गैः नृत्यति । नेदमत्र चित्रं यन्नायकः विप्रलम्भे वल्लभायाः गवेषणे बहुशो विप्रलब्धः वनेऽचेतनानपि चेतनानिव मानवीयभावैः सदृशानुभूतिमतः परिगणय्य पयःपूरे नर्त्तकभावमारोपयति । नृत्यन्तं जलनिधिं दृष्ट्वा समुत्पन्ना मनोव्यावृत्तिः राज्ञो मनो यावत् शास्त्येव तावदेव पूर्वदिक्पवनाहतत्वं नायकं तदानीन्तनं प्रावृट्कालं प्रति समाकर्षति । यश्च प्रावृट्समयः सर्वत्र व्याप्तः सन् पयःपूरस्य नृत्तव्यापारे पारिपार्श्विकः सन् समस्तोपकरणैः सनाथः तत्र प्रादुर्भवन् वरीवर्त्तते । अवधेयमत्र कियच्चमत्कारीदं यत्कविना कालस्यावस्तरणं दिशोऽवसारणमानेनोपकल्पितम् (How poetic it is to speak of Time in terms of Space!)। परञ्चेह कवेस्तावत् कृतिरीदृशी यत् यदि जलधिर्नर्त्तकस्तदा तमनु तालप्रदायित्वेन तत्सहायकेन कालेनापि नूनं भवितव्यम् यतः इदं विश्वजनीनं ज्ञानं यत् प्रावृण्महिम्नैवार्णवस्योच्छलत्प्रवाहवत्त्वं यद्गर्भञ्च तस्मिन् नर्त्तकत्वारोपणम् । इदमपि वक्तुं नानुचितं यन्नवमेघकालस्य तालमनुसरन्नेव पयःपूरो नृत्यति (cf. Time is timed) अत एव नायकः काले चेतनत्वमारोपयति यथा कालः हंसरथाङ्गादिभिर्विभूषितः करिमकरादिभिरावृतः स्वहस्तैस्तालप्रदानं कुर्वन् समस्ता दिशोऽभिव्याप्नुवन् अवस्तृणाति ।

अत एव पूर्वदिगिति चरणद्वयं चर्चरीति प्रतिपादितं भिन्नं, हंसरथाङ्गेति तद्भिन्नमेव । तद्व्याख्यानं यथा—

**पूर्वदिगिति—**

पूर्वा या दिक् ततो वहमानः पवनः वायुः तेनाहतः व्याघातवशादुत्पातितः कल्लोलः महोर्मिः स एव उद्धतः उच्चैरास्फालितो बाहुर्यस्य सः (विशेषणमिदं नर्त्तकत्वारोपे हेतुः) एतादृशः जलनिधिनाथः महान् पयःपूरः पुरतो वीक्ष्यमाणः मेघाङ्गैः मेघवत् परिणाहिभिः अङ्गैरूर्मिरूपैः सललितं रमणीयं (नायकस्य मनसः आकर्षकत्वात्) नृत्यति इति । अत्र नर्त्तकत्वारोपात् रूपकालङ्कारः ॥ ५३ अ ॥

पयोधेः नर्त्तनकर्मणि कश्च सहायः नर्त्तकत्वं घटयति य इति जिज्ञासायामाह—

**हंसरहंगेति**—नवमेघकालः प्रावृट्समयः दशदिशो रुद्ध्वा सर्वत्राभिव्याप्तः अवस्तृणाति प्रसरति—स च कथमुदधिनर्त्तकस्य साहाय्यमेतीत्याह त्रिभिर्विशेषणैः—हंसा रथाङ्गाश्च त एव शङ्खाः कुङ्कुमादिलेपाश्च तैः कृतानि आभरणानि समुद्रस्याभूषणानि येन तादृशः नवमेघकालः; (नवमेघकालः एव हंसरथाङ्गादीन् जलधेरुपकण्ठं गन्तुं प्रोत्साहयति ।) यथा नर्त्तकसहकारी नर्त्तकस्य शङ्खादीनां आभरणानां परिधापनेन बाह्लीकरजसः कुङ्कुमादेर्विलेपनेन नेपथ्यवि-

( चर्चरिकयोपसृत्य जानुभ्यां स्थित्वा )

त्वयि निबद्धरतेः प्रियवादिनः
प्रणयभङ्गपराङ्मुखचेतसः ।

धिमारचयति एवमेवेह उदधिं वर्षासमयः एव हंसरथाङ्गादिभिः नर्त्तनविधौ सज्जयति । एवमेव करिणः जलगजाः, मकराः ग्राहास्तैः आकुलैः आसमन्तात् परिवृतैः कृष्णकमलैः इन्दीवरैः कृतं रचितं आवरणं परिधानं येन सः । प्रावृषा एव नवजलप्रवाहस्यालोडनात् उदधिक्षोभाच्च करिमकराः जलप्रदेशस्योपरि वर्त्तमाना भवन्ति, तत्समन्वितानि इन्दीवराण्येव नर्त्तकस्य तस्य वासांसि भवन्ति । परञ्च नर्त्तकस्य नृत्यविधौ सहकारिणा तालप्रदानं विधीयते एवमेवेह वेलायां तीरे सलिलस्य पयसः उद्वेलितानि उच्छलद्वीचयः तद्रूपैः हस्तैः दत्तः तालः येन तादृशः नवमेघकालः वर्षासमयः दशदिशोऽभिव्याप्य अवस्तृणाति सर्वत्र वरीवर्त्तते इति ।

भावस्तु समुद्रनर्त्तकस्य कृते हंसरथाङ्गरूपेण रचिताभरणः करिमकरेन्दीवरैः विहिताभरणः सलिलोर्मिभिः प्रकल्पितहस्ततालः वर्षासमयः सर्वासु दिक्षु ओतप्रोत इव प्रस्तृतो दृश्यत इति तात्पर्यम् ।

इयं पुनश्च कुटिलिका एव गीतिः ।

अस्मिन् व्याख्यापक्षे यद्यपीदं दृश्यं मनोव्यावर्तकं विषयान्तराभिनिवेशि तथापि मेघालोकस्य विरहोद्दीपकत्वात् क्षणेनैव पूर्वस्मृतेरनुयोजकत्वं प्रकल्प्य चर्चरिकया गत्वा तामेव नदीविवर्तरूपामुर्वशीं उपसृत्य जानुभ्यां स्थित्वा "त्वयि निबद्धरतेः" इत्युपयाचनं उपरिष्टाद् घटनीयम् । अत्र काष्ठागतविरहगतेः सहसैव प्रक्रमव्यावर्तनवशात् नायकस्य सामाजिकानाञ्च ईषत् खेदापसरणपूर्वकं पुनर्विप्रलम्भप्रवाहसहत्वं विरचय्य महाकविना काव्यकलाकौशलस्यान्यतमा भावावर्तनरूपा वाक्ययुक्तिः (poetic artifice of digression) प्रयुक्ता—यदुक्तं भोजदेवेन "गर्भः सह निगर्भेण संवृतिः ससमुच्चया । हेतवो वाक्ययुक्तीनां क्रियतामेवमादयः" इति ।

एवं व्याख्याते तु अप्रकृतस्य वर्षासमयस्यात्रोल्लेखस्वीकारे प्रकृतस्य समुद्रोपवनर्णस्य हानमप्रकृतस्वीकारदोषप्रसङ्गः वाक्यभेददोषश्च; नवमेघकालस्य समुद्रविशेषणत्वेनान्वये पूर्वदोषयोरनवकाशप्रसङ्गः नृत्यतेरवस्तृणातेश्च समुच्चयार्थकपदाभावे न्यूनपदत्वदोषः किन्तु क्रिययोश्चैककारकान्वयवशात्तुल्ययोगितालङ्कारः । एवञ्च भावव्यावर्त्तनरूपयुक्तेरुभयथापि समानत्वेन विद्यमानत्वे सति उभयोः पक्षयोः कतरः श्रेयान् इति प्रसङ्गेऽस्य कालिदासीयपद्यसन्दर्भस्य सर्वथा सामञ्जस्यविषये सुधिषणाः सहृदया एव प्रमाणम् ॥ ५४ ॥

( चर्चरिकयोपसृत्य जानुभ्यां स्थित्वा ) आह—

**त्वयीति**—अयि भामिनि कोपने ! त्वयि निबद्धा निवेशिता रतिः प्रीतिर्येन सः तस्य, प्रियं वदतीत्यसौ प्रियवादी तस्य प्रियभाषिणः प्रणयः अगाधं प्रेम

कमपराधलवं मम पश्यसि
त्यजसि भामिनि दासजनं यतः ॥ ५५ ॥

कथं तूष्णीमेवास्ते । अथवा परमार्थतः सरिदियं नोर्वशी । अन्यथा कथं पुरूरवसमपहाय समुद्राभिसारिणी भवेत् । अनिर्वेद-प्राप्याणि श्रेयांसि । भवतु । तमेवोद्देशं गच्छामि यत्र मे नयनयोः

---

तस्य भङ्गे पराङ्मुखं चेतः यस्य एतादृशस्य मम कं अपराधलवं दोषस्य अणुं पश्यसि यतः यस्मात् अपराधवशात् दासजनं मां त्यजसि ।

त्वयि सदैव प्रीतिकरः अहम्, अनुच्चादिस्वरेणानुकूलार्थवचसा प्रियवागहम्, तव प्रणयानुकूलकारी अहम् । इत्येवं सत्यपि कं ममापराधस्य लेशं पश्यसि यस्य हेतोस्त्वं दासजनं मां परित्यज्य न जाने क्व गताऽसि ।

अत्र अपराधलवस्याप्यसम्भावितत्वनिरूपणेन निबद्धरतित्वादिविशेषणत्रयस्य साकूतत्वात् परिकरालङ्कारः । अनुप्रासश्च ।

अत्र अपराधलवमपि पश्यसि इत्यत्र स्थूलप्रतीतिप्रसङ्गवारणाय च अपेः अवश्यम्भावित्वम् । अवश्यं देयस्य अपिपदस्य अप्रदानेन "अनभिहितवाच्यत्वम्" न्यूनपदत्वं दोषः तेन च लवं न पश्यसि महान्तमपराधं पश्यसीति विरुद्धप्रतीतिः। दोषबीजं तु अभिमताप्रतीतिपूर्वकं विरुद्धमतिकारित्वं वेति काव्यप्रकाशटीकाकृतः । अत्र मान्यैर्मम्मटभट्टैः दोषो दर्शित एव तथापि लेशवाचकस्य लवपदस्य निवेशात् अपराधावयवं कं पश्यसीति आक्षेपोपस्थापनेनैव महतोऽपराधस्य निराकरणं ध्रुवं भवतीत्यत्र सूक्ष्मसमालोचनेन दोषाभाव एव स्फुरति इति विद्वद्भिः स्वतन्त्रतयाभिमन्तव्यमिति ॥

भामिनी "कोपना सैव भामिनी" इत्यमरः ।

भाम क्रोधे ( भ्वा. आ. से. ) अत्र च आवश्यकार्थो "आवश्यका" इत्यनेन णिनिः । अवश्यं भामते इयं सा भामिनी । प्रणयलक्षणं तु प्रागुक्तमेव । अत्र दीप्तरसत्वात्कान्तिर्नाम गुणः । मधुरपदसहयोगात् मधुरत्वं गुणश्च ।

वृत्तं च द्रुतविलम्बिताख्यम् । द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ॥५५॥

कथं तूष्णीमेवास्ते मौनमेव दधाना वर्तते । अथवा परमार्थतः याथार्थ्येन सत्यमेव वा सरिदियं नदी न तु उर्वशी मम प्रिया । यदीत्थं न स्यात् तर्हि पुरूरवसं माम् अपहाय परित्यज्य कथमियं समुद्राभिसारिणी भवेत् । अयं कवीनां समयः यत्समुद्रः नदीनां कामुकः यतः सर्वा नद्यः समुद्रं प्रति गच्छन्ति । नदीयं समुद्रं गच्छतीति सत्यम् । यदीयमुर्वशी भवेत्तदा मम स्वरं निशम्यापि माम् परित्यज्य कथं समुद्रं अभिगच्छेदिति भावः । अत्र कृते तु विचारे उर्वशीय-वित्वस्यान्यथाभावाद्विपर्ययो नाम नाट्यलक्षणं लभ्यते, यदुक्तं दर्पणे—"विचारस्या-न्यथाभावः सन्देहात्तु विपर्ययः" इति । अनेन उर्वश्याः पूर्वं कृतमभिसरणं स्मृतम् ।

सा सुनयना तिरोहिता । ( परिक्रम्यावलोक्य च ) इमं तावत् प्रिया-प्रवृत्तये सारङ्गमासीनमभ्यर्थये ।

अभिनवकुसुमस्तबकिततरुवरस्य परिसरे
मदकलकोकिलकूजितमधुपझङ्कारमनोहरे ।
नन्दनविपिने निजकरिणीविरहानलेन सन्तप्तो
विचरति गजाधिपतिरैरावतनामा ॥ ५६ ॥

( इति गलितकः ) ( जानुभ्यां स्थित्वा )

कृष्णसारच्छविर्योऽयं दृश्यते काननश्रिया ।
नवशष्पावलोकाय कटाक्ष इव पातितः ॥ ५७ ॥

---

श्रेयांसि अनिर्वेदप्राप्याणि निर्वेदेन अलभ्यानि भवन्ति । शोकोद्विग्नं चेद् मानसं, श्रेयांसि न लभ्यन्ते । ग्लानिं भजमानेन पुरुषेण श्रेयांसि न प्राप्यन्ते । अतः शोकमपहाय धैर्यं धृत्वा गवेषणा विधेया इति दार्ढ्यं मनसः व्यक्तीकुर्वता कविना नायकस्य धीरत्वं प्रतिपादितम् । अत्र श्रेयसो निर्वेदेनाप्राप्यत्वमिति सामान्यख्यापनेन प्रकृते उर्वशीलाभरूपश्रेयसः निर्विण्णेन मया नाधिगन्तुं शक्यत्वमिति भाव्यर्थसूचनरूपतर्कस्य सद्भावात् "तुल्यतर्को यदर्थेन तर्कः प्रकृतगामिने"ति लक्षणसमन्वितं तुल्यतर्काख्यं नाट्यलक्षणमुक्तं भवति ।

भवतु । ( इदानीं प्रतिनिवर्तते राजा । ) तमेवोद्देशं स्थानं गच्छामि प्रतिनिवर्ते, यस्मिन् स्थले सा सुनयना सुदृशी मे नयनयोः तिरोहिता अगोचरतां प्राप्ता । ( परिक्रम्यावलोक्य च ) इमं तावत् पुरतः आसीनमुपविष्टं सारङ्गं मृगं प्रियायाः प्रवृत्तये वार्ताप्राप्तये अभ्यर्थये प्रार्थये ।

**अभिनवेति**—ऐरावतान्योक्त्या स्वविरहित्वं वर्णयति—अभिनवानि नूतनतयोत्फुल्लानि कुसुमानि तेषां स्तबकैर्गुच्छैः समेतस्य तरुवरस्य परिसरे परिधौ, मदेन कलैः मनोहारिभिः कोकिलानां कूजितैः तथा च मधुपानां भ्रमराणां झङ्कारैः गुञ्जितैः मनोहरे नन्दनाख्ये विपिने वने निजा या करिणी तस्या विरहानलेन सन्तप्तः गजाधिपतिरैरावतः विचरति । अनेन नायकस्य वने परिभ्रमणं वियोगातिरेकश्च गम्यते । अत्र द्विरेफरवे तन्त्रीध्वनिवाचकस्य झङ्कारपदस्याप्रयोज्यत्वात् प्रसिद्धिहतत्वं मम्मटमते प्रसिद्धिमतिक्रान्तत्वं वा दोषो नित्य एव ॥ ६५ ॥

गलितकः "अभिनवेति" पूर्वोक्तः गलिताख्यो नाट्यविशेषः, लक्षणं तूह्यम् ।

( जानुभ्यां स्थित्वा )

**कृष्णसारेति**—कृष्णा श्यामा च सारा शबला च कृष्णसारा तादृशी च्छविः शोभा यस्यैतादृशः श्यामशबलोऽयं सारङ्गः काननश्रिया वनदेवतया नवशष्पावलोकाय मृदुबालतृणशोभाप्रेक्षणाय पातितः कटाक्ष इव दृश्यते ।

( चर्चरी )

सुरसुन्दरि जहणभरालस पीणुत्तुङ्गघणत्थणि
थिरजोव्वण तणुसरीरि हंसगइ ।
गअणुज्जलकाणणे मिअलोअणि भमन्ते
दिट्ठी तइं तहविरहसमुद्दन्तरे उत्तारहि मइं ॥ ५८ ॥

[ सुरसुन्दरी जघनभरालसा पीनोत्तुङ्गघनस्तनी
स्थिरयौवना तनुशरीरा हंसगतिः ।
गगनोज्ज्वलकानने मृगलोचना भ्रमन्ती
दृष्टा त्वया तद्विरहसमुद्रान्तरादुत्तारय माम् ॥ ५८ ॥ ]

---

मृगोऽयं कृष्णसारः । कवीनामिदं सम्मतं यत् वने वनाधिष्ठात्री वनशोभा वनदेवता निवसति । तस्यां नायिकात्वारोपः । तया च कटाक्षः पातितः किमर्थमिति वर्षासमये नूतनं बालतृणं वर्धते तत्सौन्दर्यविलोकनप्रवणचेतसा तया पातितः कटाक्षः इव कृष्णसारोऽयं सारङ्गो दृश्यते । कृष्णसारपदम् तु मृगपक्षे कृष्णसारा च्छविर्यस्येति अर्थं व्यनक्ति अत्र कर्म्मधारयसमासः । कटाक्षपक्षे तु कृष्णो यः सारः नयनाभ्यन्तरवर्तिनी कनीनिका तत्सदृशशोभासमेत इति बोधः । कृष्णसारच्छविरित्यत्र रङ्गनाथेन कृष्णमृगवच्छविरित्येवमुपमितसमासो विहितः । एवं कृते सारङ्गोपमेयस्य मृगोपमानेन सादृश्यकल्पनात् स्वौपम्यदोषः रसापकर्षकः सन् उपमेयमकालिदासीयेति कल्पयति । यतोऽधस्तात् "सारङ्गमासीनमभ्यर्थये" इति नायकोक्तो सारमङ्गं यस्येति सारङ्ग इति व्युत्पत्त्यैव कृष्णसारमृगविशेषजातिमत्त्वं पुरैव ख्यापितं भवति अतः कृष्णसारपदे कृष्णा च सारा कर्बुरिता श्रेष्ठा चेति व्यास एव रुचिरः । एवञ्चेह कृष्णशारेति पाठस्तु नूनं साधीयानेव भवेत् किन्तु तदा कटाक्षपक्षे तदन्वयो न भवतीति सुधीभिर्विचार्यम् ।

अत्र कटाक्ष इव सारङ्गो दृश्यते इति सम्भावनादुत्प्रेक्षालङ्कारः । "सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यदिति" लक्षणयोगात् । कृष्णसारपदस्य द्व्यर्थित्वात् श्लेषश्च । अनुष्टुब् वृत्तम् ॥ ५७ ॥

( चर्चरी )

अभिज्ञानप्रदर्शनपूर्वकं याचते सारङ्गं प्रियाप्रवृत्तिं राजा ।

**सुरसुन्दरीति**—सुरसुन्दरी देवाङ्गना जघनदेशस्य भरेण स्थूलत्वात् भारेण अलसा मन्दगतिः, पीनौ मांसलौ उत्तुङ्गौ उन्नतौ अत एव घनौ निबिडौ स्तनौ यस्याः सा तादृशी स्थिरयौवना अनश्वरयुवावस्था, तनुशरीरा कृशाङ्गी, हंसस्य गतिरिव गतिर्गमनं यस्याः सा, मृगस्य लोचने इव लोचने यस्याः सा, गगनरुचिर्सल्लाविशिष्टत्वेनोज्वले कानने वने भ्रमन्ती मम प्रिया उर्वशी त्वया

( उपसृत्याञ्जलिं बद्ध्वा )

हंहो हरिणीपते !

अपि दृष्टवानसि मम प्रियां वने
कथयामि ते तदुपलक्षणं शृणु।
पृथुलोचना सहचरी यथैव ते
सुभगा तथैव खलु सापि वीक्षते ॥ ५९ ॥

कथमनादृत्य मद्वचनं कलत्राभिमुखं स्थितः।

सर्वथोपपद्यते परिभवास्पदं विधिविपर्ययः। यावदन्यमवका-

---

दृष्टा किम्? दृष्टा चेत् मां तस्या विरहः एव समुद्रः तस्यान्तरान्मध्यभागादुत्तारय। तदीयविरहाकूपारे मग्नं तत्प्रवृत्तिनौकया मामुद्धर इति प्रार्थना।

अत्र स्थिरयौवनात्वे सुरसुन्दरीत्वस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः "हेतोर्वाक्यपदार्थता" इति वचनात्। विरहस्य समुद्रत्वकल्पनाद् अगाधत्वं व्यञ्जयन् स्वयमुद्धरणायोग्यत्वं ध्वनयति। अत्रालङ्कारेण वस्तुध्वनिः। अलङ्कारश्च रूपकम्। अत्र हंसगतिमृगलोचनादिपदेषु उपमालङ्करणम्। एतेषां संसृष्टिश्च ॥ ५८ ॥

उपसृत्याञ्जलिं बद्ध्वा जानुभ्यां स्थानेन अञ्जलिबन्धनेन च राज्ञः प्रष्टव्यानामुपकारकत्वात्तेषु विनयित्वं प्रकाश्यते। हंहो इति प्रश्ने। हरिण्याः मृग्याः पतिः तत्सम्बुद्धौ हे हरिणीपते मृगीप्रिय।

**अपीति**—अपिः प्रश्ने। मम प्रियामुर्वशीं त्वं वने दृष्टवान् असि किम्—त्वया सा विपिने दृष्टा किमिति प्रश्नः। दृष्टा चेत्तर्हि ते तुभ्यं त्वां प्रति वा तस्याः उपलक्षणं प्रत्यभिज्ञानचिह्नं कथयामि तदभिज्ञानं शृणु। यथा पृथू कर्णान्तचारिणी लोचने यस्याः सा तादृशी दीर्घापाङ्गा ते सहचरी प्रियतमा मृगी वीक्षते पश्यति तथैव सुभगा मनोहरा सा अपि वीक्षते। यादृशं वीक्षणं तव प्रियायास्तादृशम् एव तस्या इति अभिज्ञानम्।

मृगनयना सा इति तात्पर्यम्। तव परिचितं यदि तस्याः परिज्ञानमिष्यते तदेदमुच्यते यत्सापि तव प्रियासदृशी दीर्घापाङ्गचञ्चत्तारका अस्ति।

मञ्जुभाषिणी वृत्तम्। यदुक्तम् "सजसा जगौ भवति मञ्जुभाषिणी"। सकारजकारसकारजकारा गुरुश्च यत्र भवन्ति तद्वृत्तं मञ्जुभाषिणी नाम ॥ ५९ ॥

कथं मम वचनं प्रार्थनागर्भमिदं वाक्यं अनादृत्य तिरस्कृत्य कलत्रस्य स्त्रियः अभिमुखं यथा स्यात्तथा सम्मुखे स्थितः। सारङ्गस्तु स्वप्रियामवलोकयन्नासीदत्रान्तरे राज्ञा एवं प्रोक्तम् किन्तु तस्य तिर्यग्योनित्वादनवधानम् युक्तमेव ॥

**सर्वथेति**—विधेः दैवस्य विपर्ययः प्रतिकूलता परिभवस्य अधिक्षेपस्य आस्पदं स्थानं सर्वथा उपपद्यते युज्यते। प्रतिकूले तु भागधेये अधिक्षेपः अवश्यं

शमवगाहिष्ये । ( परिक्रम्यावलोक्य च ) हन्त ! दृष्टमुपलक्षणं तस्या मार्गस्य ।

रक्तकदम्बः सोऽयं प्रियया घर्मान्तशंसि यस्येदम् ।
कुसुममसमग्रकेसरविषममपि कृतं शिखाभरणम् ॥ ६० ॥

तत्किं नु खलु शिलाभेदगतं नितान्तरक्तमिदमवलोक्यते ।

प्रभालेपी नायं हरिहतगजस्यामिषलवः
स्फुलिङ्गः स्यादग्नेर्गहनमभिवृष्टं पुनरिदम् ।
अरे रक्ताशोकस्तबकसमरागो मणिरयं
यमुद्धर्तुं पूषा व्यवसित इवालम्बितकरः ॥ ६१ ॥

---

भावीति भावः । यावदन्यमवकाशं स्थलमवगाहिष्ये गमिष्यामीत्यर्थः । ( परिक्रम्य अवलोक्य च ) हन्त इति हर्षे ! तस्याः प्रियाया मार्गस्य उपलक्षणं चिह्नं दृष्टम् ।

रक्तकदम्बेति—रक्तकदम्बस्तु तपात्यय एव कुसुमितो भवतीति प्राकृतिकम् ।

स एवायं रक्तकदम्बस्तरुः यस्य वृक्षस्य इदम् घर्मान्तस्य ग्रीष्मात्ययस्य शंसि बोधकम् तथा च असमग्रैः असम्पूर्णैः केसरैः हेतुभिः विषमं निम्नोन्नतं अपि पुष्पं प्रियया शिखाभरणं केशभूषणं कृतम् आसीदिति शेषः ।

अयं स एव रक्तकदम्बतरुर्यस्य वर्षासमयप्रारम्भबोधकम् किञ्चिदुन्नतकेसरत्वान्नतोन्नतं अपि कुसुमं मम प्रियया केशभूषणत्वेनोपयुक्तमासीदिति भावः । अत्र स्मरणमलङ्कारः । आर्या जातिः ॥ ६० ॥

( विलोक्य ) तत् किं नु खलु इदं शिलाभेदान्तरगतं नितान्तरक्तमत्यन्तलालिमयुतं वस्तु अवलोक्यते दृश्यते किमिदं रक्तं रत्नं वा किमप्यन्यद् इति सन्देहः ।

प्रभालेपीति—प्रभया दीप्त्या लिम्पति व्याप्नोति सन्निहितमिति प्रभालेपी देदीप्यमानोऽयमस्तीत्यनेनावगम्यते यदयं हरिणा सिंहेन हतस्य व्यापादितस्य गजस्य आमिषलवः मांसशकलम् नास्तीति । मांसखण्डस्य प्रभाभावात् । अयं तु विलक्षणतेजोयुतः अतः नायं मांसखण्डः । सन्देहे तु रक्तत्वं कारणम् । यदि नायं मांसखण्डस्तदा अग्नेः स्फुलिङ्गः कणः स्यात् । तदप्यसम्भवि यतः इदं गहनं वनं अभिवृष्टं जलवृष्ट्या सिक्तं अभूत् । जलवर्षणे तु अग्निकणस्यासम्भवात् । इदानीमेव भूयसी वृष्टिरभूत्, तदा अयं अग्निकणस्तु भवितुं नार्हति इति स्फुलिङ्गविषयकसन्देहवारणम् ।

( विभाव्य ) अरे अयं रक्तः यः अशोककुसुमानां स्तबको गुच्छः तेन समस्तुल्यः रागो लालिमा यस्य तादृशो मणिरस्ति यं मणिं उद्धर्तुं उद्ग्रहीतुं व्यवसित उद्युक्त इव स्वयं पूषा सूर्यः आलम्बितकरः अधःप्रसारितकिरणहस्तः प्रतिभाति ।

भवतु । आदास्ये तावत् । ( ग्रहणं नाटयति )

पणइणिबद्धासाइओ वाहाउलणिअणअणओ ।

गअवइ गहणे दुहिओ परिभमइ खामिअवअणओ ॥

[ प्रणयिनीबद्धास्वादः वाष्पाकुलनिजनयनः ।

गजपतिर्गहने दुःखितः परिभ्रमति क्षामितवदनः ॥ ६२ ॥ ]

---

रक्तं किञ्चिद्वस्तु दृष्ट्वा इदं वेदमिति सन्दिहानो राजा कथयति सिंहेन मारितस्य गजस्य किमयं मांसखण्डः इति सन्देहः किन्तु अयं देदीप्यमानः अतस तु भवितुं नार्हति । भवतु अयं अग्निकणः स्यात् । तदपि न यत इदानीमेव भूयसी वृष्टिः जाता । ( किञ्चिद्विभाव्याह ) रक्तानां अशोकपुष्पाणां गुच्छ इव रक्तकान्तिरयं मणिरस्ति यं ग्रहीतुं इव भगवान् सूर्यः स्वकिरणरूपकरप्रसारणपरः उद्युक्तो दृश्यते इति भावः ।

अत्र पूर्वार्धे किमिदं तत्तु न तथेति इति कारणप्रदानपूर्वकं एकस्मिन् वस्तुनि सन्देहनिवारणं अन्यत्र स्थापनं इति हेतोः निश्चयपर्यवसायी "अयं मार्त्तण्डः किं स खलु तुरगैः सप्तभिरितः" इतिवत् भेदोक्तौ ससन्देहालङ्कारः तल्लक्षणं यथा मम्मटभट्टैः "ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः" ।

रक्ताशोकेत्यत्र आर्थी उपमा "सुन्दरं सादृश्यं वाक्यार्थोपस्कारकमुपमालङ्कृति"रितिलक्षणात् । आलम्बितकरः, करः मयूखः; कर एव करः इत्यत्र तादात्म्याद्रूपकमलङ्कारः । कर इत्यत्र एकानुपूर्व्या एकवृन्तगतफलद्वयन्यायेनार्थद्वयसद्भावात् श्लेषालङ्कारः ।

पूषा व्यवसित इव प्रतिभातीत्यत्र उत्प्रेक्षालङ्कारः । हरिहतेत्यत्रानुप्रासालङ्कारश्च । स्फुना फूत्कारेण लिङ्गति परिज्ञायते इति स्फुलिङ्गोऽग्निकणः "त्रिषु स्फुलिङ्गोऽग्निकणः" इति कोषः । रक्ताशोकस्तबकेत्यत्र एकस्य पुष्पस्य तादृग्लालिम्नोऽभावात् समूहार्थकस्य गुच्छपदस्य प्रदानम् ।

अत्र कठिनवर्णघटितसंयोगपरह्रस्वाक्षराणां बाहुल्येन दर्शनात् श्रुतिकटुत्वे सत्यपि राज्ञः विरहविधुरत्वजन्यास्वास्थ्यवशीभूतत्वात् नायं दोषः प्रत्युत गुण एवेति विभाव्यम् ।

अत्र सञ्जाते तु घनाभिवर्षे नवजलधराणां सन्नद्धत्वेऽपि विद्यमाने कथं तावत् सवितुः प्रखरतया विभाव्यमानत्वं मणिमादातुं आलम्बितकरत्वमुत्प्रेक्ष्यते कविनेति काव्यविश्वस्यात्मनोऽपरतन्त्रत्वेनैव प्रजापतित्वं घटितमिति चोपरिष्टात्कथं भगवान् मृगराजधारीत्यत्र स्थले वक्ष्यते ॥

इयञ्च शिखरिणी । तल्लक्षणं प्रागुक्तमेव ॥ ६१ ॥

भवतु । आदास्ये तावदेतद् रत्नम् । इति ग्रहणं रत्नस्य नाटयति ।

**प्रणयिनीति**—प्रणयिन्यां प्रियायां बद्धः आस्वादः आसक्तिः येन सः

( द्विपदिकयोपसृत्य गृहीत्वात्मगतम् )

मन्दारपुष्पैरधिवासितायां यस्याः शिखायामयमर्पणीयः ।
सैव प्रिया सम्प्रति दुर्लभा मे नैवैनमश्रूपहतं करोमि ॥ ६३ ॥

( इत्युत्सृजति )

( नेपथ्ये )

वत्स ! गृह्यताम् गृह्यताम्

सङ्गमनीयो मणिरिह शैलसुताचरणरागयोनिरयम् ।
आवहति धार्यमाणः सङ्गममाशु प्रियजनेन ॥ ६४ ॥

---

बाष्पैरश्रुभिराकुले लुवे अवरुद्धे नयने यस्य तादृशः दुःखित अत एव क्षामितं म्लानं वदनमाननम् यस्य एतादृशः गजपतिः गहने वने परिभ्रमति ॥ ६२ ॥

( द्विपदिकया उपसृत्य तं मणिं गृहीत्वा आत्मगतम् मनस्येवाह )

**मन्दारेति**—यस्याः मम प्रियायाः मन्दारः कल्पतरुः तस्य पुष्पैः प्रसूनैः अधिवासितायां सुगन्धीकृतायां शिखायां केशपाशे अयं मणिरर्पणीयः निवेशन-योग्यः सा एव मे प्रिया सम्प्रति अधुना दुर्लभा कृच्छ्रेण लभ्या । यस्याः कृते अहमेनमुद्गृहीतुं कामये सा एव मत्पार्श्वे नास्ति तदा तद्ग्रहणं निरर्थकम् तेन च एनं मणिं अश्रूपहतं अश्रुबिन्दुदूषितं नैव करोमि । प्रियाया असान्निध्यात् अस्य ग्रहणं व्यर्थं सत् केवलं बाष्पैर्दूषणायैव भवेदिति मत्वा नाहं गृह्णामीति विचार्यते । अत्र प्रियालाभरूपकार्यस्यात्ययात् "विरोधनं" नाम विमर्शसन्ध्यङ्गमुक्तं भवति ।

इन्द्रवज्रा वृत्तम् । स्यादिन्द्रवज्रा यदि तौ जगौ गः इति लक्षणात् ॥ ६३ ॥

इति विचार्य मणिमुत्सृजति ।

नेपथ्ये—अदृष्टभाषितम्—तल्लक्षणं यथा प्रथमाङ्के प्रोक्तम् ।

वत्स ! गृह्यतां गृह्यतामयं मणिः ।

**सङ्गमनीयेति**—इह अस्मिन् स्थले शैलसुतायाः गिरिजायाः चरणयोः रागः लालिमा एव योनिः कारणं यस्य स अयं सङ्गमनीयाख्यः मणिरस्ति । यः मणिः धार्यमाणः शरीरे धार्यते चेत् प्रियजनेन प्रणयिजनेन सङ्गमं समागममाशु शीघ्रमेवावहति विदधाति । पार्वतीचरणसरसिजसमुत्पन्नोऽयं मणिः, एनं गृहाण, धारिते ह्यस्मिन् दयितजनेन सत्वरमेव समागमो भवतीति अस्य गुणः । त्वञ्च विरही, गृहाणैनम् । इति नेपथ्यभाषितम् । अस्य मणेः संयोगेन नायको नायिकया सङ्गमिष्यते । अस्यैव योगं तावत्कविवरः सूचितवान् आदिमे पद्ये यथा "स्थिरभक्तियोगसुलभेति" अध्येतृभिः स्मर्तव्यम् । आर्या जातिः ॥ ६४ ॥

**राजा**—( ऊर्ध्वमवलोक्य ) को मामनुशास्ति । ( विलोक्य ) कथं भगवान् मृगराजधारी । भगवन्! अनुगृहीतोऽहममुनोपदेशेन ।

( मणिमादाय ) हंहो सङ्गममणे !

तया वियुक्तस्य निमग्नमध्यया
भविष्यसि त्वं यदि सङ्गमाय मे ।
ततः करिष्यामि भवन्तमात्मनः
शिखामणिं बालमिवेन्दुमीश्वरः ॥ ६५ ॥

---

**राजा**—( ऊर्ध्वं आकाशे अवलोक्य ) को माम् अनुशास्ति मणिमादातुमाज्ञापयति । ( विलोक्य ) कथं भगवान् मृगराजधारी चन्द्रः । राज्ञश्चन्द्रवंशित्वात् तत्रभवांश्चन्द्रः एवानुशासनपरः इति ज्ञेयम् । भगवन्! असुना मणिग्रहणमयेनोपदेशेन अनुगृहीतः विरहात् उद्धृतोऽस्मि ।

अत्रेदं सहृदयैरूह्यं यद्राजा उर्वशीसनाथो यदा विहारार्थं प्रक्रान्तः तदा तावद्वर्षासमयः आसीत् अत एव नवजलधरेति पद्ये चतुर्थाङ्कप्रारम्भे एव पटुधारासारस्य वर्णनं, पुनश्च मनस्तापवृद्धिहेतोः जलधरकालस्य प्रत्यादेशोद्योगो नायकस्य, विद्युल्लेखावतामम्बुवाहानां गगने नैगमत्वेन विहारवर्णनं मेघाभिवृष्टसिकतानां वनस्थलीषु सद्भावः, शिखिनां पयोदोन्मुखत्वं, राजहंसानां मानसाय गमनप्रक्रमः परं च शिलोच्चयानुयोगे "मेघोदयोऽपि शतह्रदाशून्यः संवृत्तः" इति प्रकटनं, नवमेघकालस्य दशदिक्षु व्याप्तत्वमित्यादिभिः समस्तोपकरणैः अतिघनघटासमाच्छादितं गगनं प्रावृषि तत्परिसरे तदानीमासीत् इति मनागपि न शङ्क्यते, एवं सत्यपि तत्रभवतः कवेः मणिमुद्ग्रहीतुं "पूषा व्यवसित इवालम्बितकरः" इति भगवदादित्यस्य स्फुटकिरणकरप्रपातस्य भृशं असमञ्जसत्वे दुर्वारे सत्यपि परस्मिन्नेव मुहूर्ते कुतोऽयं मणिरिति जिज्ञासयोर्ध्वालोकनव्यग्रस्य नायकस्य तादृशमेघघटाकृष्णायितव्योम्नि आदित्यदीप्तौ च "कथं भगवान् मृगराजधारीति" चन्द्रमसः स्फुटालोकस्तावद्दुर्घट एवेति पूर्वप्रोक्तस्य ख्यातविरोधात्मकस्याप्राकृतिकत्वदोषस्य वारणाय नायकस्य विरहोन्मादगह्वरं, कवेर्वा नियतितन्त्रापारतन्त्र्यदुर्गं शरणमतीव दुर्बलमिति ॥

( मणिमादाय )

अत्र मणिग्रहणप्रसङ्गे प्रेयसीप्राप्तिरूपवीजस्योपसंह्रियमाणप्रयोजनस्य प्रोत्साहकत्वात्प्ररोचना नाम विमर्शसन्ध्यङ्गम् ॥ यल्लक्षणं दर्पणे "प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी ॥"

हंहो सङ्गममणे !

**तयेति**—नितरां मग्नः निमग्नः कृशो मध्यप्रदेशः यस्याः सा; तनुमध्यया तया वियुक्तस्य मे यदि त्वं सङ्गमाय समागमफलाय भविष्यसि ततः भवन्त-

(परिक्रम्यावलोक्य च) अये! किं नु खलु कुसुमरहितामपि लतामिमां पश्यता मया रतिरुपलभ्यते। अथवा स्थाने मम मनो रमते। इयं हि—

तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा।
चिन्तामौनमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा॥ ६६॥

---

मात्मनः मम शिखामणिं चूडामणिं करिष्यामि त्वां मस्तके धारयिष्यामीति भावः। ईश्वरः शिवः बालमिन्दुमिव। यथा शिवेन नवेन्दुः स्वचूडामणित्वेन कल्पितस्तथैव यदि त्वं तनुमध्यया तया विरहितस्य मम प्रियया सह समागमं कारयिष्यसि तदा अहं त्वां मम शिरसि निधास्ये। शिरसि धारणं परमादरसूचकम्। सङ्गमायेति तादर्थ्ये चतुर्थी। अत्रोपमा। वंशस्थवृत्तम्॥ ६५॥

(परिक्रम्य अवलोक्य च) अये! किं नु खलु किमस्य कारणं यत् कुसुमैः रहितां हीनामपि इमां पुरोवर्तिनीं लतां पश्यता प्रेक्षमाणेन मया रतिः प्रीतिरुपलभ्यते। मणिं प्राप्य लतारूपे परिणतायां उर्वश्यां प्रीतिः समुत्पद्यते। किन्तु लतापरिणाममजानन् आह—नाहं जाने किमस्य कारणं यदहं लतामेनां पश्यामि मुदितश्च जात इति। अथवा स्थाने युक्तमेव तत् यन्मे मनः अत्र रमते। तस्या लताया रूपं वर्णयति—इयं हि लता कीदृशी इत्याह—

**तन्वीति**—तन्वीयं लता एतादृशी लक्ष्यते यत् सा कोपना मम प्रिया एव चरणपतितमपि मामवमत्य पश्चात्तापयुतेव भवेत्। पश्चात्तापयुतायामुर्वश्यां लतायां चास्यां सामान्यं दर्शयति—

चण्डी यदा सानुतापा स्यात्तदा बाष्पाणामुद्गमः स्यात्तेन च अधरोऽपि धौतः स्यात्। तथैव लतायामपि। मेघजलं वर्षाजलं तेन आर्द्राः पल्लवा यस्याः सा तस्या भावः वृष्ट्या आर्द्रपल्लववतीत्वात् अश्रुभिः बाष्पैर्धौतः क्षालितः अधरः यस्याः सा तादृशी प्रतिभाति। परञ्च अनुतापचिह्नमिदं यतः प्रथमं अनुतापवती ललना भूषणानि न परिधत्ते। अत्र च लतासु कुसुमोद्गमस्य समयाभावे तदभावात् आभरणरहितत्वं कल्प्यते। स्वस्य कालः पुष्पोद्गमसमयः तस्य विरहादभावात् विश्रान्तः पुष्पाणामुद्गमः प्रादुर्भावः यस्याः सा कुसुमरहिता लता आभरणैः अलङ्कारैः शून्या इव प्रतिभाति। पुनश्च सानुतापा रमणी बद्धमौना भवति। इह च लतापक्षे कुसुमानां विरहात् मधुकरा नायान्ति तेन तेषां गुञ्जनं न, अत एव भ्रमरगुञ्जनराहित्येन इदं प्रतीयते यत्सा अनुतापवशात् बद्धमौनेव स्यात्। मधुलिहां मधुकराणां शब्दैः गुञ्जनैर्विना चिन्तया पश्चात्तापेन मौनं आस्थिता एव दृश्यते।

यावदस्यां प्रियानुकारिण्यां लतायां परिष्वङ्गप्रणयी भवामि ।

लए पेक्ख विणु हिअए भमामि
जइ विहिजोएण पुणि तहिँ पाविमि ।
ता रण्णे विणु करिमि णिब्भन्ती
पुण णइ मेल्लइ दाहकअन्ती ॥

[ लते ! प्रेक्षस्व विना हृदयं भ्रमामि
यदि विधियोगेन पुनस्तां प्राप्स्यामि ।
तदारण्येन विना करोमि निर्भ्रान्ति
पुनर्न प्रवेशयामि दाहकृतन्ताम् ॥ ६७ ॥]

( इति चर्चरिकयोपसृत्य लतामालिङ्गति ततस्तदीयस्थानमाक्रम्यैव प्रविष्टोर्वशी )

**राजा**—( निमीलिताक्षः स्पर्शं नाटयित्वा ) अये ! उर्वशीगात्रस्पर्शादिव निर्वृतं मे हृदयम् । पुनरस्ति विश्वासः । कुतः—

---

अत एभिः कारणैः इदं लक्ष्यते यत् सा चण्डी कोपना उर्वशी पादयोः पतितं अनुनये तत्परमपि मां अवधूय तिरस्कृत्य जातानुतापा पश्चात्तापतप्ता इव भवेत् ।

यथा सानुतापा मानिनी अश्रुपूर्णा भवति तथैवेयं लता वर्षाजलार्द्रपल्लवैः प्रतिभाति, यथा सा निरलङ्कारा तथैवेयं कुसुमाभरणैः शून्या, यथा सा मौनमालम्बमाना तथैवेयं द्विरेफगुञ्जनराहित्येन मौनं भजमाना दृश्यते । अनेनेदं प्रकल्प्यते यन्मां चरणयोः पतितमपि तिरस्कृत्य पश्चात्तापयुता सा भामिनी एवेयं लतेति भावार्थः । तन्वी तनुशरीरा, लतापक्षे विरला । अत्रोत्प्रेक्षालङ्कारः । अत्र दशरूपकमतेन कार्यान्वेषणाद् "विरोधनं" नाम सन्ध्यङ्गमुक्तं भवति । शार्दूलविक्रीडितं वृत्तम् ॥ ६६ ॥

यावदस्यां लतायां परिष्वङ्गे आलिङ्गने प्रणयी आसक्तः भवामि । प्रियानुकारिण्यां प्रियायाः उपर्युक्तरीत्या अनुकरणशीलायाम् इति ताच्छील्ये णिनिः ।

**लत इति**—अयि लते । प्रेक्षस्व विचारय । अहमिह वने हृदयेन विना भ्रमामि । हृदयशून्यः अनवस्थितचित्तः सन् भ्रमामि । किन्त्वहं यदि विधियोगेन दैववशात् तां प्रियां पुनः प्राप्स्यामि लमेय तदा अरण्येन विना करोमि वनाद् बहिः निष्कासयामि तथा च दाहं विरहजन्यपीडां कृन्ततीति दाहकृत् तादृशीं तां पुनररण्ये निर्भ्रान्ति निःसन्देहं न प्रवेशयामि आनेष्यामि । निर्गता भ्रान्तिः सन्देहः यस्यां क्रियायां सा यथा स्यात्तथेति क्रियाविशेषणम् ॥ ६७ ॥

( इत्युक्त्वा चर्चरिकयोपसृत्य लतामालिङ्गति )

( ततः तदीयस्थानं लतास्थानमाक्रम्यैव स्वीकृत्यैव उर्वशी प्रविष्टा )

**राजा**—( आनन्दातिरेकात् निमीलिताक्षः प्रियास्पर्शं नाटयित्वा रूपयित्वा ) अये इति हर्षसूचकम् । मे हृदयम् उर्वश्याः गात्रेण संस्पर्शाद् यथा निर्वृतं

समर्थये यत् प्रथमं प्रियां प्रति क्षणेन तन्मे परिवर्ततेऽन्यथा।
अतो विनिद्रे सहसा विलोचने करोमि न स्पर्शविभावितप्रियः ॥६८॥

(शनैरुन्मील्य चक्षुषी) कथं सत्यमेवोर्वशी। (इति मूर्च्छितः पतति)

**उर्वशी**—समस्ससहु समस्ससहु महाराओ। [समाश्वसितु समाश्वसितु महाराजः।]

**राजा**—(संज्ञां लब्ध्वा) प्रिये! अद्य जीवितम्।

त्वद्वियोगोद्भवे चण्डि मया तमसि मज्जता।
दिष्ट्या प्रत्युपलब्धासि चेतनेव गतासुना ॥ ६९ ॥

---

सुखीभवेत् तथैव जातमिति मन्ये। अत्र भावानां सात्विकानामभिव्यक्तिः अतः पुनरस्ति विश्वासो यत्सा प्राप्स्यते। कुत इति हेतुमाह विश्वासे—

**समर्थय इति**—यद्यत् तस्याः वसनगतिलोचननूपुररवादिकं अहं प्रियां प्रति समर्थये निश्चिनोमि तत् सर्वं क्षणेन अन्यथा परिवर्तते। पूर्वं अयं मे प्रियायाः नूपुररवः, इयं तदीया गतिः, इदं तस्या अंशुकमिति यद्यदहं पूर्वं सम्भावयामि तदेव परस्मिन् क्षणे अन्यथा भवति नायं नूपुररवः किन्तु हंसकूजितम्, नेदं वसनम् किन्तु शाद्वलमित्येवं क्षणादेव यन्मया प्रियाविषयकं निश्चितमासीत्तदन्यथा भवति। अतः स्पर्शविशेषेण विभाविता लब्धा प्रिया येन तादृशः अहम् मम विलोचने सहसा विनिद्रे न करोमि नोद्घाटयामि। यतः अयं प्रियास्पर्शः अपि अन्यथा भवेत्।

यथा पूर्वं सर्वं क्षणेनान्यथा जातम् तथैवायं प्रियासम्पर्कोऽपि क्षणेन वैपरीत्यं भजेत् अस्माद् भयान्नाहं सहसा नयने उद्घाटयामि, शनैः शनैः उद्घाटयामि येन प्रियासम्पर्कजन्यानन्दविशेषवञ्चितोऽहं न लघु भवामि।

वंशस्थवृत्तम् ॥ ६८ ॥

(शनैः चक्षुषी उन्मील्य।) कथं सत्यमेव परमार्थत एव उर्वशी। (इति हर्षविशेषान्मूर्च्छितः गतसंज्ञः सन् पतति)

**उर्वशी**—समाश्वसितु समाश्वसितु शान्तो भवतु महाराजः।

**राजा**—(संज्ञां चेतनां लब्ध्वा) प्रिये! अद्य जीवितम्।

**त्वदिति**—तव वियोगोद्भवे विरहात् सञ्जाते तमसि शोके मज्जता मया गतासुना निर्गतप्राणेन प्राणिना चेतना संज्ञा इव त्वं दिष्ट्या सौभाग्येन प्रत्युपलब्धासि पुनः प्राप्तासि।

त्वद्विरहजन्यशोकसागरे मग्नेन मया त्वं मत्सुदैववशात् यथा निर्गतजीवेन प्राणिना संज्ञा प्राप्यते तथा प्राप्तासि। यथा चेतनाया लाभेन मानवः विवेकं कार्यकारिणीं शक्तिं लभते तथैव त्वदाप्त्या अहमधुना सचेतनः सन् स्वस्थतामाप्तः इति तात्पर्यम्। अनुष्टुब् वृत्तम् ॥ ६९ ॥

**उर्वशी**—मरिसदु मरिसदु महाराओ । जं मए कोववसं गदाए अवत्थंतरं पाविदो महाराओ । [ मर्षयतु मर्षयतु महाराजः यन्मया कोपवशं गतयावस्थान्तरं प्रापितो महाराजः । ]

**राजा**—नाहं प्रसादयितव्यस्त्वया । त्वद्दर्शनेन प्रसन्नो मे सबाह्यान्तरात्मा । तत्कथय कथमियन्तं कालं मया विरहिता स्थितासि ।

( अनन्तरे चर्चरी )

मोरा परहुअ हंस रहंग
अलि गअ पव्वअ सरिअ कुरंगम् ।
तुज्झह कारणे रण्ण भमन्ते
को ण हु पुच्छिअ मइ रोअन्ते ॥
[ मयूरः परभृद्धंसो रथाङ्गोऽ-
लिर्गजः पर्वतः सरित्कुरङ्गः ।
तव कारणेनारण्ये भ्रमता
को न खलु पृष्टो मया रुदता ॥ ७० ॥ ]

---

**उर्वशी**—मर्षयतु मर्षयतु महाराजः, क्षन्तव्यो हि ममापराधः । यतः कोपवशं गतया मया अवस्थान्तरं प्रापितः । कोपोपहतमानसया मया महाराजः अन्यामेव अवस्थां प्रापित इति मदीयोऽपराधः क्षन्तव्यः ।

**राजा**—अहन्त्वया प्रसादयितव्यः आराधनीयो नास्मि । मां प्रसन्नं कर्तुं त्वया यत्नो न कार्यः । यतः त्वद्दर्शनेन मे सबाह्यन्तरात्मा बहिःकरणानि अन्तःकरणञ्च प्रसन्नानि । बहिरन्तश्चाहं मुदितोऽस्मि त्वदीयदर्शनसौभाग्येन अतः मां प्रीणयितुं मा यतेथाः । तत्कथय त्वं कथं इयन्तं कालं मया विरहिता वियुक्ता स्थितासि । इयन्तमित्यनिर्वचनीयमिति भावः । समयस्यानेन दीर्घत्वम् प्रकाशितम् । इह नाहं प्रसादयितव्य इति स्थले प्रियाप्राप्तिरूपबीजकार्योपगमनाद् आदानं नाम विमर्शसन्ध्यङ्गमुक्तं भवति "कार्यसङ्ग्रह आदान"मिति लक्षणात् ॥

( अनन्तरे चर्चरी )

**मयूरेति**—तव कारणेन त्वामन्वेष्टुं कानने वने भ्रमता त्वल्लाभाभावाद् रुदता मया मयूरः, परभृत् कोकिलः, हंसः, रथाङ्गश्चक्रवाकः, अलिर्भ्रमरः, गजः, पर्वतः, कुरङ्गः सारङ्गः इत्यादयः तथा च को वान्यो न पृष्टः । अपि तु सर्वेऽपि पृष्टाः प्रत्युत्तरस्यालाभादपमानोऽपि सोढः इति सारः । त्वदर्थं रुदता अरण्ये भ्रमता च मया ये केचन मध्ये मिलिताः ते सर्वेऽपि पृष्टा इत्यर्थः ।

**उर्वशी**—

अन्तक्करणपच्चक्खीकिदवुत्तन्तो महाराओ ।

[अन्तःकरणप्रत्यक्षीकृतवृत्तान्तो महाराजः ।]

**राजा**—प्रिये ! अन्तःकरणमिति न खल्ववगच्छामि ।

**उर्वशी**—सुणादु महाराओ । पुरा भअवदा महासेणेण सासदं कुमारव्वदं गेण्हिअ अकलुसो णाम गन्धमादणकच्छो अज्झासिदो । किदा अ त्थिदी । [श्रृणोतु महाराजः । पुरा भगवता महासेनेन शाश्वतं कुमारव्रतं गृहीत्वा अकलुषो नाम गन्धमादनकच्छोऽध्यासितः । कृता च स्थितिः ।]

**राजा**—कीदृशी ।

**उर्वशी**—जा किल इत्थिआ इमं देसं आगमिस्सदि सा लदाभाएण परिणदा भविस्सदि । किदो अ सावान्तो गोरीचरणराअसंभवं मणिं वज्जिअ लदाभावं ण मुंचिस्सदि त्ति । तदो अहं गुरुसावसंमूढहिअआ विसुमरिददेवदाणिअमा अम्हका-

---

अत्र छादनं नाम विमर्शसन्ध्यङ्गं लभ्यते, यल्लक्षणं दर्पणे "कार्यार्थमपमानादेः सहनं खलु यद्भवेत्......तदाहुश्छादनं पुनः" ॥ ७० ॥

**उर्वशी**—अन्तःकरणेन मनसा प्रत्यक्षीकृतो दृष्टः वृत्तान्तः यस्य सः एतादृशो महाराजः अस्ति । यद्यद् भवद्भिः मम कृते प्रलपितं तत्सर्वं मया मनसा परिज्ञातम् । भवतो हृदयं जानन्त्या मया सर्वं विश्वसतेऽलं प्रतिपादनेनेति भावः । अत्र "अनुनयो" नाम नाट्यलक्षणम् ।

**राजा**—प्रिये ! अन्तःकरणमिति पदेन तवार्थं न खलु अवगच्छामि । किन्त्वे तात्पर्यमिति नावगतं मया ।

**उर्वशी**—श्रृणोतु महाराजः । इदानीं सर्वं शापकारणादिकं प्रकटीकरोति । पुरा प्राचीनसमये भगवता महासेनेन शाश्वतं निरन्तरं कुमारव्रतं ब्रह्मचर्यव्रतं गृहीत्वा अकुलषो नाम, गन्धेन सौरभेण मादयति मत्तं करोति इति तच्छीलः कच्छो जलप्रायप्रदेशः अध्यासितः वासाय स्वीकृतः । पुरा महासेनः नैष्ठिकं व्रतं गृहीत्वा अकलुषाख्ये जलाशये न्यवसत् । तेन एषा स्थितिर्मर्यादा कृता ।

**राजा**—कीदृशी च सा मर्यादा इति शेषः ।

**उर्वशी**—या किल स्त्री इमं देशं अकलुषाख्यं कच्छं आगमिष्यति सा लताभावेन लतारूपेण परिणता भविष्यति । लतात्वं प्राप्स्यतीति भावः । तथा च महासेनेन शापान्तः शापादस्मान्मुक्त्युपायः कृतः यत् गौर्याश्चरणरागात् सम्भूतं

जणपरिहरणीअं कुमारवणं पविट्ठा । पवेसाणन्तरं अ काणणोवन्तवत्तिलदाभाएण परिणदं मे रूवम् । [ या किल स्त्री इमं देशं आगमिष्यति सा लताभावेन परिणता भविष्यति । कृतश्च शापान्तः गौरीचरणरागसम्भवं मणिं वर्जयित्वा लताभावं न मोक्ष्यतीति । ततोऽहं गुरुशापसम्मूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा । प्रवेशानन्तरञ्च काननोपान्तवर्तिलताभावेन परिणतं मे रूपम् । ]

राजा—प्रिये ! सर्वमुपपन्नम् ।

रतिखेदसुप्तमपि मां शयने या मन्यसे प्रवासगतम् ।
सा त्वमिहैतदवस्थं कथं सहेथाश्चिरवियोगम् ॥ ७१ ॥

इदं चैतद्यथाकथितं सङ्गमनिमित्तं पुनरुपलब्धप्रभावमस्माभिः ।

( इति मणिं दर्शयति )

उर्वशी—कधं संगमणीओ अअं मणी । अदो एव्व महाराएण आलिङ्गिदा ज्जेव एदंवत्थम्हि संवुत्ता । [ कथं सङ्गमनीयोऽयं मणिः अत एव महाराजेनालिङ्गितैवेतदवस्थास्मि संवृत्ता । ]

---

मणिं सङ्गमनीयं वर्जयित्वा अपहाय सा स्त्री लताभावं न मोक्ष्यति त्यक्ष्यति । मणिं विना शापमोचनमसम्भवीति भावः । ततश्च गुरोः भरताचार्यस्य द्वितीयाङ्के वर्णितात् शापात् संमूढं हृदयं यस्याः सा एतादृशी अहं विस्मृतदेवतानियमाविज्ञातदेवमर्यादा सती स्त्रीजनैः परिहरणीयं त्याज्यम् कुमारवनं प्रविष्टा । प्रवेशानन्तरञ्च काननस्य वनस्य उपान्ते समीपे लताभावेन मे रूपम् परिणतं जातम् । अहं लतात्वं प्राप्ता ।

राजा—प्रिये ! सर्वमिदं यत्त्वयोक्तम् तदुपपन्नम् युक्तम् ।

रतीति—या त्वं पुरा रतिः सम्भोगः तज्जन्येन खेदेन श्रमेण शयने सुप्तमपि माम् प्रवासगतम् विप्रकृष्टमिव मन्यसे सा त्वं इह एतदवस्थं एवंप्रकारकम् अनिर्वचनीयमीदृशं वा चिरकालीनं वियोगम् कथं सहेथाः ।

या त्वं पुरा एकस्मिन्नेव शयने त्वया सह सुप्तमपि मां विप्रकृष्टमिव मत्वा पीडिताऽभवः सा एव त्वं कथमिदं विलक्षणं विरहं सोढवती इत्यर्थः । अत्रापि "अनुनयो" नाम नाट्यलक्षणम् । आर्या जातिः ॥ ७१ ॥

इदञ्च मत्पाणौ यथा कथितं यथा त्वया प्रतिपादितं तादृशमेव सङ्गमनिमित्तं समागमहेतुं उपलब्धप्रभावं सङ्गमशक्तियुक्तं रत्नं मयासादितमस्तीति शेषः । ( इति मणिं दर्शयति )—

उर्वशी—कथं सङ्गमनीयोऽयं मणिः । अत एव महाराजेन आलिङ्गिता

राजा—( ललाटे मणिं सन्निवेश्य )

स्फुरता विच्छुरितमिदं रागेण मणेर्ललाटनिहितस्य ।
श्रियमुद्वहति मुखं ते बालातपरक्तकमलस्य ॥ ७२ ॥

उर्वशी—पिअंवद ! महन्तो क्खु कालो अम्हाणं पइट्ठाणदो णिग्गदाणं । कदाइ असूइस्सन्ति पकिदिओ अम्हाणं । ता एहि । गच्छम्ह ।

[ प्रियंवद ! महान् खलु कालः आवयोः प्रतिष्ठानान्निर्गतयोः । कदाचिदसूयिष्यन्ति प्रकृतय आवाभ्याम् । तदेहि गच्छावः । ]

( इत्युत्तिष्ठतः )

राजा—यदाह भवती ।

उर्वशी—अध कधं महाराओ गन्तुं इच्छदि ?

[ अथ कथं महाराजो गन्तुमिच्छति ? ]

---

एवाहं एतदवस्था पुनरपि रमणीयरमणीरूपं दधाना संवृत्तास्मि जाताऽस्मि । अस्य मणेरेवायं प्रभावो यदहं शापमुक्ता भूत्वा लतारूपं परित्यज्य ललनारूपं पुनरपि प्राप्तेत्यर्थः ।

राजा—( ललाटे मणिं सन्निवेश्य धृत्वा ) ।

स्फुरतेति—तव ललाटे कपाले निहितस्य सन्निवेशितस्य मणेः स्फुरता समन्ततः प्रसरता रागेण लालिम्ना विच्छुरितं कर्बुरितमतः सुशोभितं तव मुखं बालेन कोमलेन आतपेन रक्तस्य कमलस्य श्रियं शोभामुद्वहति धारयति । भाले धृतस्यास्य सङ्गममणेरितस्ततः प्रसमरया रक्तभासा लसितं ते ललितं मुखं रक्तकमलस्य शोभामुद्वहति इति भावः ।

अत्र बालातपरक्तस्य कमलस्य शोभायाः मुखे समारोपान्निदर्शनालङ्कारः । तल्लक्षणं यथा काव्यप्रकाशे "निदर्शना—अभवन्वस्तुसम्बन्धः उपमापरिकल्पकः" इति । आर्या जातिः ॥ ७२ ॥

उर्वशी—प्रियंवद मधुरालापिन् ! प्रतिष्ठानादावासात् राज्याद्वा निर्गतयोः प्रस्थितयोरावयोः महान् खलु कालः सञ्जातः । कदाचित् प्रकृतयः प्रजाः आवाभ्यां असूयिष्यन्ति दोषं दास्यन्तीत्यर्थः । प्रतिष्ठानं हि प्रयागस्य पूर्वतीरे वर्तमाना विक्रमराजधानी । तत् अत एव एहि ! गच्छावः ।

( इति उत्तिष्ठतः )

राजा—यदाह भवती तदेव सम्यगिति शेषः ।

उर्वशी—अथ कथं कीदृशेन यानेन गन्तुमिच्छति महाराजः । उर्वश्याः अप्सरस्त्वात् देवताप्रमेनिलात्तस्मिन्नेव क्षणे यत्किमपि सम्पादयितुं सामर्थ्यं विद्यते ।

राजा—

अचिरप्रभाविलसितैः पताकिना
सुरकार्मुकाभिनवचित्रशोभिना ।
गमितेन खेलगमने विमानतां
नय मां नवेन वसतिं पयोमुचा ॥ ७३ ॥

( चर्चरी )

पाविअसहअरीसंगमओ पुलअपसाहिअअंगअओ ।
सेच्छापत्तविमाणओ विहरइ हंसजुआणओ ॥ ७४ ॥
[ प्राप्तसहचरीसङ्गमः पुलकप्रसाधिताङ्गः ।
स्वेच्छाप्राप्तविमानो विहरति हंसयुवा ॥ ७४ ॥ ]

---

राजा—अचिरेति—अयि खेदसलीलं गमनं गतिर्यस्याः सा तादृशि ललितगमने प्रिये ! अचिरप्रभायाः सौदामिन्याः विलसितैः प्रकाशैः पताकिना ध्वजयुतेन केतुमता वा, सुरकार्मुकम् इन्द्रधनुस्तद्रूपेण अभिनवेन नूतनेन विविधरङ्गयुतेन चित्रेणालेख्येन शोभिना भूषितेन तथा चास्माकं कृते विमानतां गगनयानत्वं गमितेन प्राप्तेन नवेन पयोमुचा मेघेन मां वसतिं आवासं नय ।

विमाने ध्वजः, विविधानि मनोरमाणि चित्राणि भवन्ति, वर्षासमयत्वात् जलधरमेव राजा विमानत्वेन कल्पयते तत्र तादृक् कल्पने ध्वजः तु विद्युद् भविष्यति । इन्द्रधनुश्च नानारङ्गसन्दानितम् अत एव चित्रत्वं प्राप्स्यति । एतादृशेन विमानत्वमाप्तेन जलदरूपेण यानेन मां गृहं नयेति प्रार्थनम् । अत्र मेघस्य विमानत्वेन निरूपणात्, विद्युतः ध्वजत्वेन इन्द्रधनुषश्च चित्रत्वेन कल्पनात् रूपकमलङ्कारः ।

अत्र प्रसादमाधुर्ये गुणौ । अनुप्रासालङ्कारश्च । मञ्जुभाषिणी वृत्तम् । लक्षणं यथापूर्वमेव ॥ ७३ ॥

( चर्चरी ) हंसयूनः अन्योक्त्या आह—प्राप्तः सहचर्या सङ्गमः समागमो येन सः, पुलकेन आनन्दातिरेकजन्यरोमोद्गमेन प्रसाधितम् शोभितम् अङ्गं देहः यस्य सः, स्वेच्छानुसारं प्राप्तः विमानः येन च एतादृशो हंसयुवा विहरति । राज्ञः पक्षे सविशेषो मान उत्कर्ष इति विमानः, हंसपक्षे तु व्योमयानम् विमानम् । अङ्कस्यारम्भः अपि हंसस्यान्योक्त्या कृतः, तेनैव च समापितोऽङ्कः अनेनात्र समाधिर्नाम गुणः ॥ ७४ ॥

( इति खण्डधारया निष्क्रान्तौ )

॥ इति चतुर्थोऽङ्कः ॥

---

"इत्यनन्तरं खण्डधारया पूर्वोक्तलक्षणया गीत्या निष्क्रान्तौ नायिकानायकौ"

इति चतुर्थोऽङ्कः ।

इति श्रीमत्प्रमोदमोदमानमानसरसाविभक्तभगवल्लीलाललितकीर्तनस्वानस्वानन्दसक्तभक्तगोष्ठीगरिष्ठाणां रामानुजार्यकैङ्कर्यधुरीणानां प्रखरकिरणकरप्रतिभतेजःप्रकरप्रभाकराणां कविपण्डितेन्द्रमण्डलालङ्कारहीराणां अजस्रप्रणामारुणितवन्दारुराजन्यवृन्दमुकुटमौक्तिकपूज्यपदद्वन्द्वारविन्दानां रसिकतारसनिधीनां तोताद्रिविज्ञानविभवपीठाधीशानां आचार्यवर्याणां वेदवेदान्तन्यायमीमांसाद्यखिलनिगमागममन्थानशेमुषीकाणां विज्ञानविभूषणपदधारिणां स्वामिनां इन्दूरपुराभरणानां श्रीकृष्णाचार्यवर्याणां तनूभवैः सहृदयताजलनिधिकौस्तुभैः एम्. ए. काव्यपुराणतीर्थसाहित्यविशारदाद्यनेकोपाधिसमुल्लसितैः सुरेन्द्रनाथशास्त्रिभिः विरचितायां विक्रमोर्वशीयसञ्जीविकायां विद्वन्मनःसागरशशिलेखायाम् कल्पलतासमाख्यायां व्याख्यायां चतुर्थाङ्कोद्योतः ॥

---

# पञ्चमोऽङ्कः ।

( ततः प्रविशति हृष्टो विदूषकः )

**विदूषकः**—ही ही भो, दिट्ठिआ चिरस्स कालस्स उव्वसीसहाओ तत्तभवं राआ णंदणवणप्पमुहेसु पदेसेसु विहरिअ पडिणिवुत्तो । पविसिअ णअरं दाणीं सकज्जाणुसासणेण पइदिमण्डलं अणुरज्जअन्तो रज्जं करेदि । असंताणत्तणं वज्जिअ से ण किं वि सोअणीअम् । अज्ज तिहिविसेसो त्ति भअवदीणं गङ्गाजमुणाणं संगमे देवीए सह किदाहिसेओ संपदं उवआरिअं उवविट्ठो । ता जाव अलंकरणीयमाणस्स अङ्गाणुलेवणमल्लभाई भादुओ विअ होमि। ( इति परिक्रामति )

( नेपथ्ये ) हद्धी हद्धी । एसो तालावन्तपिधाणं णिक्खिविअ णीअमाणो अच्छराविरहिदेण मोलिरअणदाए योइदो मणी आमिससङ्किणा गिद्धेण आक्खित्तो । [ ही ही भोः! दिष्ट्या चिरस्य कालस्योर्वशीसहायः तत्रभवान् राजा नन्दनवनप्रमुखेषु

---

## पञ्चमोऽङ्कः ।

अथ स्वस्वस्थानेषु यथाक्रमं सन्निवेशितान् मुखसन्ध्यादिरूपानर्थान् एकत्वेन योजयितुं निर्वहणसन्धिगर्भं चरममङ्कमारभते । तल्लक्षणं यथा धानञ्जये "बीजवन्तो मुखाद्यर्थाः विप्रकीर्णा यथायथम् । ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ।"

इदानीं विदूषकमुखेनाग्रिमकथोपन्यासार्थं तत्प्रवेशमाह ततः प्रविशति हृष्टः परितुष्टो हृष्टमना विदूषकः । ही ही भोः इति आश्चर्ये । दिष्ट्या सौभाग्यमिदम् यत् चिरस्य कालस्य भूयसा समयेन उर्वशीसहायः तत्रभवान् मान्यो राजा नन्दनवनप्रमुखेषु इन्द्रनगरोपवनादिषु बहुषु रमणीयेषु प्रदेशेषु विहृत्य विहारं कृत्वा प्रतिनिवृत्तः प्रत्यागतः । इदानीं नगरं प्रतिष्ठानाख्यं प्रविश्य स्वकार्यानुशासनेन राजकार्यावलोकनेन प्रकृतिमण्डलं प्रजागणमनुरञ्जयन् प्रसादयन् राज्यं करोति । असन्तानत्वं अपत्यविहीनत्वं वर्जयित्वा विहाय अस्य राज्ञः किमपि शोचनीयम् न, सर्वमन्यदनुगुणं केवलमस्य निरपत्यता त्रासयित्री । अथ स राजा तिथिविशेषः कश्चन पर्वविशेषः इति हेतोः भगवत्योः गङ्गायमुनयोः सङ्गमे देव्या महिष्या सह कृताभिषेकः विहितमज्जनः सन् साम्प्रतम् अधुना उपकार्या पटभवनम् (tent) उपविष्टः स्थितः । तद् यावत् अलङ्क्रियमाणस्य भूष्यमाणस्य तस्य राज्ञः अङ्गेषु अनुलेपनम् कुङ्कुममृगमदाद्युद्वर्तनं तथा च माल्यं

प्रदेशेषु विहृत्य प्रतिनिवृत्तः। प्रविश्य नगरमिदानीं स्वकार्यानुशासनेन प्रकृतिमण्डलमनुरञ्जयन् राज्यं करोति। असन्तानत्वं वर्जयित्वा अस्य न किमपि शोचनीयम्। अद्य तिथिविशेष इति भगवत्योः गङ्गायमुनयोः सङ्गमे देव्या सह कृताभिषेकः साम्प्रतमुपकार्यामुपविष्टः। तद्यावदलङ्क्रियमाणस्याङ्गानुलेपनमाल्यभागी भ्रातेव भवामि। (इति परिक्रामति)

(नेपथ्ये) हा धिक् हा धिक्। एष तालवृन्तपिधानं निक्षिप्य नीयमानोऽप्सरोविरहितेन मौलिरत्नतायां योजितो मणिरामिषशङ्किना गृध्रेणाक्षिप्तः।]

**विदूषकः**—(आकर्ण्य) अच्चाहिदं अच्चाहिदं। परमबहुमदो क्खु तव वअस्स संगमणीओ णाम चूडामणी। अदो क्खु असमत्तणेवत्थो एव्व तत्तभवं आसणादो उट्ठिदो। ता पासपरिवत्ती होमि। (इति निष्क्रान्तः) [अत्याहितम् अत्याहितम्। परमबहुमतः खलु तव वयस्य! सङ्गमनीयो नाम चूडामणिः। अतः खलु असमाप्तनेपथ्य एव तत्रभवान् आसनतः उत्थितः। तत् पार्श्वपरिवर्त्ती भवामि।]

---

कुसुमादीनां गुम्फनम् तयोः भ्रातेव भागित्वात् अंशेनोपभोगकर्तृत्वात् राज्ञः यथा भ्राता भ्रातुः उपभोग्यस्य अंशोपभोगी भवति तथैव तदर्थोपस्थापितानां पदार्थानां भोक्ता भवामि। इति उक्त्वा परिक्रामति इतस्ततः परिभ्राम्यति।

नेपथ्ये वचनमिदम् अत्र बहुषु अर्थसूचकेषु नेपथ्ये अभिधानात् चूलिकाख्यम् अर्थोपक्षेपकम्। तल्लक्षणन्तु यथोक्तमेव। हा धिक् हा धिक् इति कष्टसूचकमव्ययपदम्, वीप्सा च कष्टातिरेकद्योतनाय।

एष इति—एषः तालवृन्तम् एव पिधानम् आवरणम् निक्षिप्य दूरीकृत्य अनावृत एव नीयमानः अप्सरोविरहितेन उर्वशीवियुतेन राज्ञा मौलिरत्नतायां शिखामणित्वे योजितः उपयुक्तः अयं मणिः आमिषशङ्किना मांसखण्डोऽयमिति मन्यमानेन गृध्रेण आक्षिप्तः उत्प्लुत्य नीतः। सङ्गमनीयस्य मणेः "प्रभालेपीति" पद्ये (४।६१) रक्तत्ववर्णनात् गृध्रेण आमिषलवोऽयमिति शङ्कया गृहीतः इति भावः। अत्र रक्तत्वसाधर्म्यात् मणौ आमिषलव इति भ्रमेण ग्रहणधीः, अतः अत्र भ्रान्तिमान् अलङ्कारः "साम्यादतस्मिन् तद्बुद्धिः भ्रान्तिमान् प्रतिभोत्थितः" इति लक्षणात्।

**विदूषकः**—(आकर्ण्य श्रुत्वा) अत्याहितम् अत्याहितम् महद् भयमुपस्थितम् इत्यर्थः। हे वयस्य! तव सङ्गमनीयः सङ्गमे हेतुभूतः चूडामणिः

प्रवेशकः

( ततः प्रविशति राजा सूतश्च कञ्चुकिवेधकौ परिजनश्च )

**राजा**—वेधक वेधक !

आत्मनो वधमाहर्ता क्वासौ विहगतस्करः ।
येन तत्प्रथमं स्तेयं गोप्तुरेव गृहे कृतम् ॥ १ ॥

**किरातः**—एसो अग्गमुहलग्गहेमसुत्तेण मणिणा अणुरञ्जअन्तो विअ आआसं भमदि । [ एष अग्रमुखलग्नहेमसूत्रेण मणिना अनुरञ्जयन्निवाकाशं भ्रमति । ]

**राजा**—पश्याम्येनम्—

असौ मुखालम्बितहेमसूत्रं बिभ्रन्मणिं मण्डलशीघ्रचारः ।
अलातचक्रप्रतिमं विहङ्गस्तद्रागलेखावलयं तनोति ॥ २ ॥

---

शिखारत्नम् परमबहुमतः प्रियतमः; अत एव असमाप्तनेपथ्यः अपरिगृहीतसकलपरिधानः वस्त्रादिकम् अपरिधायैव वा आसनतः राजसिंहासनतः उत्थितः । तत् अतः तव पार्श्वपरिवर्त्ती समीपस्थः भवामि । इति निष्क्रान्तः । प्रवेशकः—लक्षणम् यथापूर्वमेव ।

( ततः प्रविशति राजा सूतः सारथिः, कञ्चुकी वृद्धान्तःपुरसंचारी सेवकः, वेधकः कश्चन किरातः, अन्यपरिजनश्च । ) वेधकस्थाने रेचक इति पाठान्तरम् । राजा वेधकमाहूय पृच्छति ।

**आत्मन इति**—आत्मनः स्वस्य वधम् विनाशरूपं मणिं आहर्ता सम्पादयिता स विहगेषु तस्करः चोरः क्व अस्ति येन पक्षिचोरेण प्रथमं स्तेयं चौर्यम् गोप्तुः लोकानां पालकस्य ममैव गृहे कृतम् । येन खगचोरेण आदौ प्रजानां पालकस्य मम एव गृहे चौर्यं कृतम् स चोरः गृध्रः क्व गतः । तात्पर्यन्तु स मणिं नाहरत् किन्तु आत्मनो वधमेवाहरत् इति वधस्य अत्र मणितादात्म्याभिसम्बन्धात् रूपकमलङ्कारः । तथाच गोप्तुरिति पदस्य विशेषतया साभिप्रायत्वात्परिकरालङ्कृतिश्च । अनुष्टुब् वृत्तम् ॥ १ ॥

**किरातः**—एष अग्रमुखे मुखाग्रे लग्नम् हेमसूत्रम् सुवर्णसूत्रं यस्य तादृशेन मणिना आकाशमनुरञ्जयन् रक्तं कुर्वन्निव भ्रमति ।

अत्र उत्प्रेक्षालङ्कारः ॥

**राजा**—पश्याम्येनम् विहङ्गचोरम् ।

**असाविति**—असौ गगने लक्ष्यमाणः मुखे आलम्बितं गृहीतं हेमसूत्रं कनकदोरकं यस्य तादृशं मणिं बिभ्रत् धारयन् विहङ्गमः मण्डलं मण्डलाकारं वर्त्तुलं तथा शीघ्रं त्वरितं यस्मिन् कर्मणि तद्यथा स्यात्तथाभूतश्चारो गतिः यस्य तादृशः मण्डलाकारगमनेन त्वरितवेगः सन् अलातं ज्वलत्काष्ठं तस्य चक्रं

कथय किं खल्वत्र कर्त्तव्यम् ।

**विदूषकः**—( उपेत्य ) भोः ! अलं एत्थ घिणाए । अवराही सासणीओ [ भोः ! अलमत्र घृणया । अपराधी शासनीयः । ]

**राजा**—सम्यगाह भवान् । धनुर्धनुस्तावत् ।

**परिजनः**—जं भट्टा आणवेदि [ यद्भर्त्ता आज्ञापयति ]

( इति निष्क्रान्तः । )

**राजा**—न दृश्यते हि विहङ्गाधमः ।

**विदूषकः**—इदो इदो दक्खिणन्तरेण चलिदो सउणिहदासो । [ इतइतो दक्षिणान्तरेण चलितः शकुनिहताशः । ]

---

तत्प्रतिमं तत्सदृशं तस्य मणेः रागो लालिमा तस्य लेखा तन्निर्मितं वलयं करोति । अतिवेगेन भ्रमितालातमण्डलवत् प्रभाशालीत्यर्थः । महता वेगेन भ्रामितं ज्वलत्काष्ठं रक्तमिव सर्वत्र दृश्यते तथैव सवेगं तस्य पक्षिणः आकाशे रक्तमणिग्रहणपूर्वकं वर्तुलकारं गमनं मणिनानुस्यूतेन रागेण निर्मितं वलयं विदधातीत्यर्थः । अत्रोपमालङ्कारः । "अलातमुल्मुकमिति" द्वे अर्धदग्धकाष्ठस्य पर्यायाविति कोषः ।

उपजातिवृत्तम् ॥ २ ॥

इदानीम् रे वेधक ! कथय किं नु खलु कर्तव्यम् मणिप्राप्त्यर्थं विधेयमित्यर्थः ।

**विदूषकः**—( उपेत्य तत्रागत्य । ) भो ! अलमत्र घृणया पक्षिणः वधः कथं कार्यः इति मत्वा घृणा दया अत्र न विधेया; यतः अपराधी जनः शासनीयः अवश्यं दण्डनीयः । राजधर्मश्चायम् "दण्ड्यांश्चैवाप्यदण्डयन्" इत्यनेन अपराधिनं यो राजा नानुशास्ति स पापभाक् भवति । अत्र घृणाऽकरणे अपराधिदण्डस्योचितत्वप्रदर्शनस्य हेतुत्वाद्वाक्यस्य काव्यलिङ्गमलङ्कारः । कारुण्यं करुणा घृणा इति कोषः ।

**राजा**—सम्यगाह भवान् युक्तमभिहितं भवता । धनुर्धनुः तावत् । अत्र दण्ड्यदण्डनरूपवर्त्तनस्य शास्त्रोक्तत्वात् नीतिर्नाम नाट्यालङ्कार उपन्यस्तः । "नीतिः शास्त्रेण वर्त्तनम्" ।

**परिजनः**—यद्भर्त्ता स्वामी आज्ञापयति ।

( इति धनुरानेतुं निष्क्रान्तः )

**राजा**—स विहगेषु अधमो नीचश्चोरत्वादिति न दृश्यते क्व गत इति ।

**विदूषकः**—स शकुनिहताशः विहगाधमः इत इतः अनेन मार्गेण दक्षिणान्तरेण दक्षिणया दिशा चलितः ।

**राजा**—( दृष्ट्वा ) इदानीम्—

प्रभापल्लवितेनासौ करोति मणिना खगः ।
अशोकस्तबकेनेव दिङ्मुखस्यावतंसकम् ॥ ३ ॥

**यवनी**—( धनुर्हस्ता प्रविश्य ) भट्टा ! एदं ससरं चावम् । [ भर्तः, इदं सशरं चापम् । ]

**राजा**—किमिदानीं धनुषा । बाणपथातीतः क्रव्यभोजनः । तथाहि—

आभाति मणिविशेषो दूरमिदानीं पतत्रिणा नीतः ।
नक्तमिव लोहिताङ्गः परुषघनच्छेदसम्पृक्तः ॥ ४ ॥

---

**राजा**—( दृष्ट्वा ) इदानीम्—

**प्रभेति**—असौ खगः प्रभया तेजसा पल्लवितेन दीप्तेन अशोकस्तबकेन अशोककुसुमगुच्छेन इव मणिना दिङ्मुखस्य दिशः मुखस्य अवतंसकं कर्णभूषणं करोति । अत्र दिशः नायिकात्वकल्पनम् । सा च कर्णभूषणं परिधत्ते । खगस्तु नायकः । स अवतंसं परिधापयति । प्रायशः सुकुमारा ललनाः कुसुमस्तबकमवतंसयन्ति । स्ववपुषः गौरत्वात् रक्तकुसुमगुच्छं परं भूषयतेतराम् । नायकस्तु खगः दिशं नायिकामनेन रक्ताशोककुसुमस्तबकप्रतिमारुणिम्रा मणिना दिङ्मुखमवतंसयतीत्यर्थः । अत्र दिशः नायिकात्वसंभावनेन, मणेरवतंसत्वविभावनेन उत्प्रेक्षालङ्कृतिः । अशोकस्तबकेति उपमानात् उपमालङ्कारश्च । अनुष्टुप् वृत्तम् ॥ ३ ॥

**यवनी**—काचन प्रतिहारी—( धनुर्हस्ता धनुर्गृहीत्वा प्रविश्य ) भर्तः, इदं सशरं सबाणं चापम् धनुरिति ।

**राजा**—धनुषा चापेन इदानीं किं प्रयोजनम्—व्यर्थमिदानीं धनुः । यतः सः क्रव्यभोजनः मांसाशनः विहगः बाणपथातीतः बाणमार्गमतिक्रान्तः, दूरदेशं प्राप्त इत्यर्थः ॥ तथाहि—

**आभातीति**—पतत्रिणा पक्षिणा इदानीं दूरं दूरदेशं नीतः मणिविशेषः उत्कृष्टः स मणिः नक्तं रात्रौ परुषेषु अविरलेषु निबिडेषु इत्यर्थः कर्बुरितेषु वा घनानां मेघानां छेदेषु संपृक्तः संयुक्तः दृश्यमान इत्यर्थः लोहिताङ्गः मङ्गलाख्यो ग्रहविशेष इव आभाति ।

भौमस्तु रक्तं नक्षत्रम् । रक्तं चेदं रत्नम् । यथा मेघेषु भौमो दूरतः सुन्दरमाभाति तथैव विहङ्गमेन अतिदूरं नीतो मणिप्रवर आभातीति तात्पर्यम् ।

अत्र सहृदयैकगम्यचमत्कारशोभितमिदं उपमालङ्करणम् । "परुषं कर्बुरे रूक्षे स्यान्निष्ठुरवचस्यपि" इति हैमः । कर्बुरितं च "विरक्तसन्ध्यापरुषं पुरस्ताद्यथा

आर्य लातव्य ।

**कञ्चुकी**—आज्ञापयतु देवः ।

**राजा**—मद्वचनादुच्यन्तां नागरिकाः सायं निवासवृक्षाग्रे विचीयतां विहगाधमः ।

**कञ्चुकी**—यथाज्ञापयति देवः । (इति निष्क्रान्तः)

**विदूषकः**—भोः ! विसमीअदु भवं संपदं । कहिं गदो सो रअणुकुम्भीलओ भवादो सासणादो मुंचिस्सदि । [ भोः ! विश्राम्यतु भवान् साम्प्रतम् । कुत्र गतः स रत्नकुम्भीलकः भवतः शासनान्मोक्ष्यते । ]

(इत्युपविशतः)

**राजा**—वयस्य !

रत्नमिति न मे तस्मिन् मणौ प्रयासो विहङ्गमोत्क्षिप्ते ।
प्रियया तेनास्मि सखे सङ्गमनीयेन सङ्गमितः ॥ ५ ॥

---

रजः पार्थिवमुज्जिहीते" इत्यनेकार्थकैरवाकारकौमुदी ॥ 'अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः' इत्यमरः । इयमार्या जातिः ॥ ४ ॥

आर्य लातव्येति कञ्चुकिनः सम्बोधनम् ।

**कञ्चुकी**—आज्ञापयतु देवः ।

**राजा**—मद्वचनात् मदाज्ञया उच्यन्तां समादिश्यन्तां नागरिकाः नगरनिवासिनो जनाः यत् सायं समये निवासवृक्षाग्रे स्वावासनीडाश्रये वृक्षे स विहगाधमः विचीयतामन्वेष्यताम् ।

**कञ्चुकी**—यथा आज्ञापयति तथैवास्तु । (इति निष्क्रान्तः)

**विदूषकः**—भो वयस्य ! विश्राम्यतु शान्तिं विरामं वा गृह्णातु । रत्नस्य कुम्भीलकश्चोरः स विहगाधमः भवतः शासनात् दण्डात् कुत्र गतः सन् मोक्ष्यते । क्व गतः स भवद्दण्डपथातीतो भविष्यति । न कुत्रापीत्यर्थः । यत्र कुत्रापि स गमिष्यति तत्रापि भवच्छासने आगमिष्यति । अनेन राज्ञः सर्वत्रास्खलित शासनशक्तिशालित्वं व्यज्यते । (इति उपविशतः राजाविदूषकौ निषीदतः)

**राजा**—वयस्य !

**रत्नमिति**—विहङ्गमेन पक्षिणोत्क्षिप्ते नीते तस्मिन् मणौ रत्नं बहुमूल्यमिदमिति मत्वा मे प्रयासः प्रयत्नः न । स महार्घो मणिरासीत् तदभावे मम महती क्षतिरिति कृत्वा नाहं तत्कृते दूनः न वा पुनस्तत्प्राप्तिबद्धचित्तः अस्मि, किन्तु

( ततः प्रविशति सशरं मणिमादाय कञ्चुकी )

**कञ्चुकी**—जयति जयति देवः ।

अनेन निर्भिन्नतनुः स वध्यो
रोषेण ते मार्गणतां गतेन ।
प्राप्तापराधोचितमन्तरिक्षा-
त्समौलिरत्नः पतितः पतत्री ॥ ६ ॥

( सर्वे विस्मयं रूपयन्ति )

**कञ्चुकी**—अभिप्रक्षालितोऽयं मणिः कस्मै दीयतामिति ।

**राजा**—वेधक ! गच्छ । कोषपेट्टके स्थापयैनम् ।

**किरातः**—जं भट्टा आणवेदित्ति । [ यद्भर्ताऽऽज्ञापयतीति । ]

( इति मणिमादाय निष्क्रान्तः )

**राजा**—( लातव्यं प्रति ) आर्य ! जानाति भवान् कस्यायं बाण इति ।

---

त्वेन सङ्गमनीयेन तन्नामकेन सङ्गमहेतुभूतेन मणिना हे सखे ! अहम् प्रियया सङ्गमितः सम्मेलितः । नाहं तं मणिं मणित्वेन प्रकल्प्य मानयामि किन्तु प्रिया-सङ्गमकत्वेन तं बहु मत्वा एतावन्तमायासं करोमि । अनेन राज्ञः विपुलकोषवत्त्वं, कृतज्ञत्वं, गुणग्राहकत्वं च ध्वन्यते । इयमार्या जातिः ॥ ५ ॥

( ततः प्रविशति सशरं मणिमादाय कञ्चुकी शरेण येन स वध्यो विहगो हतस्तेन सहितं मणिं गृहीत्वा कञ्चुकी राज्ञः समीपे आगच्छति )

**कञ्चुकी**—जयति जयति देवः ।

**अनेनेति**—वध्यः वधस्य योग्यः स विहङ्गः अनेन मार्गणतां गतेन बाणत्वं प्राप्तेन ते रोषेण क्रुधा निर्भिन्नतनुर्भिन्नदेहः सन् प्राप्तापराधोचितं कृतापराधानुसारं यथा स्यात्तथा तत्फलरूपेण वा समौलिरत्नः शिखामणिना संयुतः स पतत्री अधः पतितः । स विहगस्तु तव क्रुधा एव मृतः । स क्रोध एव बाणत्वमाप्तः । अनेन राज्ञः प्रतापातिशयो द्योत्यते । अत्र च शरेण हतेऽपि खगे तद्धेतुत्वेन क्रुधो वर्णनात् असम्बन्धेऽपि सम्बन्धदर्शनादतिशयोक्तिरलङ्कारः ॥ उपजातिवृत्तम् ॥ ६ ॥

( सर्वे जना विस्मयमाश्चर्यं रूपयन्ति दर्शयन्ति )

**कञ्चुकी**—अभिप्रक्षालितः जलेन धौतोऽयं मणिः कस्मै प्रदीयताम् ।

**राजा**—वेधक ! गच्छ । कोषपेट्टके स्थापयैनम् । कोषाध्यक्षाय दीयताम् ।

**किरातः**—यद्भर्ता आज्ञापयति । ( इति मणिमादाय निष्क्रान्तः । )

**राजा**—( लातव्यं प्रति । ) आर्य कञ्चुकिन् ! जानाति भवान् कस्यायं बाणः । कस्य शरेण हतोऽयं विहङ्ग इति ज्ञायते किं भवता ?

कञ्चुकी—नामाङ्कितो दृश्यते । नात्र मे वर्णविभावसहा दृष्टिः ।

राजा—तदुपश्लेषय शरं यावन्निरूपयामि ।

विदूषकः—किं भवं विआरेदि ? [ किं भवान् विचारयति ? ]

राजा—शृणु तावत्प्रहर्तुर्नामाक्षराणि ।

विदूषकः—अवहिदो म्हि । [ अवहितोऽस्मि । ]

राजा—( वाचयति )

उर्वशी सम्भवस्यायमैलसूनोर्धनुष्मतः ।
कुमारस्यायुषो बाणः संहर्ता द्विषदायुषाम् ॥ ७ ॥

विदूषकः—दिट्ठिआ संताणेण वड्ढदि महाराओ । [ दिष्ट्या सन्तानेन वर्धते महाराजः । ]

राजा—कथमेतत् । सखे ! अनिमिष्या वियुक्तोऽहमुर्वश्या । न

---

कञ्चुकी—नामाङ्कितो दृश्यते । यस्यायं बाणस्तस्य नाम लिखितं दृश्यते । किन्तु अत्र मे वर्णानां विभावः परिज्ञानं तत्सोढुं शक्या दृष्टिर्न । मम वार्धक्यात् दृष्टेः निर्बलत्वात् नाहं विभावयितुं पारयामि किमत्र लिखितमिति ।

राजा—भवतु—शरमुपश्लेषय समीपं स्थापय यावदहं निरूपयामि विभावयामि वाचयामि नामाक्षराणि ।

विदूषकः—किं भवान् विचारयति ?

राजा—शृणु तावत् विहङ्गस्य प्रहर्तुः घातकस्य नामाक्षराणि ।

विदूषकः—अवहितोऽस्मि दत्तचित्तोऽस्मि ।

राजा—( वाचयति )

उर्वशीति—इलायाः गोत्रापत्यं पुमान् ऐलः पुरूरवाः तस्य सूनोः तनयस्य उर्वशीतः संभवः उत्पत्तिर्यस्य सः तस्य उर्वशीपुत्रस्य धनुष्मतः धनुर्धारिणः आयुषः तदाख्यस्यायुर्नामकस्य कुमारस्य द्विषदां शत्रूणामायुषाम् जीवनस्य संहर्ता घातकः अयं बाणः अस्ति इति शेषः । स खलु बाणः विक्रमोर्वश्योः तनयस्यासीत् । आयुर्नाम कुमारः शत्रूणामायुषामाहर्तेति विरोधालङ्कारः । अनुप्रासश्च । इलानाम्नी पुरूरवसो माता । अत्र बीजार्थोपगमात् सन्धिर्नाम निर्वहणसन्ध्यङ्गमुक्तम् । अनुष्टुप् वृत्तम् ॥ ७ ॥

विदूषकः—दिष्ट्या सौभाग्यमिदं यत् महाराजः सन्तानेन पुत्रेण सन्तत्या वर्धते सौभाग्यशालीति । अङ्केऽस्मिन्नेव विदूषकेणोक्तमासीत् यदनपत्यत्वं सर्वं राज्ञो भद्रम् । किन्तु इदानीं ससन्तानत्वं राज्ञः परिज्ञाय महानन्दो विदूषकस्येति दिष्ट्या गम्यते ।

कदाचिदपि तत्रभवती गर्भोविर्भूतदोहदाप्युपलक्षिता । कुत एव प्रसूतिः । किन्तु

आविलपयोधराग्रं लवलीदलपाण्डुराननच्छायम् ।
कतिचिदहनि शरीरं श्लथवलयमिवाभवत्तस्याः ॥ ८ ॥

**विदूषकः**—मा भवं माणुसीधम्मं दिव्वाए ताए संभावेदु । पभावगूढाइँ ताणं चरिदाइँ । [ मा भवान् मानुषीधर्मं दिव्यायास्तस्याः सम्भावयतु । प्रभावगूढानि तासां चरितानि । ]

---

**राजा**—कथमेतत् यदुर्वशीसंभवो मे तनयः स्यात् ? यतः हे सखे ! अनिमिष्या देवाङ्गनया तया उर्वश्या अहं विमुक्त आसम् । तथा च सा तत्रभवती माननीया कदाचिदपि कस्मिन्नपि समये गर्भेण आपन्नसत्त्वतावशात् आविर्भूतम् प्रकटतां प्राप्तं दोहदं गर्भलक्षणम् यस्याः सा तादृशी नोपलक्षिता । इत्येवं सत्यपि कुत खलु प्रसूतिः सन्ततिः ? यद्यपीदमभवत्तथापि कानिचित् चिह्नानि तादृशानि तत्पूर्वरूपाणि वा मयावलोकितान्यासन्निति वर्णयति—किन्तु पूर्वोक्तस्य विकल्पे ।

**आविलेति**—कतिचिदहनि कतिचिद्दिनानि अभवन् यदा तस्याः शरीरम् आविले कृष्णे पयोधराग्रे कुचाग्रे चूचुके वा यस्मिन् तादृशं कृष्णचूचुकम्, लवलीदलवत् पाण्डुरा सिता आननस्य मुखस्य छाया छविः यस्मिन् तादृशम् आपाण्डुमुखकान्ति, तथा च श्लथवलयम् शिथिलं कनकवलयम् यस्मिन् तादृशं दुर्बलं शरीरमभवत् । इवेति स्मरणे ।

कानिचिद्दिनानि व्यतीतानि यदा तस्या चूचुके कृष्णतां प्राप्ते, मुखकान्तिः पाण्डरतां प्राप्ता, कृशत्वमभजच्चास्याः शरीरमिति मया गर्भस्यास्फुटलिङ्गानि समालोकितानि, न तु कदापि उपारूढानि गर्भलक्षणानीति भावः ।

"चूचुकं तु कुचाग्रं स्या"दित्यमरः । इवेति वाक्यालङ्कारे । लवली हरपरिवडी इति भाषा । अत्र चोपमालङ्कारः । चूचुकयोः कृष्णत्वम्, मुखस्य म्लानत्वं, नयनयोरलसत्वम्, वपुषः कृशत्वम्, एवमादीनि आपन्नसत्त्वायाः ललनाया लिङ्गानि । यदुक्तम् सुश्रुते "स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा । अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः" इति । तथा च चरके—"निष्ठीविकागौरवमङ्गसादः तन्द्राप्रहर्षौ हृदयव्यथा च । तृप्तिश्च बीजग्रहणं च योन्याः गर्भस्य सद्योऽनुगतस्य लिङ्गम्" यथा वा अष्टाङ्गहृदये—"अम्लेष्टता स्तनौ पीनौ श्वेतान्तौ कृष्णचूचुकौ" इति वाग्भटः । इयमार्या जातिः ॥ ८ ॥

**विदूषकः**—दिव्यायाः देवयोनिगतायास्तस्याः उर्वश्याः मानुषीधर्मं मानवयोनिगतानां स्त्रीणां गर्भावस्थायाम् यादृशा धर्माः सन्ति तादृशा एव तस्या अपि अवश्यं भवेयुरिति मा भवान् सम्भावयतु शङ्केथाः । सा देववनिता । तस्यां मानुषीणामिव धर्माणां सद्भावस्य कल्पना अनुचिता । भवेदेवमेव यद्देववनितानां

राजा—अस्तु तावदेवं यथाह भवान् । पुत्रसंवरणे किमिव कारणं तत्रभवत्याः ।

विदूषकः—मा वुड्ढिं मं राआ परिहरिस्सदि त्ति । [ मा वृद्धां माम् राजा परिहरिष्यतीति ]

राजा—कृतं परिहासेन । चिन्त्यताम् ।

विदूषकः—को देवरहस्साइं तक्कइस्सदि ? [ को देवरहस्यानि तर्कयिष्यति ? ]

कञ्चुकी—( प्रविश्य ) जयति जयति देवः । देव ! च्यवनाश्रमात् कुमारं गृहीत्वा तापसी सम्प्राप्ता देवं द्रष्टुमिच्छति ।

राजा—उभयमप्यवलम्बितं प्रवेशय ।

---

उपारूढगर्भलिङ्गत्वेनादर्शनेऽपि गर्भः स्यात्सन्ततिः प्रसूता भवेदिति । तासां देवाङ्गनानां चरितानि आचरणानि प्रभाववैशेष्यात् गूढानि भवन्ति । गुप्तं हि तासां चरितमिति सामान्यवाक्यस्य तस्या अपि चरितं गुप्तमदृष्टलिङ्गमस्तीति बोधस्य समर्थनाय प्रदानादर्थान्तरन्यासः ।

राजा—अस्तु तावदेवं यथाह भवान्, यथा भवता उक्तं यत्तस्या देवयोनित्वात् गूढाचारः तद्भवतु यथार्थम् । किन्तु पुत्रसंवरणे तस्यां मयोत्पादितस्य तनयस्य गोपने तत्रभवत्या उर्वश्या किमिव कारणम् ? को नु खलु हेतुस्तस्या मनसि भवेद्यतस्तया मया अविज्ञातरूपेण पुत्रो रक्षितः ? अत्र पुत्रसंवरणकार्यस्य कारणमार्गणयत्नदर्शनात् विबोधो नाम निर्वहणसन्ध्यङ्गं प्रतिदर्शितम् यदुक्तं "विबोधः कार्यमार्गणम्" इति रूपके ।

विदूषकः—समुचितं प्रत्युत्तरमलभमानो माणवकः उपहासं करोति—राजा वृद्धां मामिति मत्वा मा परिहरिष्यति । राजानो हि नूतनामेव तरुणीमुपभोक्तुं कामयन्ते । तथा च "प्रसूतिर्गतयौवना" इति न्यायात् यदि राजा ज्ञास्यति यन्मया सुतमुदपादि तदा सः वृद्धां गतयौवनां मां मत्वा परिहरेदिति एवं मा भूदिति हेतुं विचार्य गोपितस्तया ते तनय इति । अत्र हासः ।

राजा—कृतं परिहासेन । उपहासेनालम् । चिन्त्यताम् को नु खलु हेतुर्भवेदिति । अत्र कृतमित्यस्य योगे करणम् ।

विदूषकः—देवरहस्यानि देवत्वावच्छिन्नानां रहस्यानि गोप्यानि को नाम तर्कयिष्यति अनुमानबलाच्चिन्तयितुं पारयेदित्यर्थः ।

कञ्चुकी—( प्रविश्य ) जयति जयति देवः । देवेति महाराजसम्बोधनम् । च्यवनाश्रमात् च्यवनस्य महामुनेराश्रमात् कुमारमेकं बालकं गृहीत्वा काचन तापसी इह सम्प्राप्ता आयाता तथा च देवं महाराजं द्रष्टुं मिलितुं इच्छति ।

राजा—उभयमपि तापसीकुमारौ अविलम्बितं सत्वरं प्रवेशय इहानय ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निर्गम्य तापसीसहितं कुमार मादाय प्रविष्टः )

**विदूषकः**—णं क्खु एसो खत्तिअकुमारो जस्स णामाङ्किदो गद्धलक्खवेही णाराओ उवलद्धो तत्तभवदो बहु अणुकरेदि । [ ननु खल्वेष क्षत्रियकुमारो यस्य नामाङ्कितो गृध्रलक्ष्यवेधी नाराच उपलब्धस्तत्रभवतः बह्वनुकरोति । ]

**राजा**—एवमेतत् ।

बाष्पायते निपतिता मम दृष्टिरस्मिन्
वात्सल्यबन्धि हृदयं मनसः प्रसादः ।
संजातवेपथुभिरुज्झितधैर्यवृत्ति-
रिच्छामि चैनमदयं परिरब्धुमङ्गैः ॥ ९ ॥

---

**कञ्चुकी**—यदाज्ञापयति देवः ( इति निर्गम्य बहिर्गत्वा तापसीसहितं कुमारमादाय गृहीत्वा प्रविष्टः । )

**विदूषकः**—यस्य कुमारकस्य नाम्ना अभिधानेन अङ्कितः चिह्नितः, गृध्ररूपं लक्ष्यं तस्य वेधी छेदकः नाराचः शरः उपलब्धः अस्माभिर्दृष्टः स एष एवायं क्षत्रियबालकः तत्रभवतो बहु बहुरूपेण अनुकरोति सदृशः प्रतिभाति ।

**राजा**—एवमेतत् सत्यमेव साम्यं बहुतरं लक्ष्यते ।

**बाष्पायत इति**—अस्मिन् कुमारे निपतिता मम दृष्टिः बाष्पायते अश्रूणि उद्वमति । कुमारमेनं दृष्ट्वा आनन्दातिरेकात् अस्राणि वहन्ति । तथा च मम हृदयं वात्सल्यस्य प्रेम्णः बन्धः यस्मिन् तादृशं उद्गतप्रेमानुबन्धनं भवति । मम मनसः प्रसादः विकासः भवति, बालमेनं प्रेक्ष्य मे मनः प्रफुल्लतां भजते । अतोऽहमेनं कुमारकं उज्झिता परित्यक्ता धैर्यवृत्तिर्धीरत्वं येन स धीरत्वहीनः सन् सञ्जातवेपथुभिः सकम्पैः अङ्गैः अदयं गाढं यथा भवेत् तथा परिरब्धुमुपगूहितु-मालिङ्गितुं वा इच्छामि । कुमारमेनं दृष्ट्वा मम नयने सास्रे भवतः, हृदये प्रेमा-नुबन्धनं जागर्ति, मनो विकसति । अत आनन्दातिशयात्पुलकिततनुरहम् मनसः धैर्यं परित्यज्य गाढमालिङ्गितुं कामय इत्यर्थः ।

अत्र पुत्रं दृष्ट्वा प्रेम्णः जागरणात् वत्सलरसवादिनां मते वत्सलाख्यो रसः, तत्र राजा कुमारश्चालम्बनविभावौ, मनोविकासपुलकादयः अनुभावाः, नाराच-दर्शनस्वनिरपत्यतादीन्युद्दीपनानि, प्रीतिः सञ्चारी वत्सलत्वं स्थायी । अथवा अन्येषां मते रत्याख्यो भावः ।

बाष्पायत इत्यत्र "बाष्पोष्मभ्यामुद्वमने" इति सूत्रेण उद्वमनरूपेऽर्थे बाष्पात् क्यङ् प्रत्ययः । वेपथुरिति टुवेपृ कम्पने अथुच् । अदयं तस्य सौकुमार्यमविगणय्य

**कञ्चुकी**—भगवति ! एवं स्थीयताम् ।

( तापसीकुमारौ यथोचितं स्थितौ )

**राजा**—( उपसृत्य ) भगवति ! अभिवादये ।

**तापसी**—महाराअ, सोमवंसं धारअन्तो होहि । ( आत्मगतम् ) भो, अणाचक्खिदो वि विण्णादो एव्व तस्स राएसिण आउसो अ ओरसो संबन्धो । ( प्रकाशम् ) जाद ! पणम गुरुम् । [ महाराज ! सोमवंशं धारयन् भव ! ( आत्मगतम् ) भो ! अनाख्यातोऽपि विज्ञात एव तस्य राजर्षेरायुषश्चौरसः सम्बन्धः । ( प्रकाशम् ) जात ! प्रणम गुरुम् । ]

( कुमारो बाष्पगर्भमञ्जलिं बद्ध्वा प्रणमति )

**राजा**—वत्स ! आयुष्मान् भव ।

**कुमारः**—( स्पर्शं रूपयित्वा स्वगतम् )

---

अशिथिलं आलिलिङ्गिषुरसीति बोधः । क्रियाविशेषणमिदम् । अत्र माधुर्य-प्रसादौ गुणौ । वसन्ततिलका वृत्तम् ॥ ९ ॥

**कञ्चुकी**—भगवति-इदं तापसीसम्बोधनम् । एवं स्थीयताम् । अत्रास्यताम् इत्यर्थः । ( तापसीकुमारौ यथोचितं यथानिर्दिष्टस्थानम् स्वोच्चावचत्वं निरीक्ष्य स्थितावुपविष्टौ । )

**राजा**—( उपसृत्य ) भगवति ! अभिवादये प्रणमामि ।

**तापसी**—सोमवंशं धारयन् भव वंशपरम्पराभिवर्धको भव । वंशविस्ताराय प्रयतो भवेत्यर्थः । ( आत्मगतम् ) भोरिति विस्मये ! अनाख्यातः अनुक्तोऽपि तस्य राजर्षेः पुरूरवस आयुषश्चौरसः जन्यजनकः सम्बन्धः इति विज्ञात एव । अनयोराकृतिसाम्यात् स्वसमानलक्षणयोगाचाकथितोऽपि एतेषां पितृपुत्रसम्बन्धः परिज्ञायते । उरस इति औरसः अण् प्रत्ययः । "उरसोऽण्" ( ४।४।९४ ) स्वजाते त्वौरसः इत्यमरः । ( प्रकाशम् ) जात हे वत्स ! गुरुम् पितरम् प्रणम अभिवादयेत्यर्थः ।

गुरुस्त्रिलिङ्ग्यां महति दुर्जरा लघुनोरपि । पुमान्निषेकादिकरेषु पित्रादौ सुरमन्त्रिणि "इति । गुरुः पितृवाचकश्च 'गॄ शब्दे' ( क्र्या. प. से. ) अथवा "गॄ निगरणे" ( तु. प. से ) इति धातोः "कृग्रोरुच्च" ( उ. १।२४) इत्युः प्रत्ययः ।

( कुमारः बाष्पगर्भं अश्रुपूर्णमञ्जलिं बद्ध्वा प्रणमति )

**राजा**—वत्स ! आयुष्मान् दीर्घायुर्भव ।

**कुमारः**—( स्पर्शं रूपयित्वा स्वगतम् )

यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति ।
उत्सङ्गे वृद्धानां गुरुषु भवेत्कीदृशः स्नेहः ॥ १० ॥

**राजा**—भगवति ! किमागमनप्रयोजनम् ।

**तापसी**—सुणादु महाराओ । एसो दीहाऊ आऊ जादमेत्तो एव्व उव्वसीए किंवि णिमित्तमवेक्खिअ मम हत्थे णासीकिदो । जं खत्तिअस्स कुलीणस्स जादकम्मादिविहाणं तं से तत्तभवदा चवणेण सव्वं अणुट्ठिदम् । गिहीदविज्जो धणुव्वेदे अ विणीदो । [ शृणोतु महाराजः । एष दीर्घायुरायुर्जातमात्र एवोर्वश्या किमपि निमित्तं अपेक्ष्य मम हस्ते न्यासीकृतः । यत् क्षत्रियस्य कुलीनस्य जातकर्मादिविधानं तदस्य तत्रभवता च्यवनेन सर्वमनुष्ठितम् । गृहीतविद्यो धनुर्वेदे च विनीतः । ]

---

**यदीति**—यदि अयं मम पिता जनकः, अहञ्चास्य सुतः पुत्र इति श्रुत्वैव केवलम् इदं हार्दं विलक्षणं प्रेम जागर्ति तदा वृद्धानां उत्सङ्गे अङ्के पोषितानां बालानां गुरुषु पितृषु कीदृशः स्नेहः भवेत् । केवलं पितृपुत्रयोः तादृशसम्बन्ध-श्रवणमात्रेणैवालौकिकं प्रेम प्रादुर्भवति चेत् आजन्मतः पितॄणाम् अङ्के लालितानां शिशूनां पितृषु कीदृशं प्रेम भविष्यति । कुमारस्य मनसि राजानं विलोक्य हार्दं प्रेमाविर्बभूव । तद्दृष्ट्वा विचारशीलेन कुमारेण स्वानुभवतः प्रकाश्यते यज्जन्मतः अहमस्योत्सङ्गसुखमनुपलभमानोऽपि इत्थमासक्तस्तदा पित्रा सार्धं सदैव लालनपालनसुखमनुभवतः कियत् प्रेम भवेदित्यर्थः ।

इयमार्याजातिः ॥ १० ॥

**राजा**—भगवति तापसि ! किमागमनप्रयोजनम् अत्रागमने को नाम हेतुः ?

**तापसी**—शृणोतु महाराजः यदर्थमहमत्रागता । एष दीर्घायुश्चिरायुः आयुर्नाम कुमारः जातमात्र एव जन्मप्रभृति उर्वश्या अस्य मात्रा किमपि अविज्ञातं निमित्तं प्रयोजनमपेक्ष्य उद्दिश्य मम हस्ते न्यासीकृतः रक्षणपोषणाय निक्षिप्तः संस्थापित इत्यर्थः ।

उर्वश्या केनाप्यज्ञातेनोद्देश्येन कुमारोऽयं जन्मतः मह्यं लालनपालनाय समर्पित इत्यर्थः ।

यत्कुलीनस्य सत्कुलोत्पन्नस्याभिजातस्येत्यर्थः, क्षत्रियस्य जातकर्मादिविधानं संस्कारादिकं तत्रभवता पूज्येन भगवता च्यवनेन महामुनिना सर्वं अनुष्ठितम् समाप्तम् । क्षत्रियकुलाचारानुसारं सर्वेऽस्य संस्काराः जातकर्मनामकरणमुख्याः च्यवनेन सम्पन्ना इत्यर्थः । अनेन बालस्य संस्कृतत्वं प्रकटितम् । धनुर्वेदे च गृहीत-विद्यः, शस्त्रास्त्रविचक्षणश्चायमिति विनीतश्च निरभिमानी स्वसमुदाचारानुकूला-चरणशीलोऽयमिति बोधः । अत्र कार्योपक्षेपात् प्रथनं नाम सन्ध्यङ्गमुक्तं भवति ।

**राजा**—सनाथः खलु संवृत्तः ।

**तापसी**—अज्ज फुल्लसमिधकुसणिमित्तं इसिकुमारेएहिं सह गदेण इमिणा अस्समवासविरुद्धं समाअरिदं । [ अद्य पुष्पसमित्कुशनिमित्तं ऋषिकुमारकैः सह गतेनानेनाश्रमवासविरुद्धं समाचरितम् । ]

**विदूषकः**—कधं विअ ? [ कथमिव ? ]

**तापसी**—गहीदामिसो किल गिद्धो अस्समपादवसिहरे णिलीअमाणो लक्खीकिदो बाणस्स । [ गृहीतामिषः किल गृध्रः आश्रमपादपशिखरे निलीयमानो लक्ष्यीकृतो बाणस्य । ]

**राजा**—ततस्ततः ।

**तापसी**—तदो उवलद्धवुत्तन्तेण भअवदा चवणेण अहं समादिट्ठा णिज्जादेहि एदं उव्वसीहत्थे णासं त्ति । ता उव्वसीं पेक्खिदुं इच्छामि । [ तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा निर्यातयैनं उर्वशीहस्ते न्यासमिति । तदुर्वशीं प्रेक्षितुमिच्छामि । ]

**राजा**—तेन ह्यासनमनुगृह्णातु भगवती ।

---

**राजा**—सनाथः खलु संवृत्तः, भगवत्या धात्रीकर्मग्रहणेन, भगवता च्यवनेन च जनककर्मपरिग्रहेण अनुगृहीतोऽयमित्यर्थः ।

**तापसी**—अद्य पुष्पसमित्कुशनिमित्तं होमीयवस्तुग्रहणाय ऋषिकुमारकैः सह गतेन अनेन आयुषा आश्रमवासविरुद्धं सात्त्विकाचरणप्रतिकूलं समाचरितम् ।

**विदूषकः**—कथमिव किं तदस्याचरणमाश्रमविरोधि ।

**तापसी**—गृहीतामिषः गृहीतमांसखण्डः गृध्रः आश्रमस्य सन्निकटवर्तिनः पादपस्य तरोः शिखरे निलीयमानः सुप्तः अनेन बाणस्य लक्ष्यीकृतो हत इत्यर्थः । आचरणमिदं आश्रमावासप्रतिकूलमित्यर्थः ।

**राजा**—ततस्ततः किं जातम् ।

**तापसी**—ततः उपलब्धवृत्तान्तेन ज्ञातगृध्रवधसमाचारेण भगवता च्यवनेन अहं समादिष्टा आज्ञापिता यदेनं न्यासं निक्षेपं उर्वशीहस्ते निर्यातय प्रत्यर्प्य मुक्ता भव । अतः उर्वशीं प्रेक्षितुं मिलितुमिच्छामि । न्यासस्य प्रत्यर्पणं निर्यातनम् । "दाने न्यासार्पणे वैरशुद्धौ निर्यातनं मतमिति" मुक्तावली ।

**राजा**—तेन आसनमनुगृह्णातु स्वीकरोतु भगवती ।

( प्रेष्योपनीतयोरासनयोरुपविष्टौ )

**राजा**—लातव्य । आहूयतामुर्वशी ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रान्तः )

**राजा**—( कुमारमवलोक्य ) एह्येहि वत्स !

सर्वाङ्गीणः स्पर्शः सुतस्य किल तेन मामुपनतेन ।
आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥ ११ ॥

**तापसी**—जाद णन्देहि पिदरम् । [ जात ! नन्दय पितरम् । ]

( कुमारो राजानमुपसर्पति )

**राजा**—( आलिङ्ग्य ) वत्स ! प्रियसखं ब्राह्मणमशङ्कितो वन्दस्व ।

---

( प्रेष्येण भृत्येन उपनीतयोरानीतयोरासनयोः
तापसीकुमारौ उपविष्टौ निषण्णौ )

**राजा**—लातव्य कञ्चुकिन् ! आहूयतामुर्वशी ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रान्तः )

**राजा**—( कुमारमवलोक्य । ) एहि एहि वत्स ।

**सर्वाङ्गीण इति**—

सुतस्य स्पर्शः पुत्रगात्रेण संस्पर्शः सर्वाङ्गीणः सर्वदेहव्यापी खलु । पुत्रगात्रसम्पर्कजन्यं सुखम् सकलदेहं व्याप्नोतीति भावः । सर्वं च तदङ्गं सर्वाङ्गम् तद्व्याप्नोति इत्येवं शीलः सर्वाङ्गीणः सर्वाङ्गव्यापी "तत्सर्वादेः"—इत्यनेन खप्रत्ययः । किलेति सामान्यवस्तु प्रतिपादने ऐतिह्ये वा । सौभाग्यतः उपनतेन प्राप्तेन तेन सम्पर्कजन्यसुखेन मां आह्लादयस्व सुखय । मम प्रारब्धवशात् लब्धेन अनेन पुत्रगात्रसम्पर्कसुखेन मां प्रीणयेत्यर्थः । तत्रोपमानं आह—यथा चन्द्रकरः चन्द्रमसः करः किरणः चन्द्रकान्तं मणिं आह्लादयति द्रवयति । यथा चन्द्रकिरणसंस्पर्शेन चन्द्रकान्तमणिर्द्रवति तथैव तवाङ्गसंस्पर्शसुखेन अहमप्यानन्दोदधिनिमग्नो भविष्यामीत्यर्थः ।

इदमेवाह कश्चन कविः—"सुप्रसिद्धमिदं लोके चन्दनं खलु शीतलम् । पुत्रगात्रस्य संस्पर्शश्चन्दनादतिरिच्यते ।" अत्रोपमालङ्कारश्च । अनुष्टुब् वृत्तम् ॥ ११ ॥

**तापसी**—जात वत्स ! पितरम् जनकम् नन्दय आनन्दय सुखयेत्यर्थः ।

( कुमारो राजानमुपसर्पति उपगच्छतीति भावः )

**राजा**—( आलिङ्ग्य ) वत्स ! प्रियसखं मम प्रियवयस्यं एनं ब्राह्मणं अशङ्कितो निर्भीकः सन् वन्दस्व प्रणम । अत्र विदूषकस्य ब्राह्मणत्वप्रतिपादनेन पूज्यत्वम् वन्द्यत्वं च व्यज्यते । ब्राह्मणवन्दनादिकस्य समुदाचारस्य उपदेशः राज्ञः न्यायपथप्रवर्तकत्वं व्यनक्ति ।

**विदूषकः**—किं ति सङ्किस्सदि । णं अस्समवासपरिचिदो एव साहामिओ । [ किमिति शङ्क्यते । नन्वाश्रमवासपरिचित एव शाखामृगः । ]

**कुमारः**—( सस्मितम् ) तात वन्दे ।

**विदूषकः**—सोत्थि भवदो । वड्ढदु भवम् । [ स्वस्ति भवते वर्धतां भवान् । ]

( ततः प्रविशत्युर्वशी कञ्चुकी च )

**कञ्चुकी**—इत इतो देवी ।

**उर्वशी**—( प्रविश्यावलोक्य च । ) को णु क्खु एसो कणअपीठोवविट्ठो महाराएण सज्जीअमाणसिहण्डो चिट्ठदि । ( तापसीं दृष्ट्वा ) अम्महे ! सच्चवदीसहिदो पुत्तओ मे आऊ महन्तो क्खु संवुत्तो । [ को नु खल्वेष कनकपीठोपविष्टो महाराजेन सज्ज्यमानशिखण्डस्तिष्ठति । ( तापसीं दृष्ट्वा । ) अहो ! सत्यवतीसहितः पुत्रको मे आयुर्महान् खलु संवृत्तः । ]

---

**विदूषकः**—किमिति शङ्क्यते शङ्कायाः किं कारणम् । नास्तीति भावः । यतः आश्रमे वासः तेन परिचितः ज्ञात एव शाखामृगः कपिः । "वानरा हि वृक्षेभ्यो फलान्याहृत्य ऋषीनुपतिष्ठन्तीति" बाणभट्टैः प्रतिपादितम् । तदनुसारम् आश्रमवासिनो बालस्यास्य कपिस्तु सम्यक् परिचित एव । सम्यक् परिचितस्य शङ्का निरर्थकेति मत्वा विदूषकः स्वस्य विरूपत्वात् विकृतवेषत्वात् वानरसाम्यं तदेव च शङ्काहेतुं मनुते किन्तु कपिभिः परिचितत्वप्रतिपादनेन च तन्निवारयति ।

**कुमारः**—( सस्मितम्-ईषद्धास्येन ) तात वन्दे प्रणमामि । विदूषकस्य स्वजनकसखित्वात् तातेति सम्बोधनम् । "तातस्तु जनकः पिता" इति ।

**विदूषकः**—स्वस्ति भवते अत्र स्वस्तियोगे चतुर्थी । वर्धतां भवान् इति आशीः ।

( ततः उर्वशी कञ्चुकी च प्रविशतः )

**कञ्चुकी**—इत इतो देवी आगम्यतामिति शेषः ।

**उर्वशी**—( प्रविश्य अवलोक्य च ) को नु खलु एष कनकपीठोपविष्टः सुवर्णपीठासीनः महाराजेन स्वयं सज्ज्यमानशिखण्डः प्रसाध्यमानचूडः तिष्ठति । शिखण्डश्चूडा "शिखण्डोबर्हचूडयोरिति" शब्दमुक्तावली । ( तापसीं दृष्ट्वा ) अहो इति अकल्पितस्य दर्शनादाश्चर्यव्यञ्जकम् । सत्यवतीति तापसी नाम, तया

**राजा**—( विलोक्य ) वत्स !

इयं ते जननी प्राप्ता त्वदालोकनतत्परा ।
स्नेहप्रस्नवनिर्भिन्नमुद्वहन्ती स्तनांशुकम् ॥ १२ ॥

**तापसी**—जाद एहि । पच्चुवगच्छ मादरं । [ जात एहि । प्रत्युपगच्छ मातरम् । ]

( इति कुमारेण सहोर्वशीमुपसर्पति । )

**उर्वशी**—अज्जे ! पादवंदणं करेमि । [ आर्ये ! पादवन्दनं करोमि । ]

**तापसी**—वच्छे, भत्तुणो बहुमदा होहि । [ वत्से ! भर्तुर्बहुमता भव । ]

**कुमारः**—अम्ब ! अभिवादये ।

---

सहितः पुत्रकोः मम आयुरस्ति । महान् खलु संवृत्तः, अद्भुतमिदमित्यर्थः । अत्र पुत्रपदात् कप्रत्ययः प्रेमातिशयद्योतनायेति ज्ञेयम् ।

**राजा**—( विलोक्य । ) वत्स !

**इयमिति**—स्नेहः प्रेम तेन प्रस्नवः वहत्पयः तेन निर्भिन्नं विशेषतया सक्तम् आर्द्रीभूतत्वात् दृढं लग्नं स्तनांशुकम् कञ्चुकमुद्वहन्ती धारयन्ती त्वदालोकनतत्परा तव विलोकने उत्सुका इयं ते जननी माता उर्वशी प्राप्ता समायातेत्यर्थः ।

अत्र राज्ञो बहुपत्नीकत्वात् अन्यासामुर्वशीभिन्नानामपि मातृत्वात् तासां परिहाराय जननीतिपदग्रहणम् । स्नेहप्रस्नवेतिपदेन चिरकालदृष्टं तनयं समीक्ष्य मातुः साहजिकमिदमिति सम्बोध्य जननीत्वमेव विशेषयति । त्वदालोकनेत्यनेन औत्सुक्यं व्यज्यते । तेन च यत इयमीदृशी तव कारणेनोत्कण्ठिता, अतस्त्वमपि प्रेम्णः सहजत्वात् तस्याः कारणेन तादृश एवोत्सुको भवेरिति हेतोः कुमारस्योत्कण्ठोत्कर्षायास्य ग्रहणम् ।

निर्भिन्नं सुसक्तम् "भिन्नं वाच्यवदत्यर्थे दारिते सङ्गते स्फुटे" इति विश्वलोचनः ॥ अनुष्टुप् वृत्तम् ॥ १२ ॥

**तापसी**—जात वत्स ! एहि आगच्छ ! मातरं प्रति उपगच्छ समीपं गच्छ । ( इत्येवं कुमारेणामुना सह उर्वशीमुपसर्पति । अत्र उर्वशीमिति उपयोगे द्वितीया । )

**उर्वशी**—आर्ये सत्यवति ! पादवन्दनं करोमि ।

**तापसी**—वत्से ! भर्तुः बहुमता अभिलषिता दयिता भव ।

**कुमारः**—अम्ब मातः ! अभिवादये ।

उर्वशी—वच्छ । पिदरं आराधयन्तो होहि । [ वत्स ! पितरमाराधयन् भव । ] ( राजानं प्रति ) जेदु जेदु महाराओ । [ जयतु जयतु महाराजः । ]

राजा—स्वागतं पुत्रवत्यै । इत आस्यताम् ।

उर्वशी—अज्जा उवविसध [ आर्या ! उपविशत । ]

( सर्वे यथोचितमुपविष्टाः । )

तापसी—वच्छे ! गिहिदविज्जो आऊ संपदं कवचारुहो संवुत्तो । एसो भत्तुणो समक्खं णिज्जादिदो सहिहत्थणिक्खेवो । ता तुम्हेहिं विसज्जिदं अत्ताणं इच्छामि । उवरुज्झइ मे अस्समधम्मो । [ वत्से ! गृहीतविद्य आयुः साम्प्रतं कवचार्हः संवृत्तः । एष भर्तुः समक्षं निर्यातितः सखीहस्तनिक्षेपः । तद्युष्माभिः विसर्जितमात्मानमिच्छामि । उपरुद्ध्यते मे आश्रमधर्मः । ]

उर्वशी—कामं चिरस्स अज्जउत्तं पेक्खिअ अवहिदाहिअएण जुज्जदि पुणो अस्समधम्मं विभाविदुं । ता गच्छदु अज्जा पुणोदंसणाअ । [ कामं चिरस्यार्यपुत्रं प्रेक्ष्यावहितहृदयेन युज्यते पुनराश्रमधर्मं विभावयितुम् । तद्गच्छत्वार्या पुनर्दर्शनाय । ]

---

उर्वशी—वत्स ! पितरमाराधयन् पितृचरणसेवापरायणो भव ( राजानं प्रति ) जयतु जयतु महाराजः ।

राजा—पुत्रवत्यै ते स्वागतम्—सतनयाया विशेषतया मान्यत्वम् । इत आस्यताम् ।

उर्वशी—आर्याः सभ्याः ! उपविशत ।

( सर्वे यथोचितं यथास्थानमुपविष्टाः । )

तापसी—वत्से उर्वशि ! गृहीतविद्यः यथाविधि सुसम्पादितधनुर्वेदादिक्षत्रोचितविद्यः आयुः साम्प्रतमधुना कवचार्हः कवचस्य योग्यः युधि कवचधारणयोग्यः सम्पन्नः । अतः एष कुमारः ते भर्तुः पुरूरवसः समक्षं प्रत्यक्षं सखीहस्तनिक्षेपः त्वया मयि न्यासीकृतः इदानीं निर्यातितः समर्पितः । ततश्चाहं युष्माभिः सर्वैः विसर्जितं गन्तुमनुमतमात्मानमिच्छामि । इदानीं गमनायानुज्ञां भवद्भिर्दत्तां इच्छामीत्यर्थः । मे आश्रमधर्मश्च उपरुध्यते बाध्यते इत्यर्थः ।

उर्वशी—चिरस्य चिरकालेन कामं यथेच्छं आर्यपुत्रं महाराजं प्रेक्ष्य दृष्ट्वा इदानीं अवहितहृदयेन सावधानेन चेतसा पुनः आश्रमधर्मं विभावयितुं पालयितुं

**राजा**—तत्रभवते च्यवनाय मम प्रणाममावेदयिष्यसि ।

**तापसी**—एव्वं भोदु । [ एवं भवतु । ]

**कुमारः**—आर्ये ! सत्यमेव निवर्तनम् ? इतो मामपि नेतुमर्हसि ।

**राजा**—अयि वत्स ! उषितं त्वया पूर्वस्मिन्नाश्रमे । द्वितीयमध्यासितुं तव समयः ।

**तापसी**—जाद ! गुरुणो वअणं अणुचिट्ठ [ जात ! गुरोर्वचनमनुतिष्ठ । ]

**कुमारः**—तेन हि

यः सुप्तवान् मदङ्के शिखण्डकण्डूयनोपलब्धसुखः ।
तं मे जातकलापं प्रेषय शितिकण्ठकं शिखिनम् ॥ १३ ॥

---

युज्यते । परस्परसम्मेलनं जातम् । पुनराश्रमधर्मस्य परिपालनाय भवत्याः गमनमुचितम् । तद्गच्छतु आर्या पुनर्दर्शनाय । भवत्याः पुनरपि दर्शनं प्रतीक्षामहे इति भावः ।

**राजा**—आर्ये ! तत्रभवते पूज्याय च्यवनाय महर्षये मम प्रणाममभिवादनम् आवेदयिष्यसि समर्पयिष्यसि । निवेदनीयमित्यर्थः ।

**तापसी**—एवं भवतु निवेदयिष्यामि ।

**कुमारः**—आर्ये इति सत्यवतीसम्बोधनम् । सत्यमेव निवर्तनम्, यथार्थमेव त्वं प्रतिनिवृत्तासि स्वाश्रमम् । इतः अस्मात्स्थानात् मामपि नेतुमर्हसि । अहमपि चलामि मामपि नय । अत्र बालकस्य एतावत्कालपर्यन्तं तया सहोषितत्वात् कोमलहृदयस्य तत्रैवाभिनिवेशः ।

**राजा**—अयि वत्स ! सप्रेम सम्बोधनमिदम् । त्वया पूर्वस्मिन् आश्रमे ब्रह्मचर्याश्रमे उषितं निवासः कृतः । इदानीं द्वितीयमाश्रमं गार्हस्थ्यमध्यासितुं प्रवेष्टुं एष तव समयः सम्प्राप्तः ।

**तापसी**—जात ! गुरोः पितुर्वचनं शासनमनुतिष्ठ विधेयम् ।

**कुमार**—तेन हि—भवतु एवं करिष्ये । किन्तु यथा शाकुन्तले शकुन्तला कण्वं प्रति मृगीप्रसवसमये मामुपनेतुं प्रार्थयते तथैवेहापि कुमारः आरण्यकत्वात् तादृगेव तापसीं याचते ।

**य इति**—शिखण्डो बर्हस्तस्य कण्डूयनेन खर्जनेन उपलब्धमाप्तम् सुखम् निर्वृतिर्येन सः तादृशः यः मदङ्के मदुत्सङ्गे सुप्तवान् निद्रां लेभे तं जातकलापं समुद्गतपिच्छभारम् शितिकण्ठकं नीलग्रीवं तन्नामानं वा शिखिनम् मयूरम् मे

तापसी—एव्वं करेमि । [ एवं करोमि । ]

उर्वशी—भअवदि ! पाद्वन्दणं करेमि । [ भगवति ! पादवन्दनं करोमि । ]

राजा—भगवति ! प्रणमामि ।

तापसी—सोत्थि भोदु तुम्हाणं । [ स्वस्ति भवतु युष्मभ्यम् । ]

( इति निष्क्रान्ता । )

राजा—सुन्दरि !

अद्याहं पुत्रिणामग्र्यः सुपुत्रेण तवामुना ।
पौलोमीसम्भवेनेव जयन्तेन पुरन्दरः ॥ १४ ॥

( उर्वशी स्मृत्वा रोदिति )

---

मदर्थे प्रेषय । बालानां मयूरे साहजिकी आसक्तिस्तेषां लोभनीयरूपनृत्यकेकाप्रभृतित्वात् । अतः कुमारेण स्वबालभावस्य सदृशं हि आचरितमनयाभ्यर्थनया ।

"कलापः संहते बर्हे" इति कोषः । अत्र कुमाराणां निसर्गवर्णनात् स्वभावोक्तिः । इयमार्याजातिः ॥ १३ ॥

तापसी—( कुमारं प्रति । ) एवं करोमि, प्रेषयिष्यामि ते मयूरमिति ।

उर्वशी—भगवति सत्यवति ! पादवन्दनं करोमि ।

राजा—भगवति प्रणमामि ।

तापसी—स्वस्ति भवतु युष्मभ्यम् । भद्रमस्तु उभयोरित्यर्थः । स्वस्तियोगे चतुर्थी ।

( इति निष्क्रान्ता । )

राजा—सुन्दरि ! उर्वशीसम्बोधनम् ।

अद्येति—तव अमुना अनेन सुपुत्रेण सद्गुणगणविशिष्टेन पुत्रेण अहं पुत्रिणां तनयवतां पुरुषाणां अग्र्यः प्रधानः । ये केचन जनाः पुत्रेण भाग्यवत्त्वमामनन्ति तेषां भाग्यशालिनामहमग्रेसरः ईदृशेन सत्पुत्रेण पुत्रित्वात् । तत्रोपमानम्—पौलोमीसम्भवेन शच्यां समुत्पन्नेन जयन्तेन इन्द्रतनयेन पुरन्दरः इन्द्र इव । यथा जयन्तेन इन्द्रः शोभतेतराम् तथैवामुना तनयेनाहमिति । अत्र इन्द्रसदृशत्वम् नरेन्द्रस्यावगम्यते । पुरन्दरः इत्यत्र "खश्" प्रत्ययो मुमागमश्च । एतादृक् वर्णनं रघुवंशेऽपि "यथा जयन्तेन शचीपुरन्दरौ" इत्यादि । अनुष्टुप् वृत्तम् ॥ १४ ॥

( उर्वशी स्मृत्वा रोदिति किमपि पुरातनं स्मृत्वेत्यर्थः )

**विदूषकः**—किं णु क्खु संपदं अत्तभोदी अस्सुमुही संवुत्ता ।
[ किं नु खलु साम्प्रतमत्रभवत्यश्रुमुखी संवृत्ता । ]

**राजा**—( सावेगम् )

किं सुन्दरि प्ररुदिताऽसि ममोपनीते
वंशस्थितेरधिगमात् स्फुरति प्रमोदे ।
पीनस्तनोपरिनिपातिभिरर्पयन्ती
मुक्तावलीविरचनां पुनरुक्तमस्रैः ॥ १५ ॥

**उर्वशी**—सुणादु महाराओ । पढमं उण पुत्तदंसणसमुत्थिदेण आणंदेण विसुमरिदम्हि । दाणीं महिंदसंकित्तणेण मम हिअए ठ्ठिदं समएण । [ श्रृणोतु महाराजः । प्रथमं पुनः पुत्रदर्शनसमु-

---

**विदूषकः**—किं नु खलु किं नु कारणम् स्यात् यदधुना साम्प्रतं अत्रभवती उर्वशी अश्रुमुखी बाष्पाकुला संवृत्ता ?

**राजा**—( सावेगम् सोद्वेगम् सचिन्तम् वा )

**किमिति**—हे सुन्दरि ! मम वंशस्य कुलस्य स्थितिर्मर्यादा प्रतिष्ठा वा यस्मात्तादृशस्य पुत्रस्य अधिगमात् लाभात् स्फुरति प्रकाशमाने हृदयामोदकारके प्रमोदे अमन्दानन्दे उपनीते प्राप्ते सति किमर्थं प्ररुदितासि रोदिषि । मयि सुखिनि तवापि सुखित्वं योग्यम् न तु ईदृक् प्ररोदनमुचितमित्यर्थः । इयं प्रमोदवेला अतः किमर्थं रोदिषीति आवेगकारणम् । तस्याः रोदनं वर्णयति— पीनौ मांसलौ यौ स्तनौ तयोरुपरि निपातिभिः पतद्भिः अस्रैः बाष्पैः पुनरुक्तमिव द्वितीयामिव यथास्यात्तथा मुक्तावलीविरचनां अर्पयन्ती । उर्वशी मुक्तावलीं परिदधाना आसीत् । तस्या अश्रुबिन्दवोऽपि मुक्तासदृशा इति वर्णयति । तव एभिरश्रुबिन्दुभिः एकस्याम् मुक्तावल्यां सत्यामपि द्वितीयां मुक्तावलीविरचनां अर्पयन्ती रचयन्ती त्वं किमिति रोदिषि ?

अत्र मौक्तिकहारविरचनायाः सम्भावितकल्पनात् उत्प्रेक्षालङ्कारः । अश्रूणां मुक्तासदृशत्वप्रतिपादनात् व्यङ्ग्योपमा । अत्र पुनरुक्तमिति क्रियाविशेषणम् । यथा एकस्य सत्वे पुनरुक्तिर्व्यर्था तथैव एकस्य मौक्तिकहारस्य सत्तायां अन्यस्येदृशस्य व्यर्थत्वं क्लेशकरत्वं च । अत्र श्लेषाख्यो अर्थगुणः "एवं क्रियापरम्परया विदग्धचेष्टितस्य तदस्फुटत्वस्य तदुपपादकयुक्तेश्च सामान्याधिकरण्यरूपः संसर्गः श्लेषः" इति जगन्नाथपण्डितेन्द्रः । तथा च साम्यसौकुमार्यमाधुर्यशब्दगुणाः । अत्र च वसन्ततिलकाख्यं वृत्तम् ॥ १५ ॥

**उर्वशी**—श्रृणोतु महाराजः—प्ररुदितस्य कारणमाह—प्रथममादौ पुत्रदर्शनसमुत्थितेन पुत्रसम्मेलनजनितेन आनन्देन विस्मृतास्मि । किन्त्वधुना

त्थितेन आनन्देन विस्मृतास्मि । इदानीं पुनः महेन्द्रसङ्कीर्तनेन मम हृदये स्थितं समयेन । ]

राजा—कथ्यतां समयः ।

उर्वशी—अहं पुरा महाराअगहिदहिअआ गुरुसावसंमूढा महिंदेण अवधीकदुअ अब्भणुण्णादा । [ अहं पुरा महाराजगृहीतहृदया गुरुशापसम्मूढा महेन्द्रेण अवधीकृत्याभ्यनुज्ञाता । ]

राजा—किमिति ।

उर्वशी—जदा मम सो पिअवअस्सो तुइ समुप्पणसुदस्स मुहं पेक्खिदि तदा मम समीवं तुए आअंतव्वं त्ति । तदो मए महाराअविओअभीरुदाए जादमेत्तो एव्व विज्जागमणिमित्तं अ भअवदो चवणस्स अस्समपदे एसो पुत्तओ अज्जाए सच्चवदीए हत्थे आप्पणा णिक्खित्तो । अज्ज उण पिदुणो आराहणसमत्थो संवुत्तो त्ति काउण णिज्जादिदो एसो दीहाऊ आऊ । एत्तिको मे महाराएण सह संवासो । [ यदा मम स प्रियवयस्यस्त्वयि समुत्पन्नसुतस्य मुखं प्रेक्षते तदा मम समीपं त्वया आगन्तव्यमिति । ततो

महेन्द्रस्य पुरन्दरस्य सङ्कीर्तनेन नामग्रहणेन मम हृदये समयेन कालावधिना स्थितम् । या समयमर्यादा पुरा कृताऽऽसीत्सा इदानीं पूर्वस्मिन् पद्ये कीर्तितेन इन्द्रनाम्ना मम स्मृतिपथमवतीर्णा । तेन चाहं रुदिताऽस्मि ।

राजा—कथ्यतां समयः कालावधिः । "समयः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः ।

उर्वशी—अहं पुरा महाराजेन गृहीतं हृदयं यस्याः तादृशी महाराजसंलग्नचित्ताभिनिवेशा गुरुशापसंमूढा गुरोः भरताचार्यस्य शापेन ( द्वितीयाङ्कगतकथाऽत्रानुसन्धेया । ) संमूढा विस्मृतात्मा महेन्द्रेण अवधीकृत्य कालावधिं निश्चित्य महाराजेन सार्धं उषितुमभ्यनुज्ञाता । आसम् इति शेषः ।

राजा—किमिति कियत्कालपर्यन्तो हि सः अवधिः ।

उर्वशी—अवधिं वर्णयन्ती पुत्रगोपनकारणमुद्घाटयति—महेन्द्रेणोक्तमासीयत् यदा मम स प्रियवयस्यो महाराजः त्वयि समुत्पन्नस्य जातस्य सुतस्य मुखं प्रेक्षते तदा मम समीपं त्वया आगन्तव्यम् । मय्युत्पन्नपुत्रदर्शनावसानाकालावधिरित्यर्थः । ततः पश्चात् मया महाराजेन सह जन्यमानस्य वियोगस्य विरहस्य भीरुतया भीतया जातमात्र एवायं पुत्रकः विद्या लौकिकी आगमाः

मया महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं च भगवतश्च्यवनस्य आश्रमपदे एष पुत्रकः आर्यायाः सत्यवत्याः हस्ते आत्मना निक्षिप्तः । अद्य पुनः पितुराराधनसमर्थः संवृत्त इति कृत्वा निर्यातित एष दीर्घायुरायुः । एतावान् मम महाराजेन सह संवासः । ]

( सर्वे विषादं नाटयन्ति । राजा मोहमुपगच्छति । )

**सर्वे**—समस्ससदु समस्ससदु महाराओ । [ समाश्वसितु समाश्वसितु महाराजः । ]

**कञ्चुकी**—समाश्वसितु महाराजः ।

**विदूषकः**—अब्बम्हणं अब्बम्हणं । [ अब्रह्मण्यम् अब्रह्मण्यम् । ]

**राजा**—( समाश्वस्य ) अहो ! सुखप्रत्यर्थिता दैवस्य ।

---

शास्त्राणि तेषामध्ययननिमित्तम् भगवतः च्यवनस्य आश्रमरूपिणि पदे स्थाने एष आयुरार्यायाः मान्यायाः सत्यवत्यास् तापस्याः हस्ते आत्मना स्वयं निक्षिप्तः स्थापितो न्यासीकृतो वा । अद्य पुनः इति वाक्यालङ्करणे । पितुर्महाराजस्य आराधने सेवायां समर्थः अयं संवृत्तः इति कृत्वा अनेन हेतुना एष दीर्घायुः चिरजीवी आयुः निर्यातितः प्रत्यर्पितः । एतावान् एतावत्कालावधिरेव महाराजेन सह मम संवासः सहवास इति स्मृत्वा अहमरोदम् । अधुना वियोगो भवितेति भावः । एतत्कालपर्यन्तमेव महाराजेन सहोषितुमभ्यनुज्ञाताऽस्मि महेन्द्रेणेति सारः । अत्रोर्वश्या स्वात्मजगोपनहेत्वनुभवप्रकाशनादनुभूत्याख्यं निर्णयोनाम निर्वहणसन्ध्यङ्गमुक्तं भवति ।

( सर्वे श्रोतारो विषादं खेदं नाटयन्ति रूपयन्ति । )

**सर्वे**—समाश्वसितु समाश्वसितु महाराजः । अत्र राजा मूर्च्छति दयिताया गुरुवियोगं अनुभूतपूर्वं पुनरनुभवितुमसमर्थः भृशं खेदेन विसंज्ञतामलभत ।

**कञ्चुकी**—समाश्वसितु महाराजः ।

**विदूषकः**—अब्रह्मण्यम् अब्रह्मण्यम् । महान् खलु अनर्थः संवृत्त इति अर्थबोधे अव्ययमिदम् । "अब्रह्मण्यमवध्योक्तौ" इत्यमरः ।

**राजा**—( समाश्वस्य संज्ञां लब्ध्वा ) अहो ! दैवस्य भाग्यस्य सुखप्रत्यर्थिता सुखपराङ्मुखता । यदेकं सुखमुपनतम् द्वितीयं दुःखमापतितमित्यर्थः ।

आश्वासितस्य मम नाम सुतोपलब्ध्या
सद्यस्त्वया सह कृशोदरि विप्रयोगः ।
व्यावर्तितातपरुजः प्रथमाभ्रवृष्ट्या
वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम् ॥ १६ ॥

विदूषकः—अअं सो अत्थो अणत्थानुबन्धीत्ति तक्केमि तत्त-भवदा वक्कलं गेण्हिअ तवोवणं गन्तव्वं त्ति । [अयं स अर्थः अनर्थानुबन्धीति तर्कयामि तत्रभवता वल्कलं गृहीत्वा तपोवनं गन्तव्यमिति ।]

उर्वशी—हा हदम्हि मन्दभाआ । मं वि किदविणअस्स पुत्त-अस्स लम्भणाणन्तरं सग्गारोहणेण अवसिदकज्जां विप्पओअमुहीं महाराओ समत्थइस्सदि । [हा हतास्मि मन्दभाग्या । मामपि

---

आश्वासितस्येति—कृशमुदरं यस्याः सा तादृशि तनुमध्ये ! नाम प्राकाश्ये ! सुतोपलब्ध्या पुत्रप्राप्त्या आश्वासितस्य सन्तोषितस्य कृतसान्त्वनस्य वा मम सद्यस्तस्मिन्नेव समये त्वया सह अयं विप्रयोगो विरहः प्रथमाभ्रवृष्ट्या प्रथममेघवर्षया व्यावर्तिता निर्वापिता आतपजन्या रुग् यस्य तादृशस्य दूरीकृतोष्मपीडस्य वृक्षस्य वैद्युतः तडित्सम्बधी अग्निरिवोपस्थितः ।

यथा प्रथमं नवमेघेन कृते त्वीषद्वर्षे दूरीकृतसूर्यातपत्रासस्य वृक्षस्य कृते तडिज्जन्योऽग्निस्त्रासाय भवति तथैवेदानीं निरपत्यस्य मम सुतलाभेनैषज्जात-सान्त्वनस्य कृते त्वया सह गुरुरसह्यो वियोगः सम्प्राप्तः । काञ्चित् शान्ति-मुपलभ्य पुनः क्लेशो यथा भृशं दुःखदो भवति तथैव सुतप्राप्त्यनन्तरं त्वया सह विरहवादः । "नाम प्राकाश्य सम्भाव्य क्रोधोपगमकुत्सने" इति त्रिकाण्डी । "आतपो रश्मिमात्रे स्यात्सूर्यरश्मौ च दृश्यते" इति धरणिः । अत्र उदरशब्दः लक्षणया कटिरूपेऽर्थे बोध्यः ।

अत्र बिम्बप्रतिबिम्बानुप्राणिता लुप्तोपमालङ्कृतिः । यथा वैद्युताग्निः वृक्षं प्रकामं दहति तथैव मम मनः अनेन विरहाग्निना दंदह्यत इति व्यङ्ग्यम् उभयोरसह्यत्वात् । वसन्ततिलका वृत्तम् ॥ १६ ॥

विदूषकः—अयं सः सुतोपलब्धिरूपः अर्थः अनर्थानुबन्धी अनिष्टकारी विद्यते इति तर्कयामि । यदा एकोऽर्थः सम्पन्नः तदा अन्योऽन्यथा संवृत्तः । अतः इति हेतोः तत्र भवता इदानीम् वल्कलं गृहीत्वा मुनिवेषं धृत्वा तपोवनं तपसे गन्तव्यमुचितम् ।

उर्वशी—हा इति खेदे । मन्दभाग्या अहं हताऽस्मि । कृतविनयस्य सम्पादितशिक्षस्य पुत्रकस्य लम्भानन्तरम् लाभानन्तरम् स्वर्गारोहेण अवसित-

कृतविनयस्य पुत्रकस्य लम्भानन्तरं स्वर्गारोहणेनावसितकार्यां विप्रयोगमुखीं महाराजः समर्थयिष्यति । ]

राजा—सुन्दरि ! मा मैवम् ।

नहि सुलभवियोगा कर्तुमात्मप्रियाणि
प्रभवति परवत्ता शासने तिष्ठ भर्तुः ।
अहमपि तव सूनावद्य विन्यस्य राज्यं
विचरितमृगयूथान्याश्रयिष्ये वनानि ॥ १७ ॥

कुमारः—नार्हति तातो नृपपुङ्गवधारितायां धुरि दम्यं नियोजयितुम् ।

---

कार्यां समाप्तकर्तव्याम् विप्रयोगमुखीं विरहबद्धमनस्कां मामपि महाराजः समर्थयिष्यति मंस्यते । सुशिक्षितपुत्रस्य लाभानन्तरं कृतकृत्या भूत्वा सुखदुःखसमाना इयमिदानीं स्वर्गं जिगमिषुरस्तीति मंस्यते महाराजः । अनुरूपपुत्रलाभेन इदानीं मां सम्पन्नकार्यां मत्वा गन्तुमाज्ञां दास्यति महाराज इति भावः । कृतः सम्पादितः विनयः शिक्षा येन सः । "विनयं प्रणतौ प्राहुः शिक्षायां विनयो मतः" इति लोचनः ।

राजा—सुन्दरि मा मा एवम् मंस्थाः । नैतदेवम् ।

नहीति—सुलभः सुकरः क्षणे क्षणे सम्भाव्यो वियोगो यस्याः सा तादृशी वियोगकारिणी परवत्ता पराधीनता आत्मप्रियाणि स्वेच्छानुकूलमाचरितुं न प्रभवति । पराधीनः पुरुषः स्वकामनानुकूलं कर्तुं न पारयति । पारतन्त्र्यं बन्धाय भवति स्वेच्छाचारनिरोधाय च । अतो गच्छ । तव भर्तुरिन्द्रस्य शासने आज्ञायां तिष्ठ वर्तस्व । त्वं इन्द्रस्य परतन्त्रत्वात् तस्याभ्यनुज्ञया वर्तस्व । ततश्च त्वयि स्वर्गङ्गतायाम् अहमपि तव सूनौ आयुषि अद्यैव अस्मिन्नेव क्षणे राज्यं राजकार्यं विन्यस्य संस्थाप्य विचरितानि मृगयूथानि मृगवृन्दानि येषु मृगाध्युषितानि वनानि आश्रयिष्ये अवगाहिष्ये । वानप्रस्थाश्रमं धारयिष्ये इत्यर्थः ।

"परतन्त्रः पराधीनः परवान्" इत्यमरः । "सूनुः पुत्रेऽनुजे रवौ" ।

अत्र प्रसादस्यानुग्रहरूपत्वात् पर्युपासनं नाम निर्वहणसन्ध्यङ्गमुक्तं भवति ।

अत्र गुरुतरविरहजन्यसन्तापेन संसारात् पराङ्मुखस्य राज्ञो निर्वेदः उर्वशीविरहमात्रहेतुक एव न पुनः नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयकृतः इति भावाभासमात्रम् तस्य च विप्रलम्भपोषकत्वात् ऊर्जस्विदलङ्कारः । प्रथमचरणे अर्थान्तरन्यासः । इदं च मालिनी वृत्तम् ॥ १७ ॥

कुमारः—तातः नृपेषु पुङ्गवः श्रेष्ठः तेन धारितायां चालितायां धुरि दम्यं वत्सतरं नियोजयितुं नार्हति । अत्र राज्ञः पुङ्गवत्वकल्पनात् शक्तिमत्त्वं कार्य-

राजा—अयि वत्स ! मा मैवम् ।

शमयति गजानन्यान्गन्धद्विपः कलभोऽपि सन्
प्रभवतितरां वेगोदग्रं भुजङ्गशिशोर्विषम् ।
भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं
न खलु वयसा जात्यैवायं स्वकार्यसहो गणः ॥ १८ ॥

---

निर्वाहकत्वं च व्यज्यते । दम्ये वत्सतरः । "दम्यवत्सतरौ समौ" इत्यमरः । अत्र मयि भवता उदूढभारस्य राज्यकर्मणः नियोगः पुङ्गवधारितायां धुरि वत्सतरस्य नियोग इवेति भावात् निदर्शनालङ्कारो व्यङ्ग्यः । अनेन कुमारस्य विनयित्वं नयवत्त्वञ्च गम्यते । अनुरूपप्रयोगः मुद्राराक्षसे "गुर्वीं धुरं यो भुवनस्य भर्ता धुर्येण दम्यः सदृशं बिभर्ति ।" ( ३-३ )

**राजा**—अयि वत्स मा मैवम् कथय, यतः अपार्थमेतत् ।

**शमयतीति**—गन्धद्विपः गन्धगजः कलभः शावकोऽपि सन् अन्यान् गजान् शमयति । तथा च वेगेन उदग्रं भयङ्करं भुजङ्गशिशोः बालसर्पस्यापि विषम् मारणाय प्रभवतितराम् नितरां समर्थमस्ति । तथैव बालावस्थः कौमारकेऽपि वर्तमानस्त्वं अधिपतिः सन् भुवं परिरक्षितुमलं समर्थो भवसि । यतः अयं गन्धगजसर्पनृपादीनां गणः समूहः जात्यैव निसर्गत एव स्वकार्यसहः भवति न तु वयसा । गन्धगजलक्षणम्—"यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । स वै गन्धगजो नाम नृपतेर्विजयावहः" इति युक्तिकल्पतरुः ।

वेगोदग्रमिति—वेगस्तु "धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः ।" सप्तधातवः "रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः" इति वाग्भटे । तथाच विषवेगा सप्तैव सन्ति । "वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ । यो वेगः पञ्चमोऽसौ नयनविवशतां कण्ठभङ्गं च हिक्काम् षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य" इति विषतन्त्रे ।

सरलार्थस्तु—

यथा शावकोऽपि गन्धगजः अन्यान् गजान् वारयितुं पारयति, यथा भुजङ्गशिशोः वेगवत्तरं विषं मारणायालं भवति तथैव बाल्यवयस्कोऽपि त्वं भुवम् पालयितुं समर्थः असि । तमेव समर्थयति सामान्येन अयं सर्वोऽपि गुणानां गणः एषु सर्वेषु नैसर्गिको भवति नात्र खलु वयः समीक्ष्यते ।

अनुरूपार्थान्तरन्यासो यथा भवभूतेः

"गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ।"

तथा च रघुवंशेऽपि "तेजसां हि न वयः समीक्ष्यते ॥"

अत्र त्वं बालोऽपि भुवं पालयितुमर्हसीति प्रतिपादनाय दृष्टान्तस्यैकस्य अलन्त्वेऽपि अनेकयोः प्रदानात् समुच्चयालङ्कारः । "समुच्चयोऽसौ स त्वन्यः युगपद्या

आर्य लातव्य ।

**कञ्चुकी**—आज्ञापयतु देवः ।

**राजा**—मद्वचनादमात्यपर्वतं ब्रूहि, सम्भ्रियतां आयुष्मतो राज्याभिषेकः ।

(कञ्चुकी दुःखेन निष्क्रान्तः ।)

(सर्वे दृष्टिविघातं रूपयन्ति ।)

**राजा**—(आकाशमवलोक्य ।) कुतो नु खलु विद्युत्सम्पातः । (निपुणमवलोक्य ।) अये भगवान्नारदः ।

गोरोचनानिकषपिङ्गजटाकलापः
संलक्ष्यते शशिकलामलवीतसूत्रः ।
मुक्तागुणातिशयसम्भृतमण्डनश्रीः
हैमप्ररोह इव जङ्गमकल्पवृक्षः ॥ १९ ॥

---

गुणक्रिया" इति काव्यप्रकाशे । तथाच पूर्वार्धस्य अपरार्धे प्रतिबिम्बनात् साम्येन प्रणिधानाद्वा दृष्टान्तालङ्कारः । "दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ।" तथा चार्थान्तरन्यासः । एतेषां स्वातन्त्र्येण चमत्काराधायकत्वात् संसृष्टिश्च ।

"कलभः करिशावकः" इति कोषः ।

इदं च हरिणीवृत्तम् । तल्लक्षणं यथा—रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा । यदा नगणसगणौ मगणरगणौ सगणलघू गुरुश्च तदा हरिणी नाम छन्दः स्यात् । इह षड्भिश्चतुर्भिः सप्तभिश्च यतिः ॥ १८ ॥

आर्य लातव्य !

**कञ्चुकी**—आज्ञापयतु देवः ।

**राजा**—मद्वचनाद् मदाज्ञया अमात्यपर्वतं तन्नामानं ब्रूहि कथय । आयुष्मतः आयुषः राज्याभिषेकः संभ्रियतां सज्जीक्रियताम् प्रसाध्यताम् वा ।

(कञ्चुकी दुःखेन निष्क्रान्तः स्वामिनं राज्यपरिहारिणं ज्ञात्वा दुःखी सन् सन्देशं कथयितुमपगतः ।)

(सर्वे उपस्थिताः दृष्टिविघातं दर्शने मन्दतां रूपयन्ति नाटयन्ति ।)

**राजा**—(आकाशमवलोक्य) कुतो नु खलु विद्युत्सम्पातः (निपुणं सूक्ष्मतया विलोक्य ।) अये इति आश्चर्ये भगवान् नारदः । अत्र तडित्तेजसा इव नारददेहौजसा नयने प्रतिहते । तथा चात्र । अद्भुतसम्प्राप्तेः "उपगूहनम्" नाम सन्ध्यङ्गम् । तद्भवेदुपगूहनम् यत्स्यादद्भुतसम्प्राप्तिः ।

**गोरोचनेति**—गोरोचनायाः निकषः कषपाषाणः तत्स्थरेखा वा तद्वत्

अर्घोऽर्घस्तावत् ।

उर्वशी—अअं भअवदो अग्घो । [ अयं भगवतः अर्घः । ]

( ततः प्रविशति नारदः । )

नारदः—विजयतां मध्यमलोकपालः ।

राजा—भगवन् । अभिवादये ।

उर्वशी—भअवं पणमामि । [ भगवन्तं प्रणमामि । ]

नारदः—अविरहितौ दम्पती भूयास्ताम् ।

---

पिङ्गा पिङ्गलः जटाकलापः जटाजूटः यस्य सः, शशिनश्चन्द्रमसः कला इव अमलं धवलं वीतसूत्रं यज्ञोपवीतम् यस्य सः तादृशो नारदः पिङ्गलेन जटाजूटेन विमलेन यज्ञोपवीतेन च उपलक्षितः तत्र भवान् नारदः मौक्तिकैः भूषिताङ्गः सुवर्णशाखायुतः कल्पवृक्ष इव समायातो लक्ष्यते ।

गोरोचना हि परमोज्वला दीप्तिमती भवति अनेन तस्याम् पिङ्गलत्वं दृश्यते । "निकषः कषपाषाणः" इति कोषः । किन्त्वत्र गोरोचनागतरेखाः लक्षणया बुध्यन्ते । यज्ञोपवीतस्य सूक्ष्मत्वात् शशिकलेतिपदेन द्वितीयाचन्द्रस्य कला मन्तव्या । अतिशयेति पदम् क्रियाविशेषणम् संभृतपदेन साकं योज्यम् । प्ररोहः शाखा ।

अत्र प्रथमार्धे उपमाद्वयम् । चरमे तु चरणे उपमानभूतस्य जङ्गमकल्पवृक्षस्य कल्पितत्वात् कल्पितोपमा । नारदस्य कल्पतरुत्वकथनात् सर्वमनोरथदायित्वम् शान्तिकरत्वम्, नायकनायिकयोर्दीर्घसंयोगरूपसुखवार्ताहरत्वम् ध्वन्यते । नारदस्यानुरूपवर्णनं माघेऽपि दृश्यते "दधानमम्भोरुहकेसरद्युतीः जटाः शरच्चन्द्रमरीचिरोचिषं । विहङ्गराजाङ्गरुहैरिवायतैः हिरण्मयोर्वीरुहवल्लितन्तुभिः ॥ कृतोपवीतं हिमशुभ्रमुच्चकैः । घनं घनान्ते तडितां गणैरिवे"ति ।

वसन्ततिलका वृत्तम् ॥ १९ ॥

राजा—अर्घोऽर्घः स्तावत् आनीयतामिति शेषः । अर्घः पूजाविधिः तदर्थं द्रव्यम् "गन्धमाल्यादिसंयुक्तमुदकमर्घ्यमुच्यते ।"

उर्वशी—अयं भगवतः अर्घः पूजार्हाय पूजाविधिः ।

( ततः प्रविशति नारदः । )

नारदः—विजयतां मध्यमलोकपालः मध्यमलोकं मर्त्यलोकं पालयतीति असौ भूपतिरित्यर्थः । "पुंसि स्मृतौ मध्यमलोकमर्त्यौ" इत्यमरः ।

राजा—भगवन् ! अभिवादये प्रणमामि ।

उर्वशी—भगवन्तं प्रणमामि ।

नारदः—अविरहितौ दम्पती भूयास्ताम् । युवयोः विश्लेषः कदापि मा भूयादिति परमसुखकारिणी आशीः ।

राजा—( आत्मगतम् ) अपि नामैवं स्यात् । ( प्रकाशम् । कुमारमाश्लिष्य ) वत्स ! भगवन्तमभिवादयस्व ।

कुमारः— भगवन् ! और्वशेय आयुः प्रणमति ।

नारदः—आयुष्मानेधि ।

राजा—अयं विष्टरोऽनुगृह्यताम् ।

( नारदस्तथोपविष्टः सर्वे नारदमनूपविशन्ति )

राजा—( सविनयम् ) भगवन्, किमागमनप्रयोजनम् ?

नारदः—राजन्, श्रूयतां महेन्द्रसन्देशः ।

राजा—अवहितोऽस्मि ।

नारदः—प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति ।

राजा—किमाज्ञापयति ?

---

राजा—( आत्मगतम् ) भगवतः आशीर्वचनं निशम्य शङ्कते, अपि नाम इति मनस्येव प्रश्ने । किं एवं स्यात् आवयोः कदापि विश्लेषो न भविष्यति । अत्र पूर्वभावो नाम निर्वहणसन्ध्यङ्गम् । ( प्रकाशम् ) ( कुमारं आयुषमाश्लिष्य ) वत्स ! भगवन्तं नारदं अभिवादयस्व प्रणम ।

कुमारः—भगवन् ! और्वशेयः उर्वश्याः अपत्यं पुमान् और्वशेयः उर्वशीतनयः आयुः प्रणमति ।

नारदः—आयुष्मान् एधि दीर्घायुर्भव ।

राजा—अयं विष्टरः आसनम् अनुगृह्यताम् स्वीक्रियताम्, उपविश्यतामित्यर्थः । ( नारदस्तथा आसने उपविष्टः । सर्वे उपस्थिता जना नारदम् अनु पश्चात् उपविशन्ति—समुदाचारोऽयम् । )

राजा—( सविनयम् ) भगवन् किमागमनप्रयोजनम् ? केन हेतुना मद्गृहमुपकृतमद्य भवतागमनायासेन इति सादरं पृच्छति राजा ।

नारदः—राजन् ! श्रूयतां महेन्द्रसन्देशः महेन्द्रेण प्रेषितः सन्देशः श्रूयतामित्यर्थः ।

राजा—अवहितः सावधानः अस्मि ।

नारदः—प्रभावदर्शी स्वात्मप्रभावेण सर्वं ज्ञातुमर्हः मघवा इन्द्रः वनगमनाय कृतबुद्धिं कृतनिश्चयं भवन्तं अनुशास्ति आज्ञापयति ।

राजा—किमाज्ञापयति देवेन्द्रः ?

नारदः—त्रिकालदर्शिभिरादिष्टः सुरासुरविमर्दो भावी । भवांश्च सांयुगीनः सहायः । तेन न त्वया शस्त्रन्यासः कर्तव्यः । इयञ्चोर्वशी यावदायुस्तव सहधर्मचारिणी भवत्विति ।

उर्वशी—( अपवार्य ) सल्लं विअ हिअआदो अवणीदं । [ शल्यमिव हृदयादपनीतम् । ]

राजा—परमनुगृहीतोऽस्मि परमेश्वरेण ।

नारदः—युक्तम् ।

त्वत्कार्यं वासवः कुर्यात्त्वं च तस्येष्टकार्यकृत् ।
सूर्यः संवर्धयत्यग्निमग्निः सूर्यं स्वतेजसा ॥ २० ॥

---

नारदः—त्रिकालदर्शिभिः भूतभविष्यद्वर्त्तमानेतिकालत्रये यद्यद् भावि तत्सर्वं स्वप्रभावेण जानद्भिः ज्योतिर्विद्भिः मुनिभिः सुरासुराणां देवदानवानां विमर्दो युद्धं संघर्षो वा भावी भविष्यति काले भविता इति आदिष्टः कथितः । देवदानवानां युद्धं भविष्यतीति प्रोक्तं मुनिभिः । भवांश्च अस्माकं सांयुगीनः संयुगे रणे साधुः तादृशो रणपण्डितः सहायः । तेन हेतुना त्वया शस्त्रन्यासः वानप्रस्थधर्मग्रहणेन शस्त्राणां परित्यागो न विधेयः । इयं च उर्वशी यावदायुः तव जीवनपर्यन्तं सहधर्मचारिणी धर्मपत्नीत्वेन भवतु इति । इयं त्वया सार्धं तव जीवनपर्यन्तं निवसतु इत्यर्थः । अत्र "कृतिर्लब्धार्थशमन"मिति लक्षणात् लब्धाया उर्वश्या सुश्लिष्टय उपशमनात् कृतिर्नाम निर्वहणसन्ध्यङ्गं लभ्यते ।

उर्वशी—( अपवार्य ) शल्यमिव हृदयादपनीतम् । किं नाम महेन्द्रः सन्दिशति ? किं मामाह्वयते इति यन्मम चेतसि शल्यम् शङ्कुरिवासीत्तत् इयं यावज्जीवं त्वया सार्धं वसतु इति वचनेन अपनीतम् हृदयाद् बहिर्निष्कासितम् । अधुना निर्वृताऽस्मि । भाविनं विश्लेषदुःखं नानुभविष्ये इति मत्वा स्वात्मानं सुखिनं मनुते । अत्र समयो नाम निर्वहणसन्ध्यङ्गम् । "समयो दुःखनिर्याणमिति" लक्षणात् ।

राजा—परमेश्वरेण महेन्द्रेण परम् अत्यन्तं अनुगृहीतोऽस्मि । महती खलु देवेन्द्रस्य कृपेत्यर्थः । अत्र आनन्दो नाम सन्ध्यङ्गमुक्तम् ।

नारदः—युक्तम् उचितमेवाभिहितम् ।

त्वदिति—वासवः इन्द्रः त्वत्कार्यं तव कार्यं कुर्यात् अभिलषितं वस्तु सम्पादयेत्, त्वञ्च तस्य इष्टस्य अभिलषितस्य कार्यस्य कर्ता भव, त्वं तस्य ईप्सितं सम्पादय । तवाभिलषितं इन्द्रः पूरयतु त्वञ्च तस्याभीप्सितं सम्पादय । तत्र दृष्टान्तः—सूर्यः अग्निं संवर्धयति । इति ह श्रूयते यत् यदा सूर्यः अस्तं याति तदा स्वीयं तेजः अग्नौ न्यस्यति तथा च अग्निः सूर्यं स्वतेजसा संवर्धयति पुष्णाति । "अग्नितेजो हि दिने सूर्यमनुप्रविशति रात्रौ सूर्यतेजोऽग्निमिति" पौरा-

(आकाशमवलोक्य) रम्भे उपनीयतां मन्त्रेण सम्भृतः कुमारस्याभिषेकः।

**रम्भा**—अअं से अहिसेअसंभारो। [अयमस्याभिषेकसंभारः।]

**नारदः**—उपवेश्यतामयमायुष्मान् भद्रपीठे।

(रम्भा कुमारं भद्रपीठे उपवेशयति)

**नारदः**—(कुमारस्य शिरसि कलशमावर्ज्य।) रम्भे! निर्वर्त्यतामस्य शेषो विधिः।

**रम्भा**—(यथोक्तं निर्वर्त्य।) वच्छ! पणम भअवंदं पिदरो अ। [वत्स! प्रणम भगवन्तं पितरौ च।]

(कुमारः सर्वान् प्रणमति)

---

णिकी प्रसिद्धिः॥ "आदित्यो वा अस्तं यन्नग्निमनुप्रविशति, अग्निर्वादित्यं सायं प्रविशति" इति श्रुतिः। सारस्तु—"देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" इति गीता॥ अत्र पूर्वार्धे भग्नप्रक्रमता। अत्र दृष्टान्तालङ्कारः। अनुष्टुप् वृत्तम्॥ २०॥

**नारदः**—(आकाशमवलोक्य) रम्भे! रम्भा नाम अप्सरसः। उपनीयतामानीयताम् मन्त्रेण सम्भृतः सम्पूजितः कुमारस्याभिषेकः।

**रम्भा**—अयम् अस्य कुमारस्यायुषः अभिषेकस्य संभारः सामग्री।

**नारदः**—आयुष्मान् दीर्घायुरयं कुमारः भद्रपीठे भद्रासने उपवेश्यताम् स्थाप्यताम्। भद्रासने राज्याभिषेकसमये स्थीयते। भद्रासनलक्षणं यथा—"हैमश्च राजतं ताम्रं क्षीरवृक्षमयं च वा। भद्रासनं प्रकर्तव्यं सार्धहस्तसमुच्छ्रितम्। सपादहस्तमानं च राज्ञो माण्डलिकान्तरात्" इति देवीपुराणे। वाराहे च दृश्यते "त्रिविधस्तस्योच्छ्रायो हस्तः पादाधिकोऽर्धयुक्तश्च। माण्डलिकानन्तरचित्समस्तराज्यार्थिनां शुभदः" इति।

(रम्भा कुमारं भद्रपीठे उपवेशयति)

**नारदः**—(कुमारस्य शिरसि मन्त्रसम्भृतं कलशं आवर्ज्य) रम्भे! निर्वर्त्यतां समाप्यतामस्य कुमाराभिषेकस्य शेषः अवशिष्टो विधिः। पुरा हि राज्याभिषेकः महतो मुनेः हस्ताभ्यामभवत्। तस्मिंश्च कलशावर्जनप्रधानं कर्म। शेषं परिचारिकैः विधीयते।

**रम्भा**—(यथोक्तम् निर्वर्त्य कृत्वा) वत्स! प्रणम भगवन्तं नारदम् पितरौ मातरं पितरं च।

(कुमारः सर्वान् प्रणमति)

**नारदः**—स्वस्ति भवते ।

**राजा**—कुलधुरन्धरो भव ।

**उर्वशी**—पिदुणो आराहओ होहि । [ पितुराराधको भव । ]

( नेपथ्ये वैतालिकद्वयम् )

**प्रथमः**—विजयतां युवराजः ।

अमरमुनिरिवात्रिः स्रष्टुरत्रेरिवेन्दुर्
बुध इव शिशिरांशोर्बोधनस्येव देवः ।
भव पितुरनुरूपस्त्वं गुणैर्लोककान्तै-
रतिशयिनि समस्ता वंश एवाशिषस्ते ॥ २१ ॥

---

**नारदः**—स्वस्ति भवते । कल्याणं तेऽस्तु इत्यर्थः ।

**राजा**—कुलधुरन्धरो भव । अत्र खच् प्रत्ययः । कुलावतंसो भूया इति ।

**उर्वशी**—पितुराराधकः सेवको भव ।

( नेपथ्ये वैतालिकद्वयम् । वैतालिकः कालबोधकः स्तुतिपाठकः )

प्रथमो वैतालिकः—विजयतां युवराजः—

**अमरेति**—अमराणां मुनिः देवर्षिः अत्रिः यथा ब्रह्मणः अनुरूपः पुत्रः अभवत्, यथा च अत्रेः इन्दुश्चन्द्रः अनुरूपः पुत्रः अभूत्, यथा शिशिरांशोश्चन्द्रस्य बुधः अनुरूपः पुत्र आसीत्, यथा बोधनस्य बुधस्य देवः महाराजः पुरूरवाः अनुरूपः पुत्रः समजनि तथैव त्वमपि लोककान्तैः लोकप्रियैः गुणैः पितुः पुरूरवसः अनुरूपः भव । यतः अतिशयिनि उत्कर्षशालिनि ते वंशे कुले समस्ताः अशेषा आशिषः सन्तीति शेषः । ब्रह्मणः प्रभृति पुरूरवः-पर्यन्तम् उत्तरोत्तरं यथा पूर्वपूर्वगुणसमूहोऽभवत्तथा त्वय्यपि भवतु । त्वमपि पितुः सदृशः हृद्यगुणगणभाजनं भवेति, सर्वा आशिषः सर्वश्रेयोऽधिगमाशिरवकाशाः पौनरुक्त्यं भजन्ते । यथा ब्रह्मणः पुत्रः अत्रिः पितृसदृशः, तस्य तनयः तत्तुल्यः इत्येवं परम्पराप्राप्तं पित्रनुरूपत्वं त्वय्यपि भवत्वित्यर्थः ।

"अत्रिर्हि ब्रह्मणः पुत्रो मानसः । इन्दुश्चात्रेः नयनजः पुत्रः । यदुक्तं पद्मपुराणे, ब्रह्मणो मानसः पुत्रस्त्वत्रिर्नाम महातपाः । स्रष्टुकामः प्रजा वत्स तपस्तेपे सुदुस्तरम् । ऊर्ध्वमाचक्रमे तस्य रेतः सोमत्वमीयिवत् । नेत्राभ्यां तस्य सुस्राव दशधा द्योतयद्दिशः" इत्यादि । हरिवंशेऽपि तादृशम् "पपात भासयन् लोकान् शीतांशुः सर्वभावनः" इति । अनुरूपपद्यम् रघुवंशे "अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः" इति... ।

बुधः बृहस्पतेः भार्यायां तारायाम् चन्द्रेण उत्पादितः । यथा मत्स्यपुराणे "ततः संवत्सरस्यान्ते द्वादशादित्यसन्निभः । दिव्यपीताम्बरधरः पीताभरणभूषितः । राज्ञः सोमस्य पुत्रत्वात्सौम्यो राजसुतः स्मृतः" इति । बोधनो

द्वितीयः—

तव पितरि पुरस्तादुन्नतानां स्थितेऽस्मिन्
स्थितिमति च विभक्ता त्वय्यनाकम्प्यधैर्ये ।
अधिकतरमिदानीं राजते राजलक्ष्मीः
हिमवति जलधौ च व्यस्ततोयेव गङ्गा ॥ २२ ॥

---

बुधः तस्य पुत्रः राजा पुरूरवा अभवत् । देवो राजा "राजा भट्टारको देवः" इत्यमरः । अतिशयः उत्कर्षः । ईदृक् भावः रघुवंशे "आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते । पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥

अत्र पारम्पर्यद्योतनाय बहूनामुपमानानां प्रदानात् मालोपमा । अत्राशीर्वचनम् नाम नाट्यालङ्कारः । यदुक्तम् "आशीरिष्टजनाशंसा ।" मालिनी वृत्तम् ॥ २१ ॥

द्वितीयो वैतालिकः—

तवेति—उन्नतानां उच्चैः शिरसां महतां पुरुषाणां पुरस्ताद् अग्रे स्थितेऽस्मिन् तव पितरि स्थितिमति मर्यादापालके अनाकम्प्यधैर्ये अचलचेतः स्थैर्ये त्वयि विभक्ता राजलक्ष्मीः उन्नतानां पर्वतानां अग्रिमत्वेन स्थिते हिमवति च सति स्थितिमति मर्यादावति च अनाकम्प्यधैर्ये अक्षोभ्ये धीरे वा जलधौ समुद्रे व्यस्ततोया विभक्तजलप्रवाहा गङ्गा इव इदानीं अधिकतरं राजते शोभते । यथा गङ्गा हिमाचलतः निःसृता च समुद्रं गच्छन्ती सविशेषं शोभते तथैव राज्यश्रीः महतामग्रगण्ये तव पितरि मर्यादाशालिनि त्वयि च स्थिता सतीदानीं शोभतेतराम् इति भावः ।

उन्नतानां पुरस्तादिति पदद्वयः राज्ञः पक्षे महतामग्रेसरः, हिमवतः पक्षे सानुमतां अग्रिमः इति तात्पर्यं बोधयति । तथैव च स्थितिमति इति पदम् कुमारपक्षे उच्चावचानां उचितानुचितानां मर्यादापालकत्वं, समुद्रपक्षे न्यूनत्वाधिक्ययोः दूरसमीपयोर्मर्यादावत्त्वम् गमयति । अनाकम्प्यधैर्ये इति पदेन युवराजपक्षे अनुच्छेद्यचित्तस्थिरत्वम्, पयोधिपक्षे अक्षुब्धत्वम् शान्तत्वं वा ज्ञाप्यते ।

अत्र एतेषु पदेषु श्लेषः । तथा चात्र यथासङ्ख्यं अलङ्कारः । राज्ञः हिमवता सह औपम्यस्य गम्यत्वात् राज्ञः उच्चैः शिरस्त्वप्रतिपादनात् "क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीवेति" गुणो, हिमवद्वत् अचलत्वम् धीरत्वं च ध्वन्यते । तथा च युवराजस्य जलधिना औपम्यदर्शनात् गम्भीरत्वम्, धीरत्वम् च व्यज्यते । तथा चात्र उपमालङ्कारः । राजलक्ष्म्याः गङ्गया सह साधर्म्यकल्पनात्, निर्मलत्वम् पावकत्वम्, हृदयशीतलत्वम्, देवतात्वम्, भूषणत्वम्, प्रसादकत्वम् द्योतितम् । "**राजते राज**" इत्यत्र यमकमलङ्कारः । मालिनी वृत्तम् ॥ २२ ॥

**रम्भा**—दिट्ठिआ पिअसही पुत्तअस्स जुवराअसिरीं पेक्खिअ भत्तुणो अविरहेण वड्ढदि । [ दिष्ट्या प्रियसखी पुत्रकस्य युवराजश्रियं प्रेक्ष्य भर्तुरविरहेण वर्धते । ]

**उर्वशी**—णं साधारणो ज्जेव एसो अब्भुदओ । [ ननु साधारण एव एष अभ्युदयः । ] ( कुमारं हस्ते गृहीत्वा ) जाद ! जेट्ठमातरं वंदेहि । [ जात ! ज्येष्ठमातरं वन्दस्व । ]

**राजा**—तिष्ठ । सममेव तत्रभवत्याः समीपं यास्यामस्तावत् ।

**नारदः**—

आयुषो यौवराज्यश्रीः स्मारयत्यात्मजस्य ते ।
अभियुक्तं महासेनं सैनापत्ये मरुत्वता ॥ २३ ॥

**राजा**—अनुगृहीतोऽस्मि मघवता ।

**नारदः**—भो राजन् ! किं ते भूयः प्रियं करोतु पाकशासनः ।

---

**रम्भा**—दिष्ट्या महत्सौभाग्यमिदमद्य यत् प्रियसखी उर्वशी पुत्रकस्य आयुषः युवराजश्रियम् प्रेक्ष्य भर्तुः अविरहेण संश्लेषेण वर्धते । अत्र भर्त्रा सह अवियोगः, पुत्रस्य यौवराज्यञ्च मधुनि सितासंयोग इव संवृत्तः ।

**उर्वशी**—ननु इति अवधारणे । आवयोः साधारण एव एष अभ्युदयः । ( कुमारं हस्ते गृहीत्वा ) जात वत्स ! ज्येष्ठमातरमौशीनरीं वन्दस्व ! अत्र आचारानुसारं वर्तनात् नायिकायाः योग्यता सूच्यते ।

**राजा**—तिष्ठ !

तत्रभवत्याः मान्यायाः काशिराजदुहितुः समीपं सममेव यास्यामः । सर्वे मिलित्वा समवायेनैव तत्रभवतीं द्रक्ष्याम इति ।

**आयुष इति**—ते आत्मजस्य पुत्रस्य आयुषः यौवराज्यश्रीः युवराजलक्ष्मीः मरुत्वता इन्द्रेण सैनापत्ये सेनाधिपकार्ये अभिषिक्तं विनियुक्तं महासेनं स्कन्दं स्मारयति स्मृतिपथमवतारयति । तव पुत्रस्य यौवराज्यपदेऽधिष्ठानं कार्तिकेयस्य सेनानीत्वेन प्रतिष्ठापनं स्मारयति गुहसदृशपराक्रमोऽयं भवितेत्यर्थः ।

"कार्तिकेयो महासेनः" इत्यमरः । अत्र आयुषः यौवराज्ये प्रतिष्ठा गुहस्य सेनानीत्वं स्मारयतीति स्मरणालङ्कारः । "सादृश्यज्ञानोद्बुद्धसंस्कारप्रयोज्यं स्मरणं स्मरणालङ्कारः" इति लक्षणात् । अत्र भाषणं नाम निर्वहणसन्ध्यङ्गमुक्तं भवति । अनुष्टुप् वृत्तम् ॥ २३ ॥

**राजा**—अनुगृहीतोऽस्मि मघवता इन्द्रेण ।

**नारदः**—भो राजन् ! किं ते भूयः पुनरपि प्रियं करोतु अभीप्सितं सम्पा-

राजा—अतःपरमपि प्रियमस्ति ! यदि भगवान् पाकशासनः प्रसादं करोतु । ततः

(भरतवाक्यम्)

परस्परविरोधिन्योरेकसंश्रयदुर्लभम् ।
सङ्गतं श्रीसरस्वत्योर्भूयादुद्भूतये सताम् ॥ २४ ॥

अपि च—

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ॥ २५ ॥

---

दयतु पाकशासनो देवेन्द्रः । नाटकावसाने शिष्टाचारोऽयम् । अत्र काव्यसंहारो नाम सन्ध्यङ्गम् "वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते" इति लक्षणात् ॥

राजा—अतःपरमपि प्रियमस्ति । मयि जीवति पुत्रकस्य राज्यकार्यनिर्वहण-सामर्थ्यं, यौवराज्यप्रतिष्ठापनम्, वल्लभया यावज्जीवपर्यन्तम् सहवासः सर्वं सम्यगुपपन्नम् । अतः परम् न किञ्चिदस्ति । तथापि यदि भगवान् पाकशासनः पाकनाम्नः दैत्यस्य हन्ता, महेन्द्रः प्रसादं करोतु प्रसन्नः स्यात्तदा इदं भवतु ।

(भरतवाक्यम्) नटवाक्यम् । नाटके अभिनयसमाप्तौ नटेन सामाजिकेभ्यः आशीर्दीयते । नाटके पूर्वं नटादीनां नटत्वेन प्रवेशः प्रस्तावनापर्यन्तं भवति । वस्तुनि समारब्धे नटस्योक्तेः अन्याय्यत्वात् नाट्यशास्त्रप्रवर्तकमुनिविशेषभूमि-काऽवलम्बिनो नटस्य शुभशंसनात्मकं वाक्यम् भरतवाक्यमिति सर्वेषां मङ्गलं रूपं प्रशस्तिनामकं निर्वहणसन्धेः चरममिदमङ्गं वेदितव्यम् "नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते" इति दर्पणकारः ।

परस्परेति—प्रायशः मूर्खा धनिनो भवन्ति पण्डिताश्च दारिद्र्यव्याकुलाः सन्तीति मत्वा द्रव्यपाण्डित्ययोः सामानाधिकरण्याय प्रार्थयते ।

परस्परं विरोधिन्योः निसर्गवैरयोः श्रीसरस्वत्योः लक्ष्मीसरस्वत्योः एकसंश्रय-दुर्लभम् एकाश्रयगतत्वेन दुर्लभं सङ्गतम् सहवासः सतां सज्जनानां भूतये अभ्यु-दयाय अस्तु । यत्र श्रीः दृश्यते तत्र सरस्वत्यभावः, यत्र सरस्वती तत्र श्रीर्न लक्ष्यते । इत्येवं उभयोरेकाश्रयेण स्थितिर्दुर्लभा । अतः सा सत्पुरुषाणां वृद्ध्यै भवतु ॥ अत्र सज्जनानां अभ्युदयस्य प्रार्थितत्वात् तेषाञ्च प्रशंसाया गम्यमानत्वात् "प्रशस्ति"र्नाम सन्ध्यङ्गमुक्तं भवति । तदुक्तं आदिभरते "देवद्विजनृपादीनां प्रशस्तिः स्यात्प्रशंसनम्" इति । मूर्खा धनिनः पण्डिता दरिद्राः प्रायशो भवन्तीति मतमवलम्ब्य अनुरूपभावं जगन्नाथः प्रकटीचकार "खञ्जायितोऽधिमति गञ्जापरोऽपि बत सञ्जायतेऽत्र धनदः । सञ्जाघटीति गुणपुञ्जायितस्य न तु गुञ्जामितञ्च कनकम्" इति । अनुष्टुप् वृत्तम् ॥ २४ ॥

अपि च द्वितीयाशीः—

सर्व इति—सर्वः पुरुषः इह जगति दुर्गाणि दुःखानि क्लेशान् वा तरतु

( इति निष्क्रान्ताः सर्वे )

इति पञ्चमोऽङ्कः ।

समाप्तमिदम् श्रीकालिदासकृतम् विक्रमोर्वशीयं नाम त्रोटकम् ।

---

पारं करोतु । दुःखादात्मानं उद्धरतु इत्यर्थः । सर्वः लोकः इह संसारे भद्राणि कल्याणानि सुखानि वा पश्यतु । सुखमनुभवत्वित्यर्थः । सर्वः अत्र कामान् स्वस्वमनोरथान् आप्नोतु । सर्वेषां मनोरथसिद्धिः भवतु । सर्वः सर्वत्र इह परत्र, गृहे बहिः राजसभायां वा सर्वतः सर्वकालं नन्दतु आनन्दं प्राप्नोतु । सर्वे जनाः इह भुवि सुखिनः सन्तु इत्याशीर्वचनम् । अनुष्टुप् वृत्तम् ॥ २५ ॥

( इति सर्वे नटाः निष्क्रान्ताः रङ्गभूम्या अपगताः )

इति श्रीमत्प्रमोदमोदमानमानसरसाविभक्तभगवल्लीलालतिकीर्तनस्वानस्वानन्दसक्तभक्तगोष्ठीगरिष्ठाणां रामानुजार्यकैङ्कर्यधुरीणानां प्रखरकिरणकरप्रतिभतेजःप्रकरप्रभाकराणां कविपण्डितेन्द्रमण्डलालङ्कारहीराणां अजस्रप्रणामारुणितवन्दारुराजन्यवृन्दमुकुटमौक्तिकपूज्यपदद्वन्द्वारविन्दानां रसिकतारसनिधीनां तोताद्रिविज्ञानविभवपीठाधीशानां आचार्यवर्याणां न्यायवेदवेदान्तमीमांसाद्यखिलनिगमागममन्थानशेमुषीकाणां विज्ञानविभूषणपदधारिणां स्वामिनां इन्दूरपुराभरणानां श्रीकृष्णाचार्यवर्याणां तनूभवैः सहृदयताजलनिधिकौस्तुभैः इन्दूरमहाराजासंस्कृतमहाविद्यालयाध्यक्षैः एम्. ए. काव्यतीर्थसाहित्यविशारदाद्यनेकोपाधिसमुल्लसितैः सुरेन्द्रनाथशास्त्रिभिः विरचितायां विक्रमोर्वशीयसंजीविकायाम् निसर्गोज्ज्वलायाम् विद्वन्मनःसागरशशिलेखायां कल्पलतासमाख्यायां व्याख्यायाम् पञ्चमाङ्कमुकुरः ॥

॥ समाप्तमिदं व्याख्यानम् ॥

॥ समाप्तश्चायं कालिदासप्रणीतो ग्रन्थः ॥

यावद्भा सवितुर्भाति यावच्च शशिनः कला ।
तावत्कल्पलतासक्तो ग्रन्थोऽयं भुवि वर्धताम् ॥

॥ भद्रमस्तु । इति शम् ॥

॥ श्रीः ॥

# ॥ प्रशस्तिः ॥

प्रश्नोरानागराणां दशपुरवसुधाधीशलब्धादराणां
श्रीमज्जूनागढ़ीयप्रथितगुणवतामन्ववाये द्विजानाम् ।
गोपीनाथाभिधानोऽभवदमितमतिर्दैवविद्भिर्वरेण्यो
दृश्यन्ते यत्प्रसादार्जितविशदयशोभागिनोऽनेकशिष्याः ॥ १ ॥

तस्यानन्तगुणाम्बरे समुदितः प्रौढ़ोपलब्धिस्फुरत्-
पाण्डित्यप्रसृतप्रभाप्रविलसत्प्रोच्चैःप्रतापो रविः ।
पुत्रो यस्य विशुद्धधीखरकरस्पर्शोद्गमत्स्वार्चिषो
न्यक्कारादिव सूर्यकान्तसदृशा दग्धा विदग्धाः परे ॥ २ ॥

साहित्याम्भोधिमन्थाभिसृतरसझरीनिर्मितौ निर्मितोऽयं
सिद्धो हृद्योऽनवद्यो गुणगणगुरुतागीर्णगीर्वाणगीर्यैः ।
श्रीमद्रामानुजार्यप्रथितमहिमसद्धर्मचर्यैकधुर्यैः
श्रीकृष्णाचार्यवर्यैः प्रचुरतरयशः सञ्चिनोति स्म लोके ॥ ३ ॥

योगे यो गेययोगः शुभविमलमनोऽनूरुणा प्रेर्यमाणैः
षट्शास्त्रोपेतवेदप्रजवनतुरगैः सप्तभिर्वाह्यमाने ।
सौवर्णे ज्ञानचक्रे ध्वजवति यशसा चिद्रथे बुद्धिरश्मौ
राजन् सत्सूरिसूरो हृदयतिमिरहाऽद्योतत द्योतयंश्च ॥ ४ ॥

आरेन्दूरधराधिपादसुलभं ताम्बूलयुग्मासनं
यो विद्वज्जनमण्डलीकुमुदिनीकान्तोऽधुना यस्य च ।
वादीभेन्द्रकठोरगण्डसरणीसंस्फोटनात् सङ्किरन्
लोकं व्याप्य चिरं यशोमणिगणस्तारायतेऽयं दिवि ॥ ५ ॥

तत्पुत्रेण सुरेन्द्रनाथसुधिया साहित्यवारांनिधिं
विद्याकोविदकालिदासकवितानेत्रेण विद्वन्मुदे ।
स्वीयप्रातिभमन्दराचलमथा कौतूहलान्मथ्नता
श्लिष्टा त्रोटकमत्र कल्पलतिकाऽन्वर्था समुद्भाविता ॥ ६ ॥

उद्भाव्यैनां स काव्याम्बुधिमथनविधौ भव्यलक्ष्मीमिवान्यां
वात्सल्यात्स्वप्रणीतां प्रचुरफलवतीं हारिणीं कल्पवल्लीम् ।
वैकुण्ठेऽकुण्ठधाम्नोरथ विबुधवनीप्रोल्लसत्स्नेहभाजोः
श्रीकृष्णाचार्यताताङ्घ्रियुगकमलयोरर्पयत्यादरेण ॥ ७ ॥

सुधास्यन्दिव्याख्याविरहविधुरस्तत्रभवतः
 कवीशस्यायं सद्गुणितिदृढबन्धोऽमितगुणः ।
चिरान्मूर्च्छामाप्तो मम भुवि सदा कल्पलतिकां
 रसोल्लासां श्रित्वा प्रचुरफलयोगं हि लभताम् ॥ ८ ।

ब्रह्मक्षत्रविडन्तजन्मबहुलां भूम्ना महीं शासतो
 दाक्षिण्योदधिहोल्करान्वयसमुद्भूतस्य शीतद्युतेः ।
प्रत्यक्षीकृतनैकदेशजनतातत्तत्कलाकौशल-
 श्रीलश्रीयशवन्तरावनृपतेर्ज्योत्स्नाश्रये राजतः ॥

विद्याबन्धुचणस्य संस्कृतमहाविद्यालयाध्यक्षता-
 मारूढस्य सुरेन्द्रनाथविदुषः संवत्सरे नन्दने ।
मुन्यङ्काङ्कवसुन्धरापरिमिते मासे सहस्येऽसिते
 पक्षेऽनङ्गतिथावियं गुरुदिने याता समाप्तिं कृतिः ॥

( युग्मकम् )

॥ इति ॥

# कतिपये प्रश्नाः

(१) कीदृशं दृश्यकाव्यं विक्रमोर्वशीयं नाम? तल्लक्षणमुपन्यस्य तस्यास्मिन् काव्ये समन्वयो विधातव्यः।

(२) कीदृशं प्राकृतिकं वस्तुजातं समवलम्ब्योपनिबद्धं महाकविना विक्रमोर्वशीयम्?

(३) विक्रमोर्वशीयमिति पदं व्युत्पाद्यताम्, कीदृशश्चास्मिन् पदे समासः, तत्र च विक्रमेति पदस्य प्रवृत्तिनिमित्तं प्रदर्श्यताम्। किमस्य काव्यस्य नेतुरभिधानं विक्रम इति! भवदुत्तरमुखेन व्याख्यायतां वक्तृबोद्धव्यपुरस्सरं "अनुत्सेकः खलु विक्रमालङ्कारः" इति।

(४) रूपकाणि कतिविधानि? विक्रमोर्वशीयं तत्र त्रोटकं नाटकं वा? त्रोटकं चेत् "प्रत्यङ्कं सविदूषकं" इति त्रोटकलक्षणस्य प्रकृते काव्ये प्रथमाङ्के विदूषकादर्शने सति कथं सङ्गतिः क्रियते आयुष्मद्भिः?

(५) विष्कम्भप्रवेशकयोः को भेदः? आद्यश्च कतिविधः? सलक्षणं लेख्यम्।

(६) विक्रमोर्वशीयस्य वस्तूपगमः कविप्रतिभाया एवोत्तैतिह्यात्? आद्यश्चेत् कथमिदं काव्यं प्रकरणाद्भिद्यते। परश्चेद्भवतः पक्षः यतः उद्धृतं वस्तु तन्नामोल्लिख्यताम्। यदि तदन्तर्गतवर्णनमुपन्यस्याख्यानात् भवन्मते भवेयुः कतिचिद वैषम्यपदानि तानि प्रदर्श्यानि। एवञ्च कृतौ महाकवेः किं सिसाधयिषितं, कथं वा काव्यस्योपकृतं वैषम्येणेति स्फुटं प्रतिपाद्यताम्।

(७) रूपकस्यास्येतिवृत्तं समासेनोपन्यस्यताम्। तत्र च "केशिनोर्वशीहरणं" "चित्ररथसमागमः", "लक्ष्मीस्वयंवरस्य दिवि प्रयोगवर्णनम्", "भरतस्य शापवार्ता;" "कुमारीवनप्रवेशप्रसङ्गः", "सङ्गमनीयमणिकथानकं" "सत्यवतीप्रवेशः" "नारददर्शनं" चैतेषां प्रसङ्गानामुपादानेन नाटकीयवस्तुनः कथमुपकृतिरिति सोपपत्तिकं प्रतिपाद्यम्।

(८) का वा उदयवती? तस्यादर्शनस्य को वा प्रसङ्गस्तेन च को लाभो रूपकोपबृंहणे?

(९) अस्य रूपकस्य को नेता? रूपकाणाञ्च नेतारः कतिविधाः? तेषु कीदृशो वास्य काव्यस्य? लक्षणान्युपन्यस्य सनिदर्शनं लक्षणं सङ्गमनीयम्।

(१०) कस्यापि रूपकस्याभिधानं नायकयोर्नाम्ना कविभिराद्रियते चेत् तदा नायिकाया एव प्रथमोद्देशः यथा मालतीमाधवमालविकाग्निमित्रमल्लिकामारुतादिप्रबन्धेषु; एवं सति प्रकृते काव्ये नायिकाया उत्तरोद्देशे किं बीजमित्यालोच्य वक्तव्यं चिरञ्जीविभिः।

( ११ ) कीदृशी च नायिकात्र? साभिसारिका कृष्णा शुक्ला वा? तस्या अभि-सारवर्णनं संक्षेपतो विधेयम्।

( १२ ) विदूषकस्य कलहप्रियत्वं, वाक्पटुत्वं वा सोदाहरणोपन्यासं रूपकेऽस्मिन् निदर्शनीयम्।

( १३ ) नायकयोः रूपकेऽस्मिन् के के सहायाः, कथं च साहाय्यं विहितं तैरिति प्रदर्शनीयम्।

( १४ ) अत्र का च प्रतिनायिका, कीदृशी च सा, तल्लक्षणगुणाः रूपकान्तर्गतो-पाख्यानप्रदर्शनपूर्वकं यथायथं योज्याः।

( १५ ) प्रतिनायिकायाः नायिकापेक्षया कीदृशो व्यतिरेक इति विविच्य लिख्य-ताम्।

( १६ ) तत्रभवतः पुरूरवसः चारित्र्यं लिखत। तस्य च कालिदासीयरूपका-न्तरनायकाभ्यां साकं तुलना विधेया।

( १७ ) पुरूरवा विनयी भवन्नपि दक्षिणोऽपि शठ एव इति वचनं नायके संगच्छते न वेति सोपपत्तिकं प्रतिपाद्यताम्।

( १८ ) औशीनर्याः प्रकृतिं निदर्शनेन प्रतिपादयत। तस्याः प्रियप्रसादनव्रत-संपादनेन किमीप्सितम्। तत्रभवतः कवेर्विषयस्यास्य अवतारणे किं बीजम्? कथं च कविरुपचिकीर्षति नाटकीयं वस्तु घटनयानया इति विमृश्य विविच्यताम्।

( १९ ) धारिण्या इरावत्या वा औशीनरीतः कीदृशो विशेषः? स्वधवदाक्षिण्ये कतरा च विशिष्टा? प्रतिनायिका का च गरीयसी कलहान्तरिता चेति सयुक्तिकं समालोचनीयम्।

( २० ) भारतीयरूपकेषु विदूषकानां कीदृशं पदं? कथञ्च एभिर्वस्तूपबृंहणं भवतीति लेख्यम्।

( २१ ) केषाञ्चिन्मते विदूषकस्य वैयर्थ्य एव अभिप्रेतं, परेषां रूपकेषु जीवातुः खलु विदूषकः? इत्यभिप्रायः, अनयोः कतरदायुष्मतां मतम्? परञ्चेद-न्तरा हासोपस्थापनेनैवोपकारित्वं पात्रस्यास्य अन्यथा वा कथञ्चित् इति सविशदं प्रकटीकुरुत।

( २२ ) किञ्च दूतीलक्षणं? कीदृशी च चित्रलेखा? तादृशलक्षणसमन्वयोऽस्या-श्चरिते साधु सङ्गमनीयोऽत्रभवद्भिः।

( २३ ) "सदृशं खलु बालभावस्येति" कालिदासीयं वचनं कुमार आयुष्यपि सङ्गच्छते किमु? सोदाहरणमभिधीयताम्।

( २४ ) कोऽयं पूर्वो रागः? कतिविधश्च सः? अनुरागाच्च कथं भिद्यते? विक्र-मोर्वश्यां पूर्वरागो दृश्यते न वा। स्याच्चेत् कुतः प्रवृत्तः कुत्रानुराग-पदवीं भजते?

( २५ ) नायकयोः रूपकेऽस्मिन् पूर्वरागे कीदृशो व्यवहारः, कथञ्चामुष्मिन् विषये स्थायी भावः पुष्यत इति सविस्तरं प्रदर्शनीयम्। परञ्च अस्यैव कवेः परेषु पूर्वरागेषु कीदृशी प्रौढिरित्यत्रत्यपूर्वरागप्रसङ्गतुलनया विवेचनीयङ्किल ।

( २६ ) रूपकेऽस्मिन् कोऽङ्गी रसः कथञ्चाभिव्यज्यत इति प्रदर्शनीयम्। के च रसा अत्र गौणाः? यत्र कुत्रापि करुणो रसः त्रोटकेऽस्मिन् प्रतिभाति न वा? एवञ्चेत् कुत्र भवतीति विज्ञाप्यम् ।

( २७ ) रसोपबृंहणे त्रोटकेऽस्मिन् "न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते" इत्यस्य कविसमयस्य महाकविनाऽनुसरणं अङ्गीकृतं न वा, अत्र सम्भोगविप्रयोगयोः कीदृशी प्रचितिः, अपि विच्छित्तिं वा पुष्णाति सा? रूपकान्तरविप्रलम्भेन विहिते साम्ये क्व भवन्मते रसपरिपोषः समीचीनः सन् सहृदयहृदयं चमत्करोतीति रसगुणैरुपपादनीयम् ।

( २८ ) शापोद्घातेन कविवरेण्यस्य काव्येऽस्मिन् किं अभिप्रेतम्? नाटकीयकलायां च कवयितुः शापोन्मेषप्रकारो गुणः प्रत्युत दोष एव इति सोपपत्तिकं समालोचनलोचनैरायुष्मद्भिर्विशदीकर्तव्यम् ।

( २९ ) "काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला" इति भणितिरणितप्रस्तुतिमसहमानैः कैश्चित् विक्रमोर्वशीयं त्रोटकं तदपेक्षया रुचिरतरं सद्वरीवर्तते इति मन्यते । समालोच्य तादृशं मतं भारतीयरूपकविश्वस्मिन् विक्रमोर्वश्याः पदं निश्चिनुहि ।

( ३० ) कतमस्मिन् काले भारतं वर्षं महाकविः कालिदासोऽलञ्चकारेति नैककोविदाभिप्रायोपन्यासपुरस्सरं विषयेऽस्मिन् सिद्धान्तं स्थापयत ।

( ३१ ) महाकवेर्जीवनचर्यायाः विषये किं ज्ञायते भवद्भिः? समुपलभ्यमानेषु तदीयग्रन्थेषु तदीयजीवनस्य महाकवेश्चारित्र्यस्य वा कथमपि बिम्बानुबिम्बत्वं प्रसज्यते किमु? अन्यथा वा ऐतिह्यविरहिणि भारतेऽस्मिन् देशे महाकवेः जीवनोदन्तं कथं लभ्येतेति निर्णेतव्यम् ।

( ३२ ) महाकवेः कति ग्रन्थाः प्रसिद्धाः वर्तन्ते? तत्कृतत्वेन ख्यातेषु काव्येषु कानि भवद्भिः तदीयानीत्यङ्गीक्रियन्ते? ग्रन्थाभ्यन्तरप्रमाणैः स्वमतं विशदीकुरुत ।

( ३३ ) महाकविरयं काश्मीरिक इति केचित्, बङ्गीय इति परे, मालवीयश्चेति बहवो मन्यन्ते । सिंहले च गत्वा महान्तं कालमनैषीत् इति केचित्, धाराधीशस्य च सखा इत्यपरे, परे च मन्यन्ते यत् विक्रमादित्यसभाया रत्नभूत् कविः कालिदासः । एतादृशि विचिकित्सापदे कीदृशो भवन्मते सिद्धान्त इति सोपपत्तिकं निगन्तव्यम् ।

( ३४ ) "उपमा कालिदासस्येति" प्रथितं आभाणकं रूपकस्यास्य पर्यालोचनया साधयितुं शक्यतेऽत्रभवता किमु?

(३५) "यथाहि कीदृशोऽपि पवनः वेणुं प्रविष्टः मधुरमेव क्वणति एवमेव कीदृशमपि वस्तु महाकवेः प्रतिभायामनुप्रविष्टं रसायत एव" इति पाश्चात्यविपश्चितां अभिप्रायः। महाकवेः काव्याध्ययनबुभुक्षुभिः सम्यगालोचनीयमिदं मतम्।

(३६) निसर्गवर्णने पटीयसी खलु कवेः परिपाटीति विषयमवलम्ब्य विरच्यतां नातिविस्तरो निबन्धः।

(३७) तदानीन्तनां भारतीयां सामाजिकीं व्यवस्थां मुकुरीकरोति कालिदासीयः काव्यकदम्बो न वेति सप्रमाणं लिखत?

(३८) मानवीयाभ्यन्तरभावोद्बोधने अनुपमा किल कवेर्लेखिनीति बिरुदमिदमवितथं इति प्रमाणीकुरुत।

(३९) रूपकेऽस्मिन् वस्तुकालयोर्वरीवर्तते विसंवादः इत्यालोचकानां प्रायोऽभिप्रायः, मतमिदमभिप्रेतश्चेत् कुत्र कथमिदमुपपद्यत इति ब्रूथ नो चेत् विसंवादस्थलानि उपन्यस्य भवतो वैमत्यबीजं तत्र तत्र संस्थापयत।

(४०) अपि नाम महाकविः स्वीयरूपकेषु कालवस्तुस्थानरसानां संवादाय सुतरां प्रयतते? अपि एतादृशसंवादसंसाधनं सुरभारतीकवीनां सम्प्रदायोऽस्ति न वेति तौलनिकधिया समस्तमिदं वस्तु विविच्यताम्।

(४१) त्रोटकेऽस्मिन् समेषामेव सन्धीनां उपन्यासोऽस्ति न वा? एवञ्चेत् तत्तत्स्थाननिर्देशपुरस्सरं सन्धयः तदवस्थाश्च स्थाने उपस्थापयितव्याः।

(४२) कीदृश्या वृत्त्या उपनिबद्धमिदं त्रोटकं तल्लक्षणं पुरस्कृत्य तद्गुणानुपस्थाप्य तल्लक्षणसमन्वयो विधातव्यः।

(४३) का च रूपकेऽस्मिन् रीतिः? कीदृशी चास्य सङ्घटनेति सोदाहरणं प्रदर्शयत।

(४४) काव्येऽस्मिन् कीदृशः पाकः सहृदयानां रसचर्वणापदवीमधिरोहतीति साधु वर्णनीयः।

(४५) के च गुणाः प्राधान्येन काव्यस्यास्य परिपुष्णन्ति अभिख्याम्? ते च पुना रीतिवृत्तिसंघटना अनुसरन्ति न वा, विमृश्य लिख्यताम्।

(४६) विक्रमोर्वशीये खलु सन्ति केचनांशा अकालिदासीयाः परैश्चान्तरा योजिताः इति मन्वद्भिः कैश्चिद् संख्यावद्भिः भवतां अस्त्यैकमत्यं न वा? यदि भवेत्तादृशानि स्थलानि सकारणं निर्देष्टव्यानि।

(४७) रूपकस्यास्य चतुर्थोऽङ्कः संगीतरागगतिविशेषमहिम्ना नायकोन्मादगरिम्णा च शाकुन्तलीयतुरीयाङ्कापेक्षया वरीयान् वरीवर्तत इति प्रेक्षावतां धीः, विषयेऽस्मिन् भवतामभिप्रायः समालोच्य प्रकाशनीयः।

(४८) महाकविना निर्मितेषु रूपकेषु पूर्वापरधिया विक्रमोर्वश्याः कालो निर्धारयितव्यः।

(४९) महाकवेर्ज्योतिःशास्त्रपारदृश्वत्वं सङ्गीतकलाकुशलित्वं तन्त्रान्तरापरतन्त्रत्वं तदीयकाव्योदाहरणपूर्वकं साधयत।

(५०) वक्तृबोद्धव्यावसरनिर्देशपुरस्सरं छन्दोऽलंकारदोषविवेकपूर्वकं अधस्तनानामंशानां मल्लिनाथरीत्या सुष्ठु व्याख्या विधेया—

या तपोविशेषशङ्कितस्य............बन्दिग्राहं गृहीता० (पृ० ११)

अस्यास्सर्गविधौ० (पृ० २०)

ननु वज्रिण एव० (पृ० ३२)

एषा मनो मे प्रसभं० (पृ० ३७)

आ लोकान्तात्प्रतिहततमो वृत्तिरासां प्रजानाम्० (पृ० ४४)

निर्मिश्चन् माधवीं०......(पृ० ५२)

अग्रे स्त्री नखपाटलं कुरबकं श्यामं द्वयोर्भागयोः० (पृ० ५५)

सखि प्रेक्षस्व प्रेक्षस्व.........भवनमुपगते स्वः० (पृ० ६३)

नितान्तकठिनां रुजं मम न वेद सा मानसीं (पृ० ६९)

सामिअ संभावितआ......... (पृ० ७३)

वासार्थं हर संभृतं० (पृ० ८९)

सर्वः कल्ये वयसि यतते ० (पृ० १०४)

उदयगूढशशाङ्कमरीचिभिः० (पृ० ११०)

इदं तस्या रथक्षोभात्० (पृ० १२३)

एषा देवतामिथुनं.........वर्तितव्यम् (पृ० १३२)

गूढं नूपुरशब्दमात्रमपि मे० (पृ० १३६)

सहअरिदुक्खालिद्धअं० (पृ० १४९)

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः० (पृ० १५७)

तिष्ठेत् कोपवशात्प्रभावपिहिता० (पृ० १६३)

हृतोष्ठरागैः० (पृ० १७१)

~~मृदुपवनविभिन्नो~~० (पृ० १७५)

मधुकर मदिराक्ष्या० (पृ० १८६)

मामाहुः पृथ्वीभृतां० (पृ० १९४)

अपि वनान्तरमल्पभुजान्तरा० (पृ० १९७)

तरङ्गभ्रूभङ्गा० (पृ० २००)

पुव्वद्दिसा पवणाहअ कल्लोलुग्गअ बाहओ० (पृ० २०२)

त्वयि निबद्धरतेः० (पृ० २०७)

प्रभालेपी नाऽयं हरिहतगजस्यामिषलवः० (पृ० २१२)

तन्वी मेघजलार्द्र० (२१६)

बाष्पायते निपतिता पदद्दष्टिरस्मिन्० (पृ० २३५)

नहि सुलभवियोगा० (पृ० २४९)

शमयति गजान्० ( पृ० २५० )
अमरमुनिरिवात्रिः ( पृ० २५६ )
तव पितरि पुरस्तान्० ( पृ० २५७ )

( ५१ ) अधोनिर्दिष्टानां पदानां नातिदीर्घा वैयाकरणी वस्तुपरिचायिका टिप्पणी कार्या—

नान्दी, प्रस्तावना, मारिषः, सूत्रधारः, भावः, कुररी, नरसखः, केशी, मेनका, सोमदत्तः, दिष्ट्या वर्धसे, हेमकूटः, कल्पः, पुरा नारायणेनेयं अतिसृष्टा मरुत्वते, चित्ररथः, जयोदाहरणं, देवच्छन्दकः, ब्रह्मबन्धुः, निपुणिका, अतिमुक्ता, अहल्या, शिखाबन्धिनी, प्रतिष्ठानं, तिरस्करिणी, पञ्चबाणः, अविदाविद भोः, स्वस्तिवाचनिकं, मदिरेक्षणा, निक्षेपः, भरतः, लक्ष्मीस्वयंवरं, भट्टिनी, कौलीनं, भूमिका, शुद्धान्तः, वलभी, मणिहर्म्यं, प्रियप्रसादनं, खण्डमोदकः, अभिसारिका, शिखरिणी, रोहिणीयोगः, आर्यपुत्रः. वज्रलेपः, पुरोभागिनी, प्रावेशिकी, आक्षिप्तिका, द्विपदिका, गन्धमादनं, उदयवती, जम्भलिका, खण्डधारा, चर्चरी, प्रावृषेण्यः, भिन्नकः, नवशाद्वलं, खुरकः, वलन्तिका, ककुभः, पत्तलिका, कुटिलिका, द्विचतुरस्रकः, स्थानकं, सुरभिकन्दरः, संगममणिः, अकलुषः, महासेनः, वेधकः, कुम्भिलकः, आयुः, ऐलसूनुः, सत्यवती, जातकर्मादिविधानं, च्यवनः, जयन्तः, पौलोमी, अब्रह्मण्यं, दम्यः, गन्धद्विपः, अत्रिः, पाकशासनः, भरतवाक्यं, प्रवेशकः ।

---

॥ श्रीः ॥

# विक्रमोर्वशीयस्थश्लोकार्धप्रतीकसूची ।